# समर्पणम् ।

योभून्नरसेव्यः श्रीमत्साहिबदयालुरितिनाम्ना ॥ ख्यातो राजोपपदः प्रभुप्रभूतप्रभांसभाप्रभृतः ॥ १ ॥
वंशीधरोऽस्य सनयस्तनयः प्रसिद्धो वंशीधरोऽजनि यथा वसुदेवतोऽत्र ॥
अस्यात्मजो गुणिगणोडुविधुर्म्महाचन्द्राख्यः प्रजेशपरिसेवितपादपीठः ॥ २ ॥
संहिताया भृगोर्भागस्तेनं योगावली ह्यसौ ॥ लोकोपकृतये दत्ता मुद्रणार्थं मुंमपुरि ॥ ३ ॥
मुद्रागारे वेङ्कटेशाभिधे मुद्रापिताऽधुना ॥ श्रेष्ठिश्रीखेमराजेन ग्रन्थोद्धारपरेण वै ॥ ४ ॥
मार्गणऽस्या व्यतीताश्च बह्वब्दा रूप्यकव्ययः ॥ जातः कष्टेन महता लब्धा ज्जोतिःप्रदीपिका ॥ ५ ॥

१ प्रभु जो लाट गवरनर्जनरल उसने, बड़ी जो प्रभायुक्त सभा ( कौंसिल ) उसमें जो मेंबर किया गया ॥ (Member of the Legislative Council of India)

# अथ भृगुसंहितायोगावल्यनुक्रमणिका ।

इति श्री० अवर्णाद्यष्टोत्तरशतयोगफलकथनं नाम तृतीयं प्रकरणम् ।

इति श्री० अवर्णाद्यष्टोत्तरशतयोगफलकथनं नाम तृतीयं प्रकरणम् ।

१ चोग्रदण्ड—इति चकाराद्यभिप्रायेणात्रज्ञेयम् ।

इति श्री० टवर्गाद्यष्टोत्तरशतयोमफलकथनं नाम षष्ठं प्रकरणम् ।

भू.सं. ५

१ बकारादि शब्दानां पवर्गानुक्रमे पाठो ग्रन्थ योग क्रियासानुरोधेन । सच बवयोर भेदा ज्ञेयः ।

॥ इति श्रीभृगुसंहितायोगावल्यनुक्रमणिका समाप्ता ॥

श्रीगणेशायनमः॥ प्रणम्यकेशवंशंभुंब्रह्माणंगणनायकम् ॥ पूर्वोक्तिमनसास्थायक्रियतेयोगसागरः ॥ १ ॥ त्रिंशद्वर्षसहस्राणिसत्ये
युग ॥ त्रेतायुगेगतेवर्षेयोगसागरसंभवः ॥ २ ॥ भृगुरुवाच ॥ युगेवेदाकृतिः संख्या जन्मतः प्रश्नतोपिवा ॥ ग्रहयोगप्रमाणेनज्ञायते
कर्मकृत ॥३॥ अथमाध्यायमध्येतुपंचाशद्योगकाःक्रमात् ॥ तेषुस्वेटप्रमाणेनज्ञातव्यःपुण्यसंग्रहः ॥ ४ ॥ अथयोगनामानि ॥ ॥ मनो
कोलेभवः सौम्योयातुधान्यश्चभीष्मकः ॥ जीमूतोविजयाऽऽनन्दौ पिंगलोविफलःसमः॥५॥महोदधिःपिशाचश्चदामिनीचक्रदामिनी ॥
शम्भवःश्रीसुखःक्रूरोगजश्चाऽद्भुतसागरः॥६॥ऊर्ध्वोद्भूतोनिपातश्चविलासःशक्रमाद्दिषौ ॥ देवेंद्रराजशूलाश्चभास्करास्तश्चविश्रुतः ॥ ७॥
चंद्रास्तोदारुणश्चंद्रश्चतुःसागरसागरौ ॥ भ्रातृहारिपुघातश्चच्छत्रोवज्रोजगत्पतिः ॥८॥ वैनाशिकःकलापश्चमानसोऽनुभवःशुभः ॥ वैजितो
दुःखशून्यश्चनंदजीवावितिक्रमात् ॥९॥ यस्याऽऽदौयादृशंकर्मप्रहतिश्चैवयादृशी ॥ तस्यतादृग्ग्रहैरेवभद्राऽभद्रफलस्थितिः ॥ १० ॥ सौरि
स्तुंगेथतुर्येभवतिकुजयुतोमेषसंस्थश्चभानुः शुक्रोजीवोबुधोवाभवतियदियुतोराजमान्योधनाढ्यः ॥ स्थूलोदाताधनाढ्योवरकनकयुतो
भूरिरत्नादिपूर्णोभूपालेर्यातिसायंबहुसुतभृतकैर्दीर्घमायुर्मनोज्ञः ॥ ११ ॥ हरिगेहकृतंपूर्वंतेनैतद्योगसंभवः ॥ येनाऽस्मिन्सुखमाप्नोति
धनाढ्योराजपूजितः ॥ १२ ॥ पुत्रपौत्रादियुक्तश्चजायतेनात्रसंशयः ॥ वृद्धकालेमहादुःखंपुत्रपौत्रादितोध्रुवम् ॥ १३ ॥ नकृतंच
हरेर्गेहंपुरातेनापिदुःखितः ॥ ॥ शुक्र उवाच ॥ ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ १४ ॥ भृगुरुवाच ॥ ॥ शनेः सप्ताक्षरं
मन्त्रंभौममन्त्रंषडक्षरम् ॥ प्रत्येकंद्विसहस्रंतुजस्वादेयंधनंततः ॥ १५ ॥ रजतंसप्तपट्टंचहाटकंचतथैवच ॥ त्रिंशत्पलंताम्रपात्रंघृतेन
परिपूरितम् ॥ वृषभंवत्सगोभूमौप्रदद्याद्ब्राह्मणायच ॥ १६ ॥ देशंस्वंभूमिदानंचकारयेच्छ्रद्धयान्वितः ॥ एतद्दानोपचारेणनीरोगीचसुखी

भवेत्॥ १७॥सप्तजन्मविनादानैरेतद्योगाद्दरिद्रता ॥ कविनाचकृतः प्रश्नोभृगुणापरिभाषितः ॥१८॥ इतिमनोज्ञयोगफलम्॥ १॥क्रूरक्षेत्रेय
दाजीवःसुतेशःक्रूरसंमतः ॥ कर्मेशोनाविलग्नेशःक्रूरःक्रूरगृहेयदा ॥१९॥ भौमार्किवीक्षितोऽधीशस्तदायोगोहिवैभवः ॥ पूर्वतीर्थेकृतासेवा
ऋषीणांचपुनःपुनः ॥ २० ॥ तेनसौख्यं भवेत्तस्यधनाढ्योराजपूजितः ॥ गौरश्चचपलोवक्तागुणीचमृदुवाक्सुधीः॥२१॥ बहुस्थानेषुदा
ताच,मित्रशत्रुसमोभवेत ॥ संतानोनभवेत्तस्य,जातोपिचनजीवति ॥२२॥सतीकलंकमाऽऽदाय,ब्रह्मशापनिराहतः ॥ शुक्रउवाच॥किंजाप्यं
कस्यपूजाचा,किंदानंचकिमौषधम् ॥२३॥ भृगुरुवाच॥ रीतिपात्रंपलान्पंचतन्मध्येतत्रमंडले ॥ सतीरूपंचकर्तव्यं,तदग्रेकारयेज्जपम् ॥२४॥
अयुतंपद्मनाभस्यमंत्रंबीजाक्षरंजपेत् ॥ पुरोपारितनंकार्यंपूर्वोक्तविधिनासह ॥ २५ ॥ ततोदानंप्रकर्त्तव्यं,नवषट्कंचहाटकम् ॥ रजतंभानुषट्कं
च,दिव्यंवस्त्रंवरस्त्रियै॥२६॥एतदुक्तंमयापुत्र,जपांतेतुविनिर्दिशेत ॥ ऋत्वंतेस्त्रीषुदातव्य,मर्घ्यंसूर्यायदापयेत् ॥२७॥ सवत्सानांगवांपञ्चऋतौ
स्त्रीभ्यःप्रदापयेत् ॥ भौमेनक्तंचकर्त्तव्यंतदेवकथ्यतेध्रुवम् ॥ २८ ॥ भौमयंत्रंतुपार्श्वेचधारयेद्विधिनासह ॥ एतद्दानोपचारेणप्राप्यतेसंत
तिर्ध्रुवम् ॥२९॥ मृतवत्सत्वदोषघ्नंचिरंजीवीसुबालकः ॥ तस्माद्दानंप्रकर्तव्यंपूजायंत्रंचतत्त्वतः ॥३०॥ श्रुत्वात्वनुसवंकार्यंविलंबंनैवकार
येत ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः॥३१॥इतिविभवयोगफलम्॥२॥लग्नेषष्ठाष्टमेचंद्रःक्रूरयुक्तोथवीक्षितः ॥ क्रूरक्षेत्रेचजीवश्चसौ
म्याःकेंद्रत्रिकोणगाः॥३२॥सौम्ययोगेकृतःपूर्वंमातुलान्याश्चसंगमः ॥ तेनपापानुसारेणशुक्लकुष्ठीप्रजायते ॥ ३३ ॥ नक्तांधोदीर्घरोगीवा
शुक्रहीनश्चजायते ॥ अल्पदाताभवेत्क्रोधीपुत्रस्त्रीमित्रदुःखदः ॥ ३४ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरु

१ दशेवाः ।

वाच ॥ कांस्यपात्रेपलारुद्राःपंचकोणंतुमंडलम् ॥३५॥ स्त्रीरूपंचप्रकर्त्तव्यंतन्मध्येचंदनाक्षतान् ॥ तदग्रेचजपंकुर्यात्तुद्रमंत्रेनवाक्षरम् ३६॥ पंचसाहस्रमानेनपूर्वोक्तविधिनासह ॥ हाटकंचततोप्यष्टषष्ठतारंचशोभनम् ॥ ३७ ॥ माषात्कंचगुडंतैलंगाश्ववृषभसंयुताः ॥ एतद्दानंप्रकर्त्तव्यंजपःकार्योनसंशयः ॥ ३८ ॥ ततस्तुश्रीफलंभव्यंमायामंत्रेणमंत्रयेत् ॥ ऋतौत्रिवारंदातव्यंभोजनंपायसंघृतम् ॥ ३९ ॥ एतद्दानोपचारेणपुत्रोभवतिनान्यथा ॥ चिरंजीवीभवेत्सूनुर्दानकर्मप्रसादतः ॥ ४० ॥ शुक्रउवाच ॥ केनपुण्येनहेतोर्वारोगहीनः प्रजायते ॥ ॥ भृगुरुवाच ॥ पूर्वोक्तपुण्यंकृत्वातुकृष्णकंबलसंयुतम ॥ ४१ ॥ चत्वारिंशत्पलंलोहपात्रंतैलेनसंभृतम् ॥ महाएकार्द्धषट्कंचसद्विप्रायतु दापयेत् ॥ ४२ ॥ मृत्युंजयंमहामंत्रंविधिनासहलेखयेत् ॥ धारयित्वातुशीर्षेवैकारयेद्विजपूजनम् ॥ ४३ ॥ सोमवारेकभक्तंचकर्त्तव्यंच विशेषतः ॥ तत्तद्दानोपचारेणरोगहीनःप्रजायते ॥ ४४ ॥ भौमेनक्तंचकर्त्तव्यंपुत्रार्थेविधिसंयुतम् ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ४५ ॥ ॥ इतिसौम्ययोगफलम् ॥ ॥ ३ ॥ धर्मेक्रूरारिपुक्षेत्रेकर्मेपापाःपरेथवा ॥ छिद्रेवाभवनेपापाःक्रूरैर्युतंसुतंगृहम् ॥ ४६॥ यातुधान्ये सदादोषःपूर्वंगोत्रवधःकृतः ॥ तेनपापानुसारेणसुतहीनःप्रजायते ॥ ४७ ॥ अथवाजायतेकुष्ठीराजरोगीतथाभवेत् ॥ कृपणोदुष्टवित्तश्चकृतघ्नोनिर्गुणःखलः ॥ ४८ ॥ गर्भोत्पत्तौभवेत्कष्टंस्त्रियोऽपिपुरुषस्यच ॥ गर्भस्रावोभवेत्तस्यजातोवापिनजीवति ॥ ४९ ॥ पापात्मादुष्टकर्माचएतच्चिह्नयुतोनरः ॥ ब्रह्महत्यादिपापानिचकारासौचगोत्रहा ॥ ५० ॥ सुरामांसाशनोद्वेषीरौरवंनरकंययौ ॥ क्षेत्रेसुतानांगोदानंकृतंतेनकुलोद्भव ॥ ५१ ॥ आदिमध्यावसानेतुसौख्यंसमदचित्तता ॥ ॥ शुक्रउवाच ॥ ॥ किंजाप्यंकस्यपूजा चकिंदानंचकिमौषधम् ॥ ५२ ॥ ॥ भृगुरुवाच ॥ ॥ रीतिपात्रंतथाकांस्यंचतुर्दशपलैःकृतम् ॥ ५३ ॥ गोत्ररूपंचतन्मध्ये

चंदनेनचकारयेत् ॥ तदग्रेकारयेञ्चाप्यमघोरंबीजसंयुतम् ॥ ५४ ॥ सहस्रंकारयेत्पश्चात्सुपुण्यदिवसेशुभे ॥ हाटकंदशपट्टचरजतं
द्विगुणंतथा ॥ ५५ ॥ गांवाश्वंवापिसंयत्नाद्ब्राह्मणेभ्यःप्रदापयेत् ॥ पूर्णपात्रंघृतैःपूर्णंब्राह्मणेभ्यःप्रदापयेत ॥ ५६ ॥ ॥ शुक्रउवाच ॥ ॥
एवंशक्तिर्यदानास्तितदार्किंक्रियतेप्रभो ॥ ॥ भृगुरुवाच ॥ तदर्द्धंपुण्यतःकार्यंदानंदद्यात्स्वशक्तितः ॥ ५७ ॥ गर्भपातेश्रुतौवापि
पुण्यंकुर्याच्चतंत्रतः ॥ तदापुत्रधनंसम्यक्प्राप्यतेनात्रसंशयः ॥ ५८ ॥ दानांतेश्रीफलंभव्यंमायामंत्रेणमंत्रितम् ॥ अर्चयेद्धौमवारेतुकार्यंन
क्तंहिभोजनम् ॥ ५९ ॥ श्रुत्वानकुरुतेपुण्यंतदंतेदुःखमाप्नुयात् ॥ राजरोगोमहाचिंतापुत्रैरपिधनैरपि ॥ ६० ॥ कविनाचकृतःप्रश्नो
भृगुणापरिभाषितः ॥ ६१ ॥ इतियातुधान्ययोगफलम् ॥ ४ ॥ तुर्येशोवाष्टलग्नेशःक्रूरोवाक्रूरसंयुतः ॥ सूर्येषष्ठाष्टमेऽरिष्टेक्रूरक्षेत्रेचपाप
गाः ॥ ६२ ॥ केंद्रेत्रिकोणेउच्चेवास्वगृहस्थोगुरुर्यदा ॥ भीष्मकेसुखसंपत्तिर्जायतेनात्रसंशयः ॥ ६३ ॥ पूर्वंतीर्थेकृतासेवाऋषीणांचपुनः
पुनः ॥ देवार्चनंद्विजेभक्तिःकृतातेनात्रजन्मनि ॥ ६४ ॥ सुखीसुकर्मकृच्चैवधर्मिष्ठोबहुपुत्रवान् ॥ बहुस्त्रीभिःसमंभोगीबुद्धिमांश्चविचक्षणः
॥ ६५ ॥ मनःस्वस्थोभवेद्दाताधनाढ्योधनिनांपतिः ॥ त्रिंशद्वर्षेगतेनूनंमहासौख्यंप्रजायते ॥ ६६ ॥ राजावाराजमान्योवाकुबेरेणस
मोभवेत् ॥ चत्वारिंशद्गतेवर्षेततःपीडाप्रजायते ॥ ६७ ॥ रक्तवातोद्भवापीडाराजयोगःप्रवर्तते ॥ कासश्वासादिरोगाणांजायतेचमुहुर्मुहुः
॥ ६८ ॥ क्षणेकष्टंक्षणेसौख्यंक्षीणांगोजायतेनरः ॥ ॥ शुक्रउवाच ॥ ॥ केनकर्मविपाकेनएषरोगीप्रजायते ॥ ६९ ॥
[illegible]रुवाच ॥ ॥ पूर्वंगोत्रवधंकृत्वासाध्वीचस्त्रीकलंकिता ॥ इहजन्मनितैःपापैराजरोगीभवेन्नरः ॥ ७० ॥ ॥ शुक्रउवाच ॥ ॥ किंजा
[illegible]स्यपूजाचकिंदानंचकिमौषधम् ॥ ॥ भृगुरुवाच ॥ ॥ यंत्रंश्रीपद्मनाभस्यभूर्जपत्रेचलेखयेत् ॥ ७१ ॥ [illegible]

पूजयेत् ॥ ऊर्णापट्टं हरिद्रार्णंतंडुलैःसंपुटीकृतम् ॥ ७२ ॥ तस्योपरिसमासीनमयुतंकारयेज्जपम् ॥ पद्मनाभस्यबीजस्यकारयेद्द्विविस्तृतम् ॥ ७३ ॥ पट्टवस्त्रंपरीधायपूर्वोक्तविधिनासह ॥ ततोदानंप्रकर्त्तव्यंपदंषोडशहाटकम् ॥ ७४ ॥ रजतंद्विगुणं...शतम् ॥ ताम्रपात्राण्येककर्षप्रमितानिघृतेनच ॥ पूरयित्वाचचत्वारिब्राह्मणेभ्यःप्रदापयेत् ॥ ७५ ॥ ततःप्रदद्यात्पूपान्नंगोधूमतण्डुलैर्युतम् ॥ माषान्नसंयुतंतातकर्षविंशतिर्विंशति ॥ ७६ ॥ एतद्दानंतुकृत्वाचदक्षिणांचप्रदापयेत् ॥ एवंचविधिवद्दानंकारयेच्छ्रद्धयान्वितः ॥ ७७ ॥ नश्यंतिव्याधयः सर्वेपूर्वपापंचनश्यति ॥ पद्मनाभस्ययोमंत्रंबाहौशिरसिधारयेत् ॥ ७८ ॥ एतद्दानेषुचीर्णेषुपीडामुक्तोनरोभवेत् ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ७९ ॥ ॥ इतिभीष्मकयोगफलम् ॥ ५ ॥ व्ययेवाचाष्टमेक्रूराःक्षेत्रेशोद्वादशेयदा ॥ कर्मे सौम्याधनेक्रूराजीमूतेचसुखंभवेत् ॥ ८० ॥ पूर्वगंगातटेचैवरुद्रसेवाकृताबहु ॥ इहजन्मनितेनाऽसौपित्ताधिक्योभवेन्नरः ॥ ८१ ॥ दाताचैवच भोक्ताचराजमान्योगुणाधिकः ॥ परोपकारीधर्मात्माकीर्तिमान्धनवांस्तथा ॥ ८२ ॥ षोडशाब्देतथाविंशेसौख्यमात्मबलैर्भवेत् ॥ गजवा जिधनैर्युक्तोराजावाराजमंत्रिकः ॥ ८३ ॥ रुद्रसेवानुसारेणएवंभूतोभवेन्नरः ॥ तपस्वीर्निंदितः पूर्वंतस्माद्धीनंफलंभवेत् ॥ ८४ ॥ चिंताच जायतेतस्यसौख्यंचाल्पधनात्मजाः ॥ सुमुखोऽपिह्युदासीनस्त्वकस्माज्जायतेध्रुवम् ॥ ८५ ॥ षड्विंशद्वाऽपिचत्वारिंशद्वर्षेदीर्घवेदना ॥ उदरेवाकरेपादेजायतेनात्रसंशयः ॥ ८६ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ रीतिंवाताम्र पात्रंवाचतुर्दशपलोद्भवम् ॥ ८७ ॥ कृत्वातस्मिन्प्रकर्तव्यंचन्दनान्नवमंडलम् ॥ तपस्विरूपंतन्मध्येकृत्वापूजांचकारयेत् ॥ ८८ ॥ ऊर्णा पट्टंपवर्दितपुट्द्वादशकारयेत् ॥ तस्योपरिसमासीनोरुद्रमंत्रंनवत्रिकम् ॥ ८९ ॥ द्विसहस्रंचरेज्जप्यंततःपुण्यंसमाचरेत् ॥ भद्रान्नहाटकाःसप्त

भृगु-
२

तिलान्नस्यापिसप्तच ॥ ९० ॥ मुद्गगोधूममाषान्नतंडुलंतैलसंयुतम् ॥ प्रस्थद्वयंप्रदातव्यंमुद्रामष्टोतरंशतम् ॥ ९१ ॥ एतद्दानानुसारेण चिंताकष्टंविनश्यति ॥ दानाभावेमहाकष्टंपुत्रैरपिधनैरपि ॥ ९२ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ९३ ॥ इतिजीमूतयोग फलम् ॥ ६ ॥ संतानेशोरिपुक्षेत्रेषष्ठाष्टद्वादशेऽपरे ॥ सुतेशःक्रूरसंयुक्तोऽथवाक्रूरेणवीक्षितः ॥ ९४ ॥ पूर्वसगर्भाहारिणीमारितामृगसंयुता ॥ एतद्विजययोगेनरक्षिताहरिणीसुता ॥ ९५ ॥ नभवंतिसुतास्तस्यजाताजीवंतिनैवच ॥ कन्याद्वयंत्रयंवापिजायतेनात्रसंशयः ॥ ९६ ॥ आदौपुत्रीततःपुत्रस्ततःपुत्रीप्रजायते ॥ शेषेगर्भेभवेत्तस्यागर्भस्रावोनसंशयः ॥ ९७ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौ षधम् ॥ भृगुरुवाच ॥ रीतिंवाताम्रपात्रंचपलंचैवचतुर्दशम् ॥ ९८ ॥ तन्मध्येचंदनैःकार्यंपद्ममष्टदलंतथा ॥ तदंतःकारयेज्जाप्यंपद्मनाभस्यबीज कम् ॥ ९९ ॥ द्वेसहस्रेकृतायामोभक्तिश्रद्धासमन्वितः ॥ ततोदानंचकर्त्तव्यंषड्भाषोडशहाटकम् ॥ १०० ॥ श्वेतंवाप्यथवानीलंभव्याश्वंचमनोह रम् ॥ मासादिवर्षपर्यंतमश्वस्याशनसंयुतम् ॥ १०१ ॥ सर्वोपस्करसंयुक्तंरूप्यंषट्कंचदापयेत् ॥ ऊर्णापट्टमथान्नंचतैलंगोधूमतंडुलम् ॥ १०२ ॥ प्रस्थद्वयंप्रदातव्यंताम्रपात्रेघृतैर्भृतम् ॥ ततोगोसारकंयंत्रंकारयेद्विधिसंयुतम् ॥ १०३ ॥ स्त्रीकंठेधारयेन्नित्यंभक्त्यातुरविवासरे ॥ एतद्दा नोपचारेणचिरंतिष्ठतिसंततिः ॥ १०४ ॥ गर्भकालेतुकर्तव्यंदानंविप्राययत्नतः ॥ दानाभावेभवेच्चिंतापुत्रैरपिधनैरपि ॥ १०५ ॥ दानतः प्राप्यतेपुत्रोबुद्धिमांश्चसमृद्धिमान् ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ १०६ ॥ इतिविजययोगफलम् ॥ ७ ॥ कर्मेशःक्रूरसंयुक्तः क्रूरक्षेत्रेऽथवापरे ॥ तृतीयेष्टेरिपौवापिआनन्दोयोगउच्यते ॥ १०७ ॥ पूर्वंक्षेत्रशतंकृत्वागोशतंचसमर्पितम् ॥ तेनपुण्यप्रभावेणमहाराजो भविष्यति ॥ १०८ ॥ धीमानथोविशालाक्षोबहुधान्ययुतोभवेत् ॥ गौरश्चचपलोवक्तादातादर्शीछलोत्कटः ॥ १०९ ॥ अकस्माच्चभवे

संहि.

त्क्रोधीपुनःशीघ्रोपशांतिमाप्॥पंचषष्ठाब्दतः सौख्यंराजमान्योरणेजयः॥ ११०॥ धनंकीर्त्तिर्भवेत्तस्यबहुभृत्यादिसंवृतः॥अष्टादशेतुविंशे
वामहाकीर्त्तिर्धनंतथा ॥ १११ ॥ दिनेदिनेमहासौख्यंवर्द्धतेनात्रसंशयः ॥ पूर्वंसतीकलंकाद्वाबालहत्याप्रभावतः ॥ ११२ ॥ राज
रोगोभवेत्तस्यदुःखंसंतानतोध्रुवम् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ ११३ ॥ भृगुरुवाच ॥ नवारमंडल
स्याग्रेपद्मनाभत्रिबीजकम् ॥ द्विसहस्रंजपेज्जाप्यंततःपुण्यंसमाचरेत् ॥ ११४ ॥ सप्तविंशतितारंचषड्विंशतिचहाटकम् ॥ ताम्रपात्रं
पलत्रिंशद्घृतेनपरिपूरितम् ॥ ११५ ॥ पंचाशत्करवस्त्रंचगांचसवत्ससंयुताम् ॥ सप्तान्नंप्रस्थप्रस्थंचविप्रेदानंसमाचरेत् ॥ ११६ ॥
त्रिपुरारेस्ततोमन्त्रैर्गोघृतंमंत्रयेत्सुधीः ॥ ऋत्वंतेत्रिदिनंदद्यादाचार्यायसुवर्णकम् ॥ ११७ ॥ एतद्दानोपचारेणसंतानंप्राप्यतेध्रुवम् ॥
सुंदरंत्रिपुरायंत्रंकांस्यपात्रेचलेखयेत् ॥ ११८ ॥ तन्मंत्रंक्षालयेद्वीजैर्जपंकृत्वाविशेषतः ॥ एतद्दानोपचारेणरोगहीनोभवेत्पुमान् ॥ ११९ ॥
अचिरेणैवकालेनपुत्रलाभादितःसुखम् ॥ दानाभावेमहाचिंतापुत्रैरपिधनैरपि ॥ १२० ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ १२१ ॥
इत्यानंदयोगफलम् ॥ ८ ॥ सौम्यालग्नेधनेकर्मेक्रूराद्यूनेसुतेयदा ॥ नीचोच्चेवाधनेलग्नेयोगोयंपिंगलोभवेत् ॥ १२२ ॥ तपस्वी
निंदितःपूर्वंसाध्वीस्त्रीचकलंकिता ॥ पात्रेदानंतुकृत्वावैपश्चात्तापःकृतःपुरा ॥ १२३ ॥ प्राप्यतेचधनंधान्यंक्षणेवृद्धिःक्षणेक्षयः ॥ बा
ल्येन्लभतेदुःखंपित्ताधिक्यंचजायते ॥ १२४ ॥ तस्यदुःखंसुतात्स्त्रीतःप्रभवेन्नसुखंक्वचित् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजा
...र्दानंचकिमौषधम् ॥ १२५ ॥ भृगुरुवाच ॥ शनेस्त्रीणिशिखेःपंचसहस्रंजपमाचरेत् ॥ रीतिपात्रंपलंत्रिंशच्चंदनैर्नवमंडलम् ॥ १२६ ॥
ऊर्णापट्टंहरिद्वर्णंचतुर्विंशत्पुटीकृतम् ॥ तस्योपरिसमासीनःपूर्वोक्तंजपमाचरेत् ॥ १२७ ॥ जपांतेचकृतंपुण्यंषड्द्वादशहाटकम् ॥

रजतंद्विगुणंदेयंशय्याभव्याविचित्रिता ॥ १२८ ॥ सप्तान्नंप्रस्थप्रस्थंचवस्त्रंहस्तांश्चतुर्दश ॥ पंचरत्नसमायुक्तंदद्याच्चैवनसंशयः ॥
॥ १२९ ॥ एतद्दानंप्रकर्त्तव्यंयदर्हंःश्रूयतेध्रुवम् ॥ एतद्दानप्रभावेणसर्वसिद्धिर्नसंशयः ॥ १३० ॥ त्रिजन्मनिमहादुःखंदाना
भावेपुनःपुनः ॥ जपाभावेमहत्कष्टंप्राणैरपिधनैरपि ॥ १३१ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ १३२ ॥ इतिपिंगलयो
गफलम् ॥ ९ ॥ सुतपेशत्रुक्षेत्रेचदुष्टेक्रूरेऽथवापिच ॥ शत्रुक्षेत्रेयदाजीवःसंततिर्म्रियतेध्रुवम् ॥ १३३ ॥ इत्येवंविफलोयोगोभवत्येव
नसंशयः ॥ स्थाप्याहरणयोगेनब्राह्मणस्यचपूर्वतः ॥१३४॥ तेनपापेनवैपुत्रसंतानोपहतोभवेत् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाच
किंदानंचकिमौषधम् ॥ १३५ ॥ भृगुरुवाच ॥ रीतिपात्रेनवेपुत्रकारयेन्नवमंडलम् ॥ विप्रमूर्तिंचतन्मध्येकारयेच्चंदनेनच ॥ १३६ ॥
रक्तांबरंपरीधायद्विसहस्त्रंजपंचरेत् ॥ पद्मनाभत्रिबीजेनजपंकुर्यान्नसंशयः ॥१३७॥ ततःस्थापनिकादेयानवषट्पंचहाटकम् ॥ रजतंद्विगुणं
देयंमुक्ताफलंचतुर्दश ॥ १३८ ॥ सप्तान्नंप्रस्थप्रस्थंचगुडेनैवघृतेनच ॥ स्त्रीपुंसयोर्वस्त्रयुग्मंदद्याद्ब्राह्मणएवच ॥ १३९ ॥ ततस्तुश्रीफलं
भव्यंमायामंत्रेणमंत्रयेत् ॥ ऋत्वंतेस्त्रीषुदातव्यंभौमेनक्तंचकारयेत् ॥ १४० ॥ ततोगोदानकंयत्नात्पूर्वोक्तविधिनाचरेत् ॥ एतद्दानोपचारे
णध्रुवंजीवतिसंततिः ॥ १४१ ॥ एतद्दानंविनाकृत्वापुत्रसौख्यंनजायते ॥ पुत्रीसौख्यंतथाचैवजायतेनचकस्यचित् ॥ १४२ ॥ शुभयोगा
निसर्वाण्यदानेतुविफलंभवेत् ॥ यदानकुरुतेदानंतदंतेनिर्द्धनोभवेत् ॥ १४३ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ १४४ ॥ इति
विफलयोगफलम् ॥१०॥ मूर्तौसितेनीचधनेऽर्कजीवसौम्यार्किशुक्रारिव्ययेचपापाः ॥ सौम्यास्त्रिकोणेयदिजन्मकालेमहोदधिश्चक्रधरो
नृपःस्यात ॥ १४५॥ इतिमहोदधियोगफलम् ॥ ११ ॥ रविक्षेत्रगतेजीवेजीवक्षेत्रेरविर्बुधः॥ पंचमेराहुचंद्रौद्वावदृष्टौगुरुणायदा ॥ १४६ ॥

तदापैशाचिकोयोगोभविष्यतिनसंशयः ॥ पूर्वंतुभगिनीपुत्रोघातितस्तेनपापिना ॥ १४७ ॥ तेनयोगप्रभावेणसंतानोऽस्यनविद्यते ॥
शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ १४८ ॥ भृगुरुवाच ॥ राह्वर्कजीवकेतूनांसप्तपंचनवत्रिकम् ॥ बीज
मंत्रंविशेषेणमंत्रंपंचशतंजपेत् ॥ १४९ ॥ पश्चाद्दानंचकर्तव्यंषट्कषोडशहाटकम् ॥ सप्तान्नंप्रस्थप्रस्थंचरथंवृषभसंयुतम् ॥ १५० ॥
रजतंद्विगुणंवस्त्रंकरमष्टोत्तरंशतम् ॥ ताम्रपात्रपलांस्त्रिंशदघृतेनपरिपूरयेत् ॥ १५१ ॥ भव्याश्वंवावृषंभव्यंजापकायप्रदापयेत् ॥ दत्त्वादा
नंद्विजेभ्यस्तुभागिनेयंप्रपूजयेत् ॥ १५२ ॥ पाद्यार्घ्यंदापयेन्नित्यंमासमेकंनसंशयः ॥ तत्करादक्षतंग्राह्यंपादप्रक्षालनंपिबेत् ॥ १५३ ॥
पूर्वमेतत्प्रकर्तव्यंपश्चादौषधमाचरेत् ॥ ततश्चैवद्विजस्त्रीभ्योदत्त्वाप्रसवसाहितीम् ॥ १५४ ॥ ऋत्वंतेस्त्रीषुदातव्यमौषधंप्राप्नुयात्सुतम् ॥
एतद्दानोपचारेणसंततिःप्राप्यतेध्रुवम् ॥ १५५ ॥ सप्तजन्मनिदारिद्र्यंदानाभावेननिश्चितम् ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥
॥ १५६ ॥ इतिपैशाचयोगफलम् ॥ १२ ॥ सुखेशोपिरिपुक्षेत्रेव्ययेतुर्येषडष्टके ॥ सुखेशःक्रूरसंयुक्तःसौम्याःकेंद्रत्रिकोणगाः ॥
॥ १५७ ॥ अखिलग्रहानुमानेनदामिनीयोगसंभवः ॥ मित्रद्रोहःकृतःपूर्वंतेनेहनरजन्मनि ॥ १५८ ॥ धनहीनोऽथवारोगीसुख
मध्येप्युदासति ॥ अथवासंततेश्चिंताजायतेनात्रसंशयः ॥ १५९ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजावाकिंदानंचकिमौषधम् ॥
भृगुरुवाच ॥ ताम्रपात्रपलान्पंचतन्मध्येनवमंडलम् ॥ १६० ॥ चंदनेनचकर्त्तव्यंतदग्रेकारयेज्जपम् ॥ पंचबीजंनृसिंहस्यसमस्तंतुद्वयंजपेत् ॥
॥ १६१ ॥ ततोदानंप्रकर्त्तव्यंनवषट्कंचहाटकम् ॥ तस्यसेवाप्रकर्त्तव्यातस्यपूजाविशेषतः ॥ १६२ ॥ चंदनैर्धूपदीपैश्चगुडनैवेद्यकैस्तथा ॥
रजतंद्विगुणंवस्त्रंपंचाशत्करसंज्ञकम् ॥ १६३ ॥ सवत्सांगांप्रदद्यात्तुश्रद्धायुक्तश्चमानवः ॥ ततश्चपद्मनाभस्ययंत्रंपार्श्वेचधारयेत् ॥ १६४ ॥

अस्मिन्दानोपचारेचर्चिंताकष्टक्षयोभवेत् ॥ रामंचलक्ष्मणंनागंगोदुग्धेनसमन्वितम् ॥ १६५ ॥ ऋत्वंतेतुप्रदातव्यंभोजनंपयसाघृतम् ॥ संतानार्थंचदातव्यंदानानंतरमौषधम् ॥ १६६ ॥ यदानकुरुतेदानंतदादुःखीमहान्भवेत् ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ १६७ ॥ इतिदामिनीयोगफलम् ॥ १३ ॥ बुधक्षेत्रगतोजीवोजीवक्षेत्रेऽथवाभृगुः ॥ चतुर्ग्रहोभवेत्तत्रयोगोयंचक्रदामिनी ॥ १६८ ॥ चातुर्यगुणसंपन्नःसकामीवक्रलोचनः ॥ सुवक्तादीर्घजीवीचकिंचिद्दातामहासुखी ॥ १६९ ॥ इतिचक्रदामिनीयोगफलम् ॥ १४ ॥ तुर्येसुतेव्ययेलाभेग्रहयुग्मंभवेद्यदि ॥ राजमान्योधनाढ्यश्चवागमीचपंडितःसुधीः ॥ १७० ॥ इतिवाग्भवयोगफलम् ॥ १५ ॥ भृगुर्वाचस्पतिक्षेत्रेशनियुक्तेभृगूदये ॥ कर्केजीवन्मूर्याश्चश्रीमुखोयौवनेसुखम् ॥ १७१ ॥ विंशद्वर्षगतेनूनंराजमान्योमहाद्भुतः ॥ गोजाश्वधनसंयुक्तोमहायोगोभृगूदितः ॥ १७२ ॥ इतिश्रीमुखयोगफलम् ॥ १६ ॥ तुर्येवापंचमेराहुःसुतेशःक्रूरसंयुतः ॥ क्रूरक्षेत्रेत्रिकोणेज्ञःक्रूरयोगस्तदोच्यते ॥ १७३ ॥ क्रोधीस्थूलोमहामानीसलज्जोधनवांस्तथा ॥ सदातीर्थाभिलाषीचकुटिलोजायतेपुनः ॥ १७४ ॥ इतिक्रूरयोगफलम् ॥ १७ ॥ लग्नेजीवेऽथवाशुक्रउच्चेवाउदयेऽथवा ॥ केंद्रत्रिकोणगाःसौम्याःपापःषष्ठेव्ययेऽथवा ॥ १७५ ॥ गजयोगेभवेत्पुत्रोराजमान्योमहाबलः ॥ सोपिमानाधिकःक्रोधीदीर्घायुर्बहुपुत्रकः ॥ १७६ ॥ इतिगजयोगफलम् ॥ १८ ॥ चतुष्केंद्रेयदासौम्याःषष्ठेलाभेचपापिनः ॥ उद्भूतःसागरेसौख्यंचक्रीवापिसमोहरेः ॥ १७७ ॥ इत्यद्भुतसागरयोगफलम् ॥ १९ ॥ मूर्त्तौक्रूरेंदुसंयुक्तस्तुर्यास्तेभेशुभाशुभाः ॥ ऊर्द्ध्वोद्भूतोभवेद्योगोराजमान्योभवेद्ध्रुवम् ॥ १७८ ॥ क्षणेसौख्यंक्षणेचिंताधनीस्वल्पस्तुजायते ॥ महत्त्वंराजमान्यंचमानसौख्यंसदाभवेत् ॥ १७९ ॥ एतद्योगप्रभावेणयावज्जीवंसमृद्धिमान् ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ १८० ॥ इत्यूर्द्ध्वोद्भूतयोगफलम् ॥ २० ॥ मूर्त्तौचेष्टाष्टमेषष्ठेशनीराहुस्तथाकुजः ॥

तदायोगोनिपातःस्यात्परदेशेसदाव्रजेत् ॥ १८१॥ कृपणोदुष्टचित्तश्चधनहीनस्तथाभवेत् ॥ अथवासंततेश्चिंताभवेन्नैवात्रसंशयः ॥१८२॥
शनैःपंचततस्त्रीणिद्विसहस्त्रंजपंजपेत्॥ततोदानंप्रकर्त्तव्यंभव्याश्वंगोयुगंतथा १८३॥ततःसुवर्णषट्कंचरजतंद्विगुणंतथा ॥ ततोदानप्रभावेणनि
पातस्यक्षयोभवेत्॥१८४॥इतिनिपातयोगफलम्॥२१॥लग्नेशेचगतेतुर्येसौम्यक्षेत्रेशिवाचकः ॥ विलासीचमहादंभीदाताभोक्तागुणाधिकः
॥१८५॥ इतिविलासयोगफलम्॥२२॥मेषमार्त्तण्डलाभस्थेककेंगुरुर्धनेस्थितः ॥ कर्मेशुक्रःसदासौम्याःशक्रयोगेचचक्रिणः ॥ १८६ ॥
इतिशक्रयोगफलम् ॥ २३ ॥ रिपौतुर्येऽष्टमेचान्त्येराहुभौमार्कतत्सुताः ॥ मूर्तौचंद्रेचकुरुतेमातुःकष्टमृतुत्रयम् ॥ १८७ ॥ असौ
महिषयोगोऽस्तिफलंशृण्वस्यपुत्रक ॥ गर्भपातः कृतः पूर्वंतेनात्रमृतपुत्रकः ॥ १८८ ॥ धर्मस्थानेस्थितोजीवःसुखंतेनप्रजायते ॥ शुक्र
उवाच ॥ किंजाप्यंकस्यपूजाचाकिंदानंचकिमौषधम् ॥ १८९ ॥ भृगुरुवाच ॥ क्रूरग्रहजपंकुर्याद्विशेषाच्चन्द्रभौमयोः ॥ ततोदानंप्रकर्त
व्यंगुरुयोगात्सुखंभवेत् ॥ १९० ॥ इतिमहिषयोगफलम्॥२४॥केंद्रेचतुष्केपिचउच्चखेटाजीवार्कभौमार्किशशांकिनोऽगे ॥ नीचस्त्रिकोणे
पिचपापखेटादेवेंद्रयोगोऽखिलयोगमुख्यः ॥१९१॥ इतिदेवेंद्रयोगफलम् ॥२५॥ सौम्याःक्रूराधनेलग्नेनीचशत्रुगृहेगुरुः ॥ पितुःकष्टंमहा
सौख्यमन्तेदुःखीप्रजायते ॥ १९२ ॥ चतुर्ग्रहायदालग्नेधनेशुक्रोयदाभवेत् ॥ धर्मेसौरीरिपुक्षेत्रेराजयोगेमहासुखी ॥१९३॥ इतिराजयोग
फलम् ॥ २६॥ छिद्रोदयेव्ययेक्रूरास्तत्रचंद्रःस्थितोयदि ॥ अथवापिग्रहाःसर्वेत्रिस्थानेषुयदास्थिताः ॥ १९४॥ शूलेपुराकृतंपापंशूलेनप्र
हतोवृषः ॥ तेनपापेनदुष्टात्मारोगीवाधनवर्जितः ॥१९५॥ अथसंतानहेतोश्चबहुचिंताप्रजायते ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचाकिं
दानंचकिमौषधम् ॥ १९६ ॥ ॥ ताम्रपात्रंपंचपलंतन्मध्येपंचमंडलम् ॥ चंदनेनचकर्त्तव्यंकारयेद्वृषभाकृतिम् ॥ १९७॥ तदग्रे

कारयेज्जाप्यंरुद्रमंत्रंत्रियंबकम् ॥ सहस्रपंचकंकार्यंततःपुण्यंसमाचरेत् ॥ १९८॥ चतुर्विंशतिषट्कंचहाटकंगांवृषंतथा ॥ एतद्दानप्रभावेणशू
लयोगक्षयोभवेत् ॥ १९९ ॥ यदानकुरुतेदानंतदाचपंचजन्मसु ॥ महाचिंताभवेत्तस्यपुत्रैरपिधनैरपि ॥२०० ॥ कविनाचकृतःप्रश्नोभृगु
णापरिभाषितः ॥ २०१ ॥ इतिशूलयोगफलम् ॥ २७ ॥ भाग्येचन्द्रःसुखेशुक्रोलाभेवात्रितयेगुरुः ॥ सुतेक्रूराश्चचत्वारोभास्करास्तो
महासुखम् ॥ २०२ ॥ चत्वारिंशत्परंषष्टितमेवर्षेसुखीभवेत् ॥ राजावाराजमान्यश्चकुबेरस्यसमोभवेत् ॥ २०३ ॥ तदनंतरंभवेच्चिंता
उद्वेगोवधबन्धनम् ॥ धनहानिर्महादुःखंपुत्रस्त्रीमित्रसंपदाम् ॥ २०४ ॥ नभवंतिसुतास्तस्यभवेदपिनजीवति ॥ ॥ शुक्रउवाच ॥ ॥
किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ २०५ ॥ ॥ भृगुरुवाच ॥ ॥ विप्रायदानंकर्त्तव्यंषष्टिषट्कंचहाटकम् ॥ भव्याश्वंरजतंवस्त्रं
पंचरत्नसमन्वितम् ॥ २०६ ॥ एतद्दानप्रभावेणयावज्जीवंसमृद्धिमान् ॥ पुत्रपौत्रादिसौभाग्यंवर्द्धतेऽहर्निशंततः ॥ २०७ ॥
पुत्रंपौत्रंचतत्पुत्रंलभतेचसुखंधनम् ॥ प्राप्यतेतेनपुण्येनतस्मात्पुण्यंसमाचरेत् ॥ २०८ ॥ यदानकुरुतेदानंतदादुःखीभवेद्ध्रु
वम् ॥ भ्रातृपुत्रैरपुत्रत्वंसदादुःखीधनैरपि ॥ २०९ ॥ तस्मात्कर्मतुकर्त्तव्यंश्रुतिमात्रेणसर्वतः ॥ कविनाचकृतःप्रश्नोभृगुणाप
रिभाषितः ॥ २१० ॥ इतिभास्करास्तयोगफलम् ॥ २८ ॥ लग्नेसौम्याः सुखेसौम्याः स्वायुर्धर्मेशुभाशुभाः ॥ भास्करे
सुखसम्पत्तिः क्षणेवृद्धिः क्षणेक्षयः ॥ २११ ॥ सूर्यपंचाक्षरंमन्त्रंसहस्रंकारयेज्जपम् ॥ ततोदानंप्रकर्त्तव्यंपंचषट्कंचहाटकम् ॥ २१२ ॥
रक्तवस्त्रंकरत्रिंशत्ताम्रपात्रंघृतैर्भृतम् ॥ रजतंभारषट्कंचदत्तंश्रीसूर्यसंनिधौ ॥ २१३ ॥ एतद्दानप्रभावेणअक्षयोजायतेध्रुवम् ॥ यदानकुरुते
दानंजनपुत्रैर्विवर्जितः ॥२१४॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥२१५॥ इतिप्रकारान्तरेण भास्करास्तयोगफलम् ॥२९॥ लग्ने

गुलेस्मरेधर्मेराहुचंद्रौशिखीशनिः ॥ क्रूराःसौम्याधनेलग्नेयोगश्चंद्रास्तसंज्ञकः॥२१६॥एतद्योगप्रभावेणस्वल्पायुर्जायतेनरः ॥ यदिजीव-
तिबालोसौकुबेरस्यसमोभवेत् ॥२१७॥ नसौख्यंनहिपुत्राश्चदीर्घरोगीभवेन्नरः ॥ शुक्रउवाच ॥ किंदानंकस्यपूजाचकिंजाप्यंचकिमौषधम्
॥ २१८ ॥ भृगुरुवाच ॥ गंगामध्येकृतंदानंगुप्तंतेनमहासुखी ॥ गुरुनिंदाततःपश्चाद्दीर्घरोगीभवेन्नरः ॥२१९ ॥ चंद्रमंत्रत्रिबीजंचजपेत्स-
हस्रसंख्यकम् ॥ ततोदानंप्रकर्तव्यंसप्तषट्कंचहाटकम् ॥ २२० ॥ रजतंद्विगुणंताम्रपात्ररक्तंचतुर्दश ॥ घृतपूर्णगवांयुक्तंसप्तान्नंप्रस्थप्रस्थ-
कम् ॥ २२१ ॥ एतद्दानानुसारेणरोगहीनस्तुजायते ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ २२२॥ इतिचंद्रास्तयोगफलम्॥३०॥
धर्मेशोवाथधीशोवाक्रूरोवाक्रूरसंयुतः ॥ दृष्टेभौमेनवाचंद्रेयोगोऽयंदारुणोमतः ॥ २२३ ॥ पूर्वंव्याघ्रीसगर्भाचमारितासुतसंयुता ॥ तेन
पापानुसारेणपुत्रोजातोनजीवति ॥ २२४ ॥ कदाचिन्नमृताकन्याएकावापिद्वयंत्रयम् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकि-
मौषधम् ॥ २२५ ॥ भृगुरुवाच ॥ शनौपंचकुजेसप्तबीजमंत्राक्षरंजपेत् ॥ रूप्यपट्टोत्तरेकृत्वाव्याघ्ररूपंचचंदनैः ॥ २२६ ॥ नवास्रमंडलं
मध्येतदग्रेजपमाचरेत् ॥ द्विसहस्रंप्रकर्त्तव्यंततोदानंप्रकल्पयेत् ॥ २२७॥ रजतंदशषट्कंचतदर्द्धंचैवहाटकम् ॥ ताम्रपात्रपलान्रुद्रान्वस्त्रंषष्टि
करान्वितम् ॥ २२८ ॥ सवत्सागौःप्रदातव्याकंबलंरक्तकंबलम् ॥ सप्तान्नंप्रस्थप्रस्थंचदानकालेप्रदापयेत् ॥ २२९ ॥ गुप्तदानप्रभावेण
दारुणस्यक्षयोभवेत् ॥ ततोगोदानकंरत्नंपूर्वोक्तविधिनासह ॥ २३० ॥ भानुयंत्रंचकृत्वातुस्त्रीकट्यांधारयेत्ततः ॥ ततस्तुश्रीफलंभव्यं
भानुमंत्रेणमंत्रयेत् ॥ २३१ ॥ तस्यपूजाप्रकर्तव्यावर्षमेकंहियत्नतः ॥ एतत्कृत्योपचारेणसुतोजीवतिनान्यथा ॥ २३२ ॥ रोगिणांरोग
हीनत्वंनिर्द्धनोऽपिधनीभवेत् ॥ दानाभावेमहाचिंतापुत्रैरपिधनैरपि ॥ २३३ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः॥ २३४ ॥ इतिदा-

रुणयोगफलम् ॥ ३१ ॥ तुर्यराशौयदाचंद्रस्तस्येशश्चंद्रवेश्मनि ॥ चंद्रयोगोभवेत्तस्मिन्मंत्रोवापिसुखीधनी ॥ २३५ ॥ इतिचन्द्रराजयोगफलम् ॥ ३२ ॥ चतुःकेंद्रेयदासौम्याउच्चेवैजीवसंग्रहे ॥ चतुःसागरयोगेतुमहाराजोमहाधनी ॥ २३६ ॥ किंचिच्चिंताभवेत्तस्यसंतानाद्व्याधितोध्रुवम् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ २३७ ॥ ॥ भृगुरुवाच ॥ ॥ सुक्षेत्रेचसुपात्रेचमहादेवस्यसन्निधौ ॥ गुप्तदानंमहादानंकृतंतेनात्रजन्मनि ॥ २३८ ॥ महाराजोधनाढ्यश्चजायतेनात्रसंशयः ॥ तपस्वी निंदितः पूर्वंतेनचिंताप्रजायते ॥ २३९ ॥ ताम्रपात्रंपलान्रुद्रांस्तन्मध्येनवमंडलम् ॥ चंदनेनचकर्त्तव्यंरविरूपंचकारयेत् ॥ २४० ॥ तस्याग्रेकारयेज्जाप्यंरुद्रमंत्रंनवत्रयम् ॥ सहस्रपंचकंकार्यंततोदानंप्रदापयेत् ॥ २४१ ॥ हाटकंदशषट्कंचरूप्यंवाभारविंशतिम् ॥ भव्याश्वंवापिवृषभंधुर्यंगोधूमसंयुतम् ॥ २४२ ॥ सप्तान्नंचैववसनंकरमष्टोत्तरंशतम् ॥ एतद्दानप्रभावेणसर्वंचिंताप्रलीयते ॥ २४३ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ २४४ ॥ इतिचतुःसागरयोगफलम् ॥ ३३ ॥ धनलग्नेत्रिकर्मेशःक्रूराः सौम्याधनेत्रिके ॥ २४५ ॥ सर्वावलोकितश्चंद्रोयोगोऽयंसागरस्तदा ॥ सहस्रगास्तुविप्रेभ्योभोजनांतेधनायुतम् ॥ २४६ ॥ पूर्वंदत्तमिदंदानंतस्माज्जातश्चसागरे ॥ एतद्दानंचकृत्वाचपश्चात्तापंचकारसः ॥ २४७ ॥ पुनर्दानंपुनर्निंदाकृतातेनात्रजन्मनि ॥ जन्मतस्तृतीयेतुर्येतुषष्ठवर्षांतरेनरः ॥ २४८ ॥ उन्मत्तोजायतेपुत्रःसागरेनात्रसंशयः ॥ चतुर्दशादितःपश्चान्महाचिंताप्रवर्तते ॥ २४९ ॥ वर्णाद्बहिर्भवेत्सोऽपिअपांक्तेयोभवेन्नरः ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ २५० ॥ भृगुरुवाच ॥ चतुर्दशपलेताम्रपात्रेचवसुमंडलम् ॥ चंदने [illegible] ॥२५१॥ [illegible] ॥ तस्योपरिसमासीनःकुर्याज्जाप्यंनसंशयः ॥२५२॥

सप्तबीजाक्षरंमंत्रंरुद्रस्यचजपंचरेत् ॥ ततोदानंप्रकर्तव्यंरथंहययुतंतथा ॥ २५३ ॥ भव्यांचंदापयेद्यत्नाद्वस्त्रालंकारभूषितम् ॥ सुवर्णं
भारषट्कंचद्विगुणंरजतंतथा ॥ २५४ ॥ रीतिपात्रंतथाकांस्यपात्रंपलचतुर्दशम् ॥ सप्तान्नंप्रस्थप्रस्थंचपात्रंनवघृतेर्भृतम् ॥ २५५ ॥ अन्यैश्च
विविधैर्दानैःकार्यसिद्धिस्तुजायते ॥ एतद्दानप्रभावेण्धनपुत्रयुतोभवेत् ॥ २५६ ॥ जापकायप्रदातव्यंराज्यभ्रष्टोपिभूपतिः ॥ दिनेदिनेलभे
त्सौख्यंपार्थिवोनात्रसंशयः ॥२५७॥ यदानकुरुतेदानंतदादुःखीनसंशयः ॥ महादानंनदद्याद्यस्तस्यक्लेशोधनैःसुतैः ॥ कविनाचकृतःप्रश्नो
भृगुणापरिभाषितः ॥ २५८ ॥ इतिसागरयोगफलम् ॥ ३४ ॥ धर्मस्थानेयदाक्रूरःसहजेतुविशेषतः ॥ कुजमंदैस्तदापुंसांभ्रातृहायोगउच्यते
॥२५९॥ पूर्वंबालवधंकृत्वासन्युवासस्वसद्मनि ॥ भ्रातृहीनोभवेद्वालोजन्मन्यत्रनसंशयः॥२६०॥शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिं
दानंचकिमौषधम्॥ भृगुरुवाच॥ताम्रपात्रंपंचपलंतन्मध्येपंचमंडलम्॥२६१॥चंदनेनप्रकर्तव्यंतदग्रेकारयेज्जपम्॥ शनौपंचकुजेत्रीणिबीज
मंत्राक्षरंजपेत् ॥ २६२ ॥ द्विसहस्रंप्रदातव्यमतोदानंप्रदापयेत् ॥ रजतंरुद्रषट्कंचनवषट्कंचहाटकम् ॥ २६३ ॥ शतपंचकरंवस्त्रंकंबलंरक्तकं
बलम् ॥ गौश्चभव्याप्रदातव्यासर्वोपस्करसंयुता ॥२६४॥ सप्तान्नंप्रस्थप्रस्थंचगुडलड्डुसमन्वितम् ॥ एतद्दानप्रभावेणभ्राताजीवत्यसंशयः
॥२६५॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ २६६ ॥ इतिभ्रातृहयोगफलम् ॥ ३५ ॥ राहौभौमस्यगेहेरविसदनगतेसूर्यपुत्रेऽथसूर्ये,
मंदक्षेत्रस्थितेचप्रभवतिहितदासौत्रिषुख्यातनामा ॥ योगस्तस्मिन्प्रजातेनरिभवतिपितुर्मातुरस्यात्मनश्चनाशःस्याद्वंशनाशोभवतिशृणु
सुतात्यन्तगर्ह्योऽस्तियोगः ॥ २६७ ॥ अस्मिन्योगेयदाजातस्त्रिषुजातःसउच्यते ॥ पूर्वंगोत्रवधंकृत्वाग्रामदाहश्चकारितः ॥ २६८ ॥
अत्रजन्मनितेनेहत्रिषुजातोनरोभवेत् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ २६९ ॥ भृगुरुवाच ॥ द्विसहस्रंजपं

भृगु ८

कुर्याद्रुद्रमंत्रनवत्रयम् ॥ रविराहुकुजार्कीणांसप्तपंचनवाथषट् ॥ २७० ॥ सहस्रंचजपंकृत्वापश्चाद्दानंचदीयते ॥ रजतंसूर्यषट्कंचषड्ढा दशहाटकम् ॥ २७१ ॥ ऊर्णापट्टंचबह्वर्थंवस्त्रंषष्टिकरंतथा ॥ सप्तान्नंप्रस्थप्रस्थंचगांचदद्यात्प्रयत्नतः ॥ २७२ ॥ शतदानंप्रक र्तव्यंत्रिषुदोषविनाशनम् ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ २७३ ॥ इतित्रिषुयोगफलम् ॥ ३६ ॥ कर्मोदयेसुखेक्रूराः सुतलग्नेपरेशुभाः ॥ छिद्रेशःसहजेस्थानेछत्रयोगःसदासुखम् ॥ २७४ ॥ पूर्वसेवाकृतातेनमहातीर्थेपुनःपुनः ॥ देवार्चनंद्विजेभक्तिस्तेन चैवेहजन्मनि ॥ २७५ ॥ सुखीसुकर्मकश्चैवधर्मिष्ठोबहुपुत्रवान् ॥ बहुस्त्रीभिःसमंभोगीबुद्धिमांश्चविचक्षणः ॥ २७६ ॥ कुलमध्येप्रधानश्चगजवा जियुतोनरः ॥ मनःस्वस्थोभवेद्दाताधनाढ्यःकुलशीलवान् ॥ २७७ ॥ षोडशाब्दर्षतःपश्चात्सौख्यमात्मबलैर्भवेत् ॥ त्रिंशद्वर्षेगतेनूनंमहासौ ख्यंप्रजायते ॥ २७८ ॥ राजावाराजमान्योवाकुबेरस्यसमोभवेत् ॥ चतुस्त्रिंशाब्दतःपश्चात्ततःपीडाप्रवर्तते ॥ २७९ ॥ रक्तवाताद्भवेत्पीडा राजरोगःप्रवर्तते ॥ कासश्वासादिरोगाणांप्रादुर्भावोमुहुर्मुहुः ॥ २८० ॥ क्षणेकष्टंक्षणेसौख्यंक्षीणांगोजायतेनरः ॥ शुक्रउवाच ॥ कर्मणा केनरोगीस्यात्केनोपायेननश्यति ॥ २८१ ॥ भृगुरुवाच ॥ पूर्वेगोत्रवधंकृत्वासाध्वीस्त्रीचकलंकिता ॥ इहजन्मनितैःपापैराजरोगीभवेन्नरः ॥ ॥ २८२ ॥ तस्यशांतिंप्रवक्ष्यामिविधिनाशृणुतत्सुत ॥ नृसिंहयंत्रराजंचभूर्जपत्रेचलेखयेत् ॥ २८३ ॥ यक्षकर्दमसंयुक्तंगंधपुष्पैःप्रपूजयेत् ॥ ऊर्णापट्टंबहुपर्णंचतुर्विंशपुटीकृतम् ॥ २८४ ॥ तस्योपरिसमासीनोविशुद्धोजपमाचरेत् ॥ नृसिंहमंत्रराजस्यकारयेद्विधिसंयुतम् ॥ २८५ ॥ [illegible]परीधायपूर्वोक्तविधिनासह ॥ ततोदानंप्रकर्त्तव्यंषट्कंषोडशहाटकम् ॥ २८६ ॥ रजतंद्विगुणंवस्त्रमष्टोत्तरकरंतथा ॥ ताम्रपात्रंचकर्षे [illegible]रितम् ॥ २८७ ॥ आसनंविधिवद्द्यात्सवत्सांगांविशेषतः ॥ हेम्नश्चधेनुमेकांचरजतोपरिधारयेत् ॥ २८८ ॥ पद्मासनेजप[illegible]का

संहि०

योनवासमण्डलोपरि ॥ एवंचविधिवद्दानंकारयेच्छ्रद्धयान्वितः॥२८९॥ नश्यंतिव्याधयः सर्वे ततस्तुपुत्रवान्भवेत् ॥ राज्यभ्रष्टोभवेद्राजा
निर्द्धनोधनमाप्नुयात् ॥ २९० ॥ नृसिंहमंत्रराजंचबाहौशिरसिधारयेत् ॥ एतद्दानस्यपुण्येनपीडामुक्तोभवेन्नरः ॥ २९१ ॥ श्रुत्वानकुरुते
दानंमहादुःखीभवेद्ध्रुवम् ॥ रोगवृद्धिर्महाचिन्तापुत्रैरपिधनैरपि॥२९२॥कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ इतिच्छत्रयोगफलम् ॥
॥ ३७ ॥ सुतस्थानगतःक्रूरःक्रूरैरपिविलोकितः॥२९३॥क्रूरस्थानगतश्चन्द्रःक्रूरयोगस्तदोच्यते ॥ सुतस्थस्तन्यपानार्थंब्राह्मणीयोजितापु
रा ॥२९४॥ स्तन्याभावात्सुतस्तस्याःस्तनंप्रत्यदशत्तदा ॥ तेनदृष्टानुसारेणदीर्घरोग्यतिसारकः ॥२९५ ॥ नभवेत्संततिस्तस्यमहाक्रोधी
भयान्वितः ॥ शुक्रउवाच ॥ उपायंवदमेतातमूलकर्मविनाशकम् ॥ २९६ ॥ भृगुरुवाच ॥ सुतक्रूरग्रहाणांचपंचायुतजपंचरेत् ॥ ब्राह्मणी
बालकौकृत्वास्वर्णाद्द्वापलमानतः ॥ २९७ ॥ ताम्रपात्रेनिधायाथतदग्रेजपमाचरेत् ॥ शिवार्चावत्सरंयावद्यथाशक्तिविधानतः ॥ २९८॥
ततश्चश्रीफलंरम्यंमायामन्त्रेणमन्त्रयेत् ॥ लक्ष्मणामूलसंयुक्तमृत्वंतेदापयेन्निशि॥२९९॥कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥३००॥
इतिक्रूरयोगफलम् ॥ ३८ ॥ धीशःषष्ठाष्टमेवारिपुगृहपयुतःक्रूरगेहेऽथवातत्पुत्रस्थानंविपश्येद्रविरपितनयस्तस्यवापुत्रचिन्ता ॥ जातः
पुत्रोमृतःस्याद्यदिखलुसुतषष्ठेऽष्टमेवत्सरेवाजीवेत्पुत्रीद्वयंवायुवतिरपिसदाकांक्षिणीपुत्रकस्य ॥ ३०१ ॥ः रोगिणीगर्भसंयुक्ताभूवितान
कसंयुता ॥ नरक्षितस्तत्सुतोस्माद्व्रयोगेनसंशयः ॥ ३०२ ॥ तेनपापेनरोगीवापुत्रपापविहीनकः ॥ शुक्रउवाच ॥ किंजाप्यंकस्य
पूजाचकिंदानंचकिमौषधम् ॥ ३०३ ॥ भृगुरुवाच ॥ ताम्रपात्रंरुद्रपलंतन्मध्येचाष्टमंडलम् ॥ चंदनेनप्रकर्त्तव्यंतदग्रेजपमाचरेत् ॥
॥ ३०४ ॥ जपंचपंचसाहस्रंशनिमन्त्रस्यकारयेत् ॥ ततोदानंप्रकर्त्तव्यंषष्टिभारंचहाटकम् ॥ ३०५ ॥ रजतंद्विगुणंवस्त्रंकरमष्टोत्तरंश

तम् ॥ सप्तान्नंप्रस्थप्रस्थंचसवत्सांगांसुदोहिनीम्॥३०६॥दानांतेनववात्रीणिदापयेत्सदलानिच॥गांसवत्सांचदुग्धेनपूर्णांविप्रायदापयेत्॥
॥३०७॥ संतानंप्राप्यतेवश्यंमृतवत्सासुपुत्रिणी ॥ दानांतेचौषधंदद्याद्रोगिणीगर्भहेतवे ॥३०८॥ एतद्दानोपचारेणशनैःसिद्धिःप्रजायते ॥
रोगीभव्योभवेन्नूनंनात्रकार्याविचारणा ॥ ३०९ ॥ यदानकुरुतेदानंतदाचपंचजन्मसु ॥ अपुत्रोदीर्घरोगीचभवत्येवनसंशयः॥ ३१० ॥
कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ३११ ॥ इतिवज्रयोगफलम् ॥३९॥ लग्नेचंद्रःपरोराहुःसूर्यभानुसुतौबुधः ॥ सुरासुरार्चितपदो
देवता गुणवर्तितः ॥ ३१२ ॥ कामीयुद्धरतोनित्यंपुत्रपौत्रादिभिर्युतः ॥ महैश्वर्योमहाभाग्योभृत्यभृत्यादिसंयुतः ॥३१३॥ विनोदीचक्रवर्ती
चपरस्परविरोधकृत् ॥ जन्मांतेचभवेद्दुःखंमध्यभागेसुखीसदा ॥३१४॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ३१५ ॥ इतिजगत्य-
तियोगफलम् ॥४०॥सुतपःसद्गृहसंस्थःक्रूरग्रहसंमतोऽथवासौम्यः ॥ क्रूरक्षेत्रेजीवस्तदाविनाशोभवेद्योगः ॥३१६॥पूर्वंपतिव्रतायांतुलोभा
त्स्थापनिकाकृता ॥ तेनपापानुसारेणसंततिर्म्रियतेध्रुवम् ॥३१७॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवा
च ॥ रीतिपात्रंताम्रपात्रंपलानिचचतुर्दश ॥ ३१८ ॥ रुद्रमंडलमस्याथसम्यङ्मध्येचकारयेत् ॥ ऊर्णापट्टोपरिस्थित्वातदग्रेकारयेज्जपम् ॥
॥३१९॥त्रिसहस्रंचत्रिशतमघोरंसंपुटान्वितम् ॥ ततोदानंप्रकर्त्तव्यंसप्तषट्कंचहाटकम् ॥ ३२०॥ रजतंद्विगुणंरक्तवस्त्रंषष्टिकराणिच ॥ गोधू
मतंडुलंमाषंप्रस्थपंचकपंचकम्॥३२१॥सवत्सांगांघृतंतैलंप्रस्थंप्रस्थंचसंयुतम्॥एतद्दानेकृतेपश्चात्संततिर्जीवतिध्रुवम्॥३२२॥कर्त्तव्यंजन्म
तः पश्चाद्बालकंठेचधारयेत् ॥ एतद्दानंप्रकर्त्तव्यंजापकायनसंशयः ॥ ३२३ ॥ रुद्रीमेकांततःकुर्याद्वृषभंदक्षिणायुतम्॥ अंत्यजेष्वपिसंस्पर्शं
कृत्वा [illegible] ॥ ३२४ ॥ [illegible]भोजनंधनसंयतम ॥ एतद्दानोपचारेणपूर्वपापक्षयोभवेत् ॥ ३२५ ॥ कविनाचकृतः

प्रश्नोभृगुणापरिभाषितः ॥ २२६ ॥ इतिविनाशियोगफलम् ॥४१॥ संतानेशश्चतुर्थेस्यात्तत्पतिःषष्ठगेहगः ॥ रविःशनिःकुजःषष्ठसुतलाभ
व्ययेऽथवा ॥ २२७ ॥ क्रूरक्षेत्रेयदिभवेत्पुत्राचिंतातदाभवेत् ॥ जातेपुत्रेमृतिस्तस्यजीवेत्पुत्रीद्वयंयदि ॥ २२८ ॥ पूर्वंसंगर्भंहारिणीहारिणेन
हतासह ॥ एतद्योगप्रभावेणरक्षिताहारिणीसुताः॥२२९॥नभवंतितदापुत्राजीवंतिनभवंतिचेत्॥राजरोगोभवेद्देहेसप्तजन्मसुपुत्रक ॥२३०॥
शुक्रउवाच॥किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम्॥भृगुरुवाच ॥ ताम्रपात्रंपलत्रिंशत्तन्मध्येपंचमंडलम् ॥२३१॥ मृगरूपंचतन्मध्ये
कारयेच्छृंगसंयुतम्॥ऊर्णापट्टंदशकरंपटंचदशहस्तकम् ॥२३२॥तस्योपरिसमासीनोयुतंचकारयेज्जपम् ॥ शनिराहुकुजानांचजीवस्यचमनू
न्जपेत् ॥ २३३ ॥ ततोदानंप्रकर्तव्यंभारंषोडशहाटकम्॥रजतंद्विगुणंवस्त्रंपंचाशीतिकरान्वितम् ॥२३४ ॥ सप्तान्नंप्रस्थप्रस्थंचपूर्णपात्रंघृतै
र्भृतम् ॥ एतद्दानंप्रकर्त्तव्यंगांसवत्सांपयस्विनीम् ॥ २३५ ॥ एतद्दानप्रभावेणचिरंजीवतिबालकः ॥ रोगीभव्योभवेन्नित्यंपुत्रवान्नात्र
संशयः॥२३६॥ श्रुत्वाशीघ्रंप्रकर्तव्यंविलंबंनैवकारयेत् ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ २३७॥ इतिकलापयोगफलम्॥४२॥
कर्मेशोद्वादशेस्थानेचंद्रयुक्तेथवेक्षिते ॥ तथैवस्वामिनादृष्टास्त्रिकोणेचचतुर्ग्रहाः ॥ २३८ ॥ तदाहिमानसोयोगःसदाचंचलकेलिवान् ॥
तदार्द्धराजसम्मानंधनाढ्योयशसान्वितः ॥ २३९ ॥ मध्यभागेसुखंदुःखंजायतेसमताफलम् ॥ वृद्धकालेमहासौख्यंराजवंद्यःकुलेनृपः ॥
॥ २४० ॥ संतानार्थेभवेच्चिन्ता अथवारोगतोभयम् ॥ वातरक्तकृतापीडाजायतेनात्रसंशयः ॥ २४१ ॥ शुक्रउवाच ॥ किंजाप्यंकस्य
पूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ ताम्रधातोश्चपात्रंवापलद्वादशकान्वितम्॥ २४२ ॥ नवास्रमंडलंमध्येसूर्याकारंचकारयेत् ॥
अर्कबीजंनवत्रीणिसप्तबीजाक्षरंशनेः ॥ २४३ ॥ सहस्राणिप्रजप्तव्यंजाप्यंपूर्वविधानतः ॥ ततोदानंप्रकर्तव्यमष्टषष्ठंचहाटकम् ॥ रजतं

रक्तवस्त्रंचकरविंशोत्तरंशतम् ॥ ३४४ ॥ सवत्सांगांचदद्यात्तुसप्तान्नंप्रस्थकद्वयम् ॥ सूर्यप्रतापयंत्रंचबाहौशिरसिधारयेत् ॥ ३४५ ॥
आमान्नंरविवारेचदेयंतेनचसर्वदा ॥ एतद्दानोपचारेणप्राप्येतेसुतसंपदौ ॥ ३४६ ॥ सर्वेरोगाःक्षयंयांतिसूर्यप्रतापहेतुना ॥ कविनाच
कृतःप्रश्नोभृगुणापरिभाषितः ॥ ३४७ ॥ इतिमानसयोगफलम् ॥ ४३ ॥ स्थानत्रयेयदासौम्याःस्थानत्रयेचपापकाः ॥ धनेतृतीयेचसौ-
म्याःषष्ठेवाद्वादशेशुभाः ॥ ३४८ ॥ तदाचानुभवोयोगःषोडशाब्दाश्चयावता ॥ महाक्लेशीचरोगीचदुर्बलाचपलामतिः ॥ ३४९ ॥ पित्त
वाताधिकापीडाकिंचिच्छ्लेष्मान्वितोभवेत् ॥ नवमेदशमेवर्षेद्वादशेचविशेषतः ॥ ३५० ॥ अरिष्टंजायतेतस्यबंधुतोभृत्यतस्तथा ॥ अष्टा
दशेगतेवर्षेसौख्यमात्मबलैर्भवेत् ॥ ३५१ ॥ षड्विंशवर्षतःपश्चान्महासौख्यंप्रजायते ॥ वृद्धत्वेबहुधाचिंतारोगेणापिधनेनच ॥ ३५२ ॥
शुक्रउवाच ॥ एतच्चिन्तापुराजाताकेनोपायेननश्यति॥ भृगुरुवाच ॥ पूर्वंसपशुहन्तासीद्धुर्विण्याश्चपशुस्त्रियः ॥३५३ ॥ तैःपापैश्चभवेद्रोगी
पुत्रादेर्दोषतोथवा ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥३५४॥ भृगुरुवाच ॥ छिद्रेशोवासुतेशोवापंचबीजनवत्र
यम् ॥ एकायुतजपःकार्यःपश्चादपिविशेषतः ॥३५५॥ ताम्रपात्रेसप्तपलेपशुरूपंचचंदनैः ॥ ततोदानंप्रकर्तव्यंषट्कंद्वादशहाटकम्॥३५६॥
द्वादशंरजतंवस्त्रंचतुरशीतिसहस्रकम्॥श्रीफलंपंचरत्नंचगांदद्यान्महिषींतथा ॥३५७॥ एतद्दानंप्रकर्तव्यंवर्षेष्टेद्वादशेऽपिवा ॥ चतुर्विंशेचद्वा
विंशएतद्दानंसमाचरेत् ॥३५८॥ एतद्दानप्रभावेणसंतानफलमादिशेत् ॥ पुत्रपौत्रादिकंसम्यग्रोगमुक्तोभवेन्नरः॥३५९॥ कविनाचकृतःप्रश्नो
भृगुणापरिभाषितः॥३६०॥इत्यनुभवयोगफलम्॥४४॥लग्नेशःशुभसौम्यमंदसहितःकेंद्रत्रिकोणोपगःसूर्येणाथनिरीक्षितःसुरगुरुःसूर्येक्षितो
वाशनिः॥कष्टंतस्यपितुर्भवेन्नपसमःसग्रामदेशाधिपोराजावावरवैभवेनसहितःस्यात्सार्वभौमोनृपः॥३६१॥इतिशुभयोगफलम्॥४५॥ लग्ने

सः शुभसौम्यऋक्षसहितःस्वस्वोच्चकेंद्रस्थितोऽन्येवाचेत्तुशुभाःखगानिजगृहेधर्मेधनेवास्थिताः ॥ योगेऽस्मिञ्छुभनाम्निराजसुमहामान्योधं
नीवैभवीराजावाप्रवरःसुखैकनिलयोऽसौराजमन्त्रीभवेत्॥३६२॥(इतिप्रकारांतरेणशुभयोगफलम्॥)संतानेशोारिपुक्षेत्रेद्रव्येतुर्याष्टपंचमे ॥
अथवाधिपतिःक्रूरोधीस्थानेचशुभेक्षितः ॥३६३॥ लग्नाच्चपंचमस्थानेराह्वर्कावथवाशनिः ॥ तदाहिवैजितोयोगःपूर्वस्थापनिकाहृताः ॥
॥३६४॥तीर्थवासिद्विजस्यैवतैश्चपापैरपुत्रकः ॥ संतानंनभवेत्तस्यनजीवंतिभवंतिचेत् ॥३६५॥ प्रबलास्त्रीभवेत्तस्यम्रियतेक्वापितिष्ठति ॥
शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ ३६६ ॥ भृगुरुवाच ॥ ताम्रपात्रपलान्रुद्रांस्तन्मध्येनवमंडलम् ॥ द्विजरूपंचत
न्मध्येचंदनेनचकारयेत्॥३६७॥शनेश्चैवकुजस्याथबीजमंत्राक्षरंजपेत् ॥ पंचसहस्रसंख्याकंततोदानंप्रदापयेत् ॥ ३६८ ॥ रूप्यंद्वादश
भारंचभारांविंशतिहाटकम् ॥ अष्टमुष्टिकरंवस्त्रंधेनुंसप्तान्नसंयुताम् ॥ ३६९ ॥ ततस्तुश्रीफलंमेध्यंमायामंत्रेणमंत्रयेत् ॥ऋत्वंतेस्त्रीषुदातव्यं
भौमेनक्तव्रतंचरेत् ॥ ३७० ॥ ततोगोसहस्रंवृक्षदानंचकारयेत्सुधीः ॥ एतद्दानप्रभावेणसंततिःप्राप्यतेध्रुवम् ॥ ३७१ ॥ यदानकुरुतेदानं
तदाचत्रिषुजन्मसु ॥ पुत्रादेश्चभवेन्मृत्यूराजरोगीभवेद्ध्रुवम् ॥ ३७२ ॥ श्रुत्वाचसर्वंकर्त्तव्यंविलंबंनैवकारयेत् ॥ कविनाचकृतःप्रश्नोभृगु
णापरिभाषितः ॥ ३७३ ॥ इतिवैजितयोगफलम् ॥४६॥ धर्मस्थानेयदासौम्याउच्चस्थानेथवाकुजः ॥ क्रूराश्चापचयेस्थानेयोगोद्भूतस्तदा
भवेत् ॥३७४॥ सुक्षेत्रेचजपंकृत्वाददावन्नंमुहुर्मुहुः ॥ तत्पुण्यस्यप्रभावेणधनाढ्यःससुखीभवेत् ॥ ३७५॥ धनीमानीविशालाक्षोयशस्वी
बहुकार्यकृत् ॥ पितृमातृवियोगश्चजायतेचाष्टवर्षतः ॥३७६॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥
ताम्रपात्रंपलान्सप्ततन्मध्येनवमंडलम् ॥३७७॥ चंदनेनचकर्त्तव्यंसूर्यमण्डलमुत्तमम् ॥ रुद्रमंत्रःप्रजप्तव्यःषष्टिषट्कंचहाटकम् ॥ ३७८ ॥

रजतंद्विगुणंवस्त्रंचतुःषष्टिकरंतथा ॥ गांसवत्सांचमाषान्नंगोधूमंप्रस्थप्रस्थकम् ॥ ३७९ ॥ एतद्दानप्रभावेणदुःखंनश्यतितत्क्षणात् ॥ महा
सौख्यंभवेत्तस्यसर्वदोषोविलीयते ॥ ३८० ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ३८१ ॥ इत्यद्भुतयोगफलम् ॥४७॥लग्नेशश्च
शनिश्चैवकन्यास्थोवाऽष्टमेतथा ॥ कुजोवाराहुदुश्चिक्ययेयोगोऽयंशून्यनामकः ॥ ३८२ ॥ शून्येमतिभ्रमश्चिंतास्मृतंचविस्मृतंक्षणे ॥ शून्य
गतिःशून्यमतिःसदादासोभवेन्नरः ॥ ३८३ ॥ वर्षेत्रिंशेचषड्विंशेचतुश्चत्वारिंशेपिच ॥ तद्धनंविलयंयातिसर्वथैवनसंशयः ॥ ३८४ ॥ शुक्र
उवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ कुजोराहुःशनिःसौम्यएषांबीजाक्षरंजपेत् ॥ ३८५ ॥ सहस्र
त्रितयंकुर्यात्केवलंचप्रयत्नतः ॥ दानादौचततोहोमःपंचामृतैर्विधीयते ॥ ३८६ ॥ देयंचवृषभंभव्यंगोधूमंतैलकंतथा ॥ लवणंसैंधवंचैव
प्रस्थंप्रस्थंप्रदापयेत् ॥३८७॥ गुडंघृतंचयत्नेनदद्याद्विप्रायभक्तितः ॥ रजतंरुद्रषट्कंचाप्यष्टषट्कंचहाटकम् ॥ ३८८॥ अष्टादशकरंवस्त्रंभोजनं
दक्षिणायुतम् ॥ ताम्रपात्रंघृतैर्भृत्वाजापकायप्रदापयेत् ॥३८९॥ पूर्वंचनिंदितःसाधुर्ज्ञानस्यक्रयविक्रयम् ॥ अस्मिञ्जन्मनितेनेदंफलंनजायते
ध्रुवम्॥३९०॥एतद्दानप्रभावेणशून्ययोगक्षयोभवेत्॥वृद्धकालेचवैकल्यान्म्रियतेसन्निपाततः॥३९१॥यदापुण्यंनकुरुतेतदादोषोभवेदयम् ॥
कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ३९२ ॥ इतिशून्ययोगफलम् ॥४८॥ चंद्रक्षेत्रेयदासौरिःशनिक्षेत्रेसक्रूरयुक् ॥ केंद्रत्रिकोणगा
सौम्यानंदयोगःसुखावहः ॥ ३९३ ॥ षड्विंशाद्वर्षतोनूनंसौख्यंभवतिचोत्तमम् ॥ पंचाशद्वर्षतःपश्चान्महासौख्यंमहद्धनम् ॥३९४॥ लभते
राजमानंचकिंचित्पुण्यप्रभावतः ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ३९५ ॥ प्रकारांतरंयथा ॥ अयुग्मेषुगृहेष्वेवमेकैकाश्चग्रहा
भिषु ॥ नंदयोगश्चविख्यातश्चिरायुर्नृपवल्लभः ॥ ३९६ ॥ इतिनंदयोगफलम् ॥ ४९ ॥ सुतेधनेयदासौम्याःपापाःषष्ठेपरेयदा ॥ केंद्रेसौ

ख्याअगेपापाजीवयोगस्तदोच्यते॥ ३९७॥सुखीचकर्मकृच्चैवजीवीचबहुपुत्रकः॥राजमान्योधनाढ्यश्चकुबरस्यसमाभवत्॥ ३९८॥ इतिजा योगफलम्॥ ५०॥इतिश्रीयोगसागरेसभाचिंतदेशेशुक्रभृगुसंवादेमनोज्ञयोगादिपंचाशद्योगाः सम्प्राप्ताः॥ ५०॥ इतिप्रथमंयोगप्रकरणम्॥ १॥ जनानांचहितार्थायकविपृष्टंभृगूदितम्॥येनयोगप्रभावेणकर्त्तव्यःपुण्यसंग्रहः॥ १॥श्रीपुष्टःकार्मुकश्चैवउन्नतश्चोर्ध्वगस्तथा॥ आकृत्योविगत कव्यंकर्बुरंचक्रमोदितम्॥ २॥साधारणविनाशश्चश्रीवत्सोराक्षसोद्भवः॥भीषणश्चाथसौरोऽथनाहुषःकेंद्रकःकुलः॥ ३॥ मातंगःपंकजश्चैवपाव कःशिवधूम्रकौ॥क्रमश्चचतुरश्चैवयोगउक्तस्तथैवच॥ ४॥वर्द्धमानस्तथावीरःप्रमादोहंसबर्बरौ॥मोहोध्वजोमणिश्चाथकुबेरश्चौवसिंहकः॥ ५॥ केदारकारकश्चैव गांधर्वोयोगउच्यते॥ तथाभृंगिरिटीचैवपद्मब्रह्मेश्वरास्तथा॥ ६॥ वज्रशुकाख्ययोगौचलोहिताख्योऽनलस्तथा॥विश्वानंदो महानंदोगोलःपाशःप्रजापतिः ॥ ७ ॥ विनाशहानिखेटाक्षोमालश्चैवप्रमोदकः॥ सप्तपंचाशत्संख्याकाउक्तायोगाअनुक्रमात् ॥ ८ ॥ इतियोगनामानि ॥ भृगौलग्नोदयेयातेगुरुःशुक्रेणसंयुतः॥ धर्मेचंद्रोच्चलाभास्ते श्रीपुष्टोयोगउच्यते ॥ ९ ॥ आदौचदशवर्षाणिसुखदुः खसमोभवेत् ॥ ततश्चत्वारिवर्षाणिराजमान्योमहासुखी ॥ १० ॥ द्वात्रिंशद्वर्षतःसौख्यंधनधान्यसुतैर्युतः ॥ भृगूक्तेस्मिन्महायोगेवृद्धका लेमहासुखी ॥ ११ ॥ इति श्रीपुष्टयोगफलम् ॥ १ ॥ तनौधनेगुरौशुक्रेबुधेवाचंद्रवीक्षिते ॥ स्वगृहेवाऽथमित्रस्थेहिबुकेकार्मुकेसु खी ॥ १२ ॥ प्रकारांतरेण ॥ शनिक्षेत्रगतोभौमोभौमक्षेत्रेशनिस्तमः ॥ द्वितीयेवाचतुर्थेचखगःक्रूरोभवेद्यदा ॥ १३ ॥ तदाचकार्मुको योगःसुखहीनोभवेन्नरः ॥ आदौकालेभवेद्रोगीद्यंतेदुःखप्रदोभवेत् ॥ १४ ॥ संतानस्यभवेच्चिंतादीर्घरोगीप्रजायते ॥ पूर्वंब्राह्मणकन्यायां पापचित्तंकृतंततः ॥ १५ ॥ संतानेभ्यःसुखंनास्तिसत्यमेवंमयोच्यते ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगु

रुवाच ॥ शनिभौमतमःकेतुमंत्रबीजाक्षरंजपेत् ॥ १६ ॥ संख्यायुतंचकर्त्तव्यंततोदानंसमाचरेत् ॥ सवत्सागौःप्रदातव्यासुवर्णंमाषविं
शतिः ॥ १७ ॥ ब्राह्मणान्भोजयित्वातुदक्षिणावस्त्रसंयुतम् ॥ आदौचमहिषींदत्त्वापश्चाद्दानंचदापयेत् ॥ १८ ॥ संतानंचभवेत्तस्यअंतेचैव
सुखीभवेत् ॥ नकरोतियदादानंतदाचपंचजन्मसु ॥ १९ ॥ निर्द्धनत्वमपुत्रत्वंभवत्येवहिनान्यथा ॥ कविनाचकृतःप्रश्नोभृगुणापरिभा
षितः ॥ २० ॥ इतिकार्मुकयोगफलम् ॥ २ ॥ लग्नेशःशत्रुक्षेत्रस्थोलग्नेषष्ठाष्टमेव्यये ॥ सुतस्थानेकुजैर्दृष्टेसौम्याःकेंद्रत्रिकोणगाः ॥ २१ ॥
उन्नताख्योभवेद्योगःसुखयुक्तोभवेन्नरः ॥ पूर्वजन्मनिसंतोषाद्धरालयश्चकारितः ॥ २२ ॥ पश्चात्तापःकृतस्तेनकृतंचहरिमंदिरम् ॥ तैश्चपुण्यैर्म
हायोगीधनाढ्यःप्रभुरीश्वरः ॥२३॥ पश्चात्तापानुसारेणसुतहीनोभवेन्नरः ॥अथवाराजयोगीचभवत्यत्रनसंशयः॥२४॥शुक्रउवाच ॥ किंजा
प्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ ताम्रपात्रंरुद्रपलंतन्मध्येहरिमंदिरम् ॥ २५ ॥ चंदनेनचकर्त्तव्यंशालग्रामस्यसन्निधौ ॥
जपेत्पंचसहस्राणिरुद्रमंत्रंनवत्रयम् ॥ २६ ॥ एतत्कृत्वाततोदानंदद्यादश्वंमनोहरम् ॥ हाटकंदशषट्कंवाराजतंषट्कविंशतिः ॥२७॥ रक्तवस्त्रं
करत्रिंशत्सप्तान्नंप्रस्थप्रस्थकम् ॥ एतद्दानप्रभावेणपुत्रोभवतिजीवति ॥ २८ ॥ रोगाःसर्वेक्षयंयांतियावज्जीवंसमृद्धिमान् ॥ कविनाचकृतः
प्रश्नोभृगुणापरिभाषितः ॥२९॥ इत्युन्नतयोगफलम्॥३॥ केंद्रत्रिकोणगाःसौम्याउच्चस्थावास्ववर्गगाः॥ नित्यंभुनक्तितल्लक्ष्मीर्वरदासत्यवा
दिनी ॥३०॥ इतिपाठान्तरम् ॥ लग्नेसौम्याःशुभक्षेत्रेपापाःकर्मेसुखेयदा ॥ मित्रक्षेत्रेभवेज्जीवऊर्ध्वयोगेसुखीपुमान् ॥ ३१ ॥ ऋषिसेवाकृता
पूर्वेहरिभक्तिस्तथैवच ॥ अत्रजन्मनिसौख्यंचजायतेनात्रसंशयः ॥३२॥ श्रीमान्वक्तागुणीधर्मीविख्यातोराजमानवान् ॥ हर्म्यंवापिमठंकू
पंतटाकंवृक्षरोपणम्॥३३॥ततश्चजायतेचिंतासंतानार्थेविशेषतः॥अष्टादशाब्दतोनूनसौख्यमात्मबलैर्भवेत्॥३४॥द्वाविंशाद्वर्षतः पश्चाद्दु

सौख्यंधनागमः ॥ द्वात्रिंशद्वापिषट्त्रिंशद्वर्षतः समताफलम् ॥३५॥क्रमशोजायतेसौख्यंषष्टिवर्षाणियावता ॥ततोवर्षद्वयंगुप्ताचिंताव्याकु
लमानसः ॥ ३६ ॥ तदग्रेसुखसंपत्तिर्धनधान्ययुतोभवेत् ॥ महादानात्सुखंमानंलभतेयावदायुषम् ॥३७॥ वैनाशेकथितंदानंकर्त्तव्यम
श्वसंयुतम् ॥ संतानंप्राप्यतेऽवश्यंभृगुणापरिभाषितम् ॥ ३८ ॥ इत्यूर्द्धयोगफलम् ॥ ४ ॥ सुतपेचास्तगेखेटेपापेवापापवीक्षितेभवति ॥
केंद्रेधनेचसौम्याःक्रूरक्षेत्रेऽथवाजीवः ॥ ३९ ॥ आकृत्याख्यस्तदायोगःपूर्वंपुण्यंकृतंबहु ॥ दानंदत्तंचदीनेभ्योधर्मज्ञानपरेणच ॥ ४० ॥
तत्पुण्यस्यप्रभावेणप्राप्यंतेबहुसंपदः ॥ राजमानंधनंधान्यंभृत्यभृत्यादिसंयुतम् ॥ ४१ ॥ संतानस्यभवेच्चिंताभवतिवानजीवति ॥ विक्री
तश्चसतीपुत्रस्तस्यपापानुसारतः ॥ ४२ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ ऊर्णापट्टंहरिद्वर्णंचतु
र्विंशत्पुटीकृतम् ॥ ४३ ॥ तस्योपरिसमासीनोजपंकुर्याद्विशेषतः ॥ पटगृहस्यमध्येचाथवादेवगृहेस्थितः ॥ ४४ ॥ सहस्रपंचकंजाप्यंकु
र्यान्मंत्रस्यवैशनेः ॥ततोदानंप्रकर्त्तव्यंषट्काष्टादशहाटकम्॥४५॥द्विगुणंरजतंवस्त्रंधेनुंचवत्ससंयुताम् ॥ताम्रपात्रंपलत्रिंशद्घृतेनपरिपूरितम् ॥
॥ ४६ ॥ एतद्दानंप्रकर्त्तव्यंषड्गृहाण्यथवागृहम् ॥ एतद्दानप्रभावेणसन्तानंप्राप्यतेध्रुवम्॥४७॥ दीर्घायुर्जायतेबालोनीरोगश्चसुबुद्धिमान् ॥
श्रुत्वानकुरुतेदानंसोऽपुत्रःसप्तजन्मसु॥४८॥पुत्रहीनःसरोगश्चजायतेनात्रसंशयः॥कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥४९॥इत्याकृत्य
योगफलम् ॥५॥कर्मेकर्मेशयुक्तोऽन्यःपापःषष्ठेस्मरेसुते ॥ आयुर्धर्मेचतिष्ठेच्चयोगोऽयंविगतोभवेत्॥५०॥ पूर्वंतीर्थेतपस्वीचानिंदितश्चप्रयत्न
तः ॥ वृद्धकालेकृतासंध्याअत्रजन्मनितेनतु॥५१॥द्वात्रिंशद्वर्षपर्यंतंनसौख्यंधनवर्जितः ॥ तदूर्ध्वंकृषितःकिंचित्सौख्यंचजायतेतदा ॥५२॥
चत्वारिंशाब्दतःपश्चाद्गजवाजिधनान्वितः॥षष्टिवर्षगतेपूर्णेमहाराजामहासुखी॥५३॥ गजवाजिधनंसम्यक्सर्वदाधनदोभवेत्॥ अन्यदेशाधि

पाः सर्वेद्वारितिष्ठंतिकिंकराः ॥ ५४ ॥ शरीरेचमहापीडारूक्षशोकयुतोभवेत् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ।
॥५५॥भृगुरुवाच॥पुण्याच्चप्राप्यतेसौख्यंविनापुण्यैःसुखंनहि॥चत्वारिंशत्पलंताम्रंतन्मध्येपंचमंडलम् ॥५६॥ चंदनेनचकर्त्तव्यंशालिग्रा
मस्यसन्निधौ॥ऊर्णापट्टंचतद्वर्णंकृत्वाद्वादशभिःपुटम्॥५७॥ तस्योपरिसमासीनस्त्वयुतंकारयेज्जपम्॥ रवौत्रीणितमःपंचबीजमंत्राक्षरंजपेत
॥ ५८ ॥ ततःपुण्यंप्रकर्त्तव्यंरथाश्वौभूषणान्वितौ ॥ सर्वोपस्करसंयुक्तंषट्कंभवतिहाटकम् ॥५९॥ द्विगुणंरजतंवस्त्रंविंशोत्तरशतंकरम्॥अष्टा
विंशत्पलंकांस्यंताम्रपात्रंघृतैर्भृतम् ॥ ६० ॥ तंडुलंमाषयुक्तान्नंगोधूमंचविशेषतः॥चणकाश्चहविष्यान्नंप्रस्थंपंचचपंचच ॥६१॥जापकायप्र
दातव्यंशनौवाकुजवासरे॥शुभेक्षणेशुभेचंद्रेपरगृहेऽयुतंचरेत् ॥ ६२॥ एतद्दानप्रभावेणमरणांतेसुखीभवेत् ॥ दानंकृत्वापुत्रसौख्यंविंशद्वर्षे
विशेषतः ॥ ६३ ॥ सर्वत्रलभतेसौख्यंपुत्रपौत्रादिसंपदाम् ॥ पुत्रपौत्रंचतत्पुत्रंमहासौख्यंमहद्धनम् ॥ ६४ ॥ कविनाचकृतःप्रश्नोभृगुणा
परिभाषितः ॥ ६५ ॥ इतिविगतयोगफलम् ॥ ६ ॥ पापालाभेसुतेलग्नेधीशषष्ठेरिपोर्गृहे ॥ पूर्वंमुनेःकृतानिंदागोमध्येतुविशेषतः॥६६॥
तेनपापवशेनास्यपुत्राभावान्नवैसुखम् ॥ भ्रात्रभावेभवेद्दुःखंद्वाविंशात्परतःसुखम् ॥ ६७ ॥ नहिज्ञातेतिकृत्वाचद्विजस्थापनिकाकृता ॥
परदारागमस्तीर्थेतेनास्मिञ्जन्मनिध्रुवम् ॥ ६८ ॥ पुत्रचिंताथवारोगीजायतेनात्रसंशयः॥शुक्रउवाच॥ किंजाप्यंकस्यपूजाचकिंदानंचकि
मौषधम् ॥६९॥ भृगुरुवाच ॥ ताम्रपात्रंपलंत्रिंशत्तन्मध्येनवमंडलम् ॥ चंदनेनचकर्त्तव्यंषट्विंशतिहाटकम् ॥७०॥ रूप्यषट्कंचवस्त्रंचद्वाविंश
त्करकंतथा ॥ गांसवत्सांचमुद्गान्नंतंडुलंतिलकंयवम् ॥ ७१ ॥ प्रस्थद्वादशकंदेयंभौमेनक्तंविशेषतः ॥ रामंचलक्ष्मणंनागंदद्याद्गोदुग्धसंयुत ११
म् ॥७२॥ संततिर्जायतेनूनं मृतापत्यानसाध्रुवम् ॥ द्विजायगोसुतंदद्यात्पूर्वोक्तविधिनासह ॥ ७३॥सापत्याचभवेत्पत्नीसर्वत्रैवविशेषतः ॥

तस्यरोगविनाशायदातव्यंतत्पुरस्कृतम् ॥७४॥ लोहपात्रंतिलंतैलंमहिषींच पयस्विनीम् ॥ जापकायप्रदातव्यंयथोक्तंवेदवादिने ॥ ७५ ॥
एतद्दानप्रभावेणसुतसौख्यंप्रजायते ॥ नीरोगीचभवेत्सद्यः पूर्वदोषक्षयोभवेत् ॥७६॥ श्रुत्वानकुरुतेपुण्यंतदाचसप्तजन्मसु ॥ अपुत्रिकोऽथवा
रोगीजायतेचमुहुर्मुहुः ॥७७॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ७८ ॥ इतिकाव्ययोगफलम् ॥७ ॥ कर्मेशःसुखनाथश्चक्रूरयुक्तः
षडष्टमे ॥जीवार्कौचधनेस्यातांतदायोगस्तुकर्बुरः॥७९॥ साध्व्यांकृतःकलंकश्चनदत्तंपूर्वजन्मनि ॥ तैःपापैश्चभवेत्कष्टंधनैर्धान्यैर्नसंशयः॥
॥८०॥ कदाचित्स्वल्पलाभस्तुजायतेचविनिर्णयः ॥ विंशद्वर्षंसमासाद्यप्राप्यतेसुखमुत्तमम् ॥ ८१॥ द्वाविंशद्वर्षतोनूनंसौख्यमात्मबलेभ
वेत् ॥ अष्टाविंशत्तमेवर्षेप्राप्यंतेसुखसंपदः ॥८२॥ कर्णतुल्योभवेद्दातासर्वत्रैवप्रवेशकः ॥ स्वेच्छाचारीभवेद्वोक्तापितुर्नोहानिकृत्क्वचित् ॥
॥८३॥ लाभेक्वचिद्भवेद्विघ्नःसौख्यंभवतिनिश्चितम् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ ८४ ॥ भृगुरुवाच ॥
कांस्यपात्रंरुद्रपलंतन्मध्येनवमण्डलम् ॥ ऊर्णापट्टोपरिस्थित्वाशुचिः क्रोधादिवर्जितः ॥८५॥ सप्तबीजार्कसौर्योश्चद्विसहस्रंजपंचरेत् ॥
ततोऽश्वश्चप्रदातव्यःसप्तषट्कंचहाटकम्॥८६॥अष्टोत्तरशतकरंवस्त्रंविप्रायदापयेत्॥एकाग्रमनसानूनंमुद्रान्दद्याच्चतुर्गुणान् ॥८७ ॥ एतत्पुण्य
प्रभावेणदुष्टयोगफलंहरेत् ॥ अनेनप्राप्यतेसौख्यमन्यथाचेत्सुदुःखभाक् ॥ ८८ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ८९॥ इति
कर्बुरयोगफलम् ॥ ८ ॥ व्ययेवाचाष्टमेक्रूराश्छिद्रेशोद्वादशेयदा ॥ कर्मेसौम्याधनेक्रूराश्चक्रयोगेमहत्सुखम् ॥९०॥ पूर्वंगंगातटेरुद्रस्तस्य
सेवाकृताबहु ॥ अस्मिञ्जन्मनितेनेहसौख्याधिक्योभवेन्नरः॥९१॥दाताचैवचभोक्ताचराजमान्योगुणाधिकः ॥ परोपकारीधर्मात्माकीर्ति
मांश्चबहुप्रजाः ॥ ९२ ॥ षोडशाब्देभवेत्सौख्यंपंचविंशात्स्वकेर्बलेः ॥ गजवाजिधनैर्युक्तोराजावाराजमंत्रिकः ॥९३॥ रुद्रसेवानुसारेणस

सुखीजायतेनरः ॥ गोत्रस्यपुरुषःकश्चिज्जठरेताडितस्ततः ॥ ९४ ॥ चिंताप्रजायतेतस्यसौख्यंचाल्पधनैःसदा ॥ सौख्यमध्येभवे
च्चिंतातिकस्माज्जायतेतदा ॥ ९५ ॥ षड्विंशेवाद्विचत्वारिंशेब्देस्याद्दीर्घवेदना ॥ उदरेवाकरेपादेजायतेनात्रसंशयः ॥ ९६ ॥ शुक्रउवाच ॥
किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ ॥ भृगुरुवाच ॥ ॥ रीतिपात्रंताम्रपात्रंपलंचैवचतुर्गुणम ॥ ९७ ॥ चंदनेनचकर्त्त
व्यंहाटकेनाष्टमंडलम् ॥ गोत्रिरूपंचतन्मध्येकृत्वाचबहुधार्चयेत् ॥ ९८ ॥ नवपट्टंपरीधायऊर्णापट्टोपरिस्थितः ॥ नवत्रयंरुद्रमंत्रंबी
जमंत्राक्षरंजपेत् ॥ ९९ ॥ द्विसहस्रंजपंकृत्वाततःपुण्यंसमाचरेत् ॥ भव्याश्वंहाटकंरौप्यंषट्कंविंशतिविंशति ॥ १०० ॥ अथवागां
सवत्सांचसप्तान्नंप्रस्थप्रस्थकम् ॥ अष्टोत्तरशतंमुद्रादातव्याःश्रद्धयान्वितैः ॥ १०१ ॥ एतद्दानप्रभावेणकष्टचिंताक्षयोभवेत् ॥ श्रुत्वानकु
र्वतेदानंतदाचत्रिषुजन्मसु ॥ १०२ ॥ देहेकष्टंधान्यधनसुतहीनस्तुजायते ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ १०३ ॥ इतिचक्र
योगफलम् ॥९॥ गुरुक्षेत्रेयदासूर्यःकुजक्षेत्रेथवागुरुः॥ केंद्रेवापिद्विकेवापिसुतेलग्नेशुभाशुभाः ॥१०४॥ मोदितेसुखसम्पत्तिर्गजवाजियुतः
सुखी ॥ महाराजामहामंत्रीधनाढ्योराजपूजितः ॥ १०५ ॥ बहुभृत्यसमृद्धिश्चनृपद्वारेषुकिंकरः ॥ पूर्वंबहुकृतंदानंहेमवाजिगजान्वितम् ॥
॥ १०६ ॥ तेनपुण्येनलोकेस्मिल्लँभतेनात्रसंशयः ॥ शुक्रउवाच ॥ एतत्फलंयदानास्तिकारणंकिंतपोधन ॥ १०७ ॥ भृगुरुवाच ॥ पूर्वे
जन्मनियत्स्थानंहृतंब्राह्मणवेश्मच ॥ एतत्पापानुसारेणफलहीनोभवेन्नरः ॥ १०८ ॥ वेदज्ञायचतद्दानंहेमवाजिधनान्वितम् ॥ पूर्वोक्तंतु
फलंयच्चतथाभवतिनिश्चितम्॥१०९॥कविनाचकृतःप्रश्नोभृगुणापरिभाषितः॥११०॥इतिमोदितंयोगफलम्॥१०॥शनिक्षेत्रेपरेचंद्रःषष्ठेष्टे
भौमभार्गवौ॥शनिर्वाछिद्रसंस्थानेदृष्टाःकर्मशुभाशुभैः॥१११॥तदासाधारणोयोगोजायंतेसर्वसम्पदः॥राजमानोधनंधान्यंक्षणेवृद्धिःक्षणेक्ष

यः ॥ ११२ ॥ नेत्रपीडाथवांकुब्जोराजरोगीभवेन्नरः ॥ पूर्वआसीत्प्रयागेतुमंत्रज्ञोबहुदर्शकः ॥११३॥अभिचारेणशत्रूणांनेत्रपीडांकृताबहु ॥
अतोबहुविधंदुःखंतस्यसंजायतेबहु॥११४॥शुक्रउवाच॥कस्मिन्नब्देभवेत्पीडाकेनोपायेननश्यति ॥ भृगुरुवाच॥द्वाविंशेथचषड्विंशेवर्षेस्या
न्नेत्रवेदना॥११५॥स्थीयतेंचवचःसत्यंतेजोहीनोदिनेदिने॥शुक्रउवाच॥किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम्॥११६॥ भृगुरुवाच ॥
नवास्त्रंमंडलंकार्यंवामेसव्यंचतंडुलैः॥शुक्राह्वोःशनेश्चैवमनून्पंचाक्षराञ्जपेत्॥११७॥त्रीणित्रीणिसहस्राणिपूर्वोक्तविधिनासह ॥ हाटकंचा
ष्टषट्कंचरजतंद्विगुणंतथा ॥ ११८ ॥ ताम्रपात्रंरुद्रपलंघृतेनपरिपूरितम् ॥ तत्पात्रंचसवत्सांगांश्रद्धायुक्तःप्रदापयेत् ॥ ११९ ॥ एतद्दा
नप्रभावेणरोगहीनस्तुजायते ॥ नेत्रपीडाक्षयंयातिदेहेसौख्यंधनंभवेत् ॥ १२० ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ १२१ ॥
इतिसाधारणयोगफलम् ॥ ११ ॥ सुतपेभार्गवक्षेत्रेक्रूरखेटेनसंयुतः ॥ कुजेक्षितोयदाजीवःक्रूरक्षेत्रेचतिष्ठति ॥ १२२ ॥ तदासर्वक्षयकरो
विनाशोयोगउच्यते ॥ पूर्वंगोत्रजकामिन्यांतेनस्थापनिकाकृता ॥ १२३ ॥ एतत्पापानुसारेणजायतेसंततिर्नहि ॥ गौरश्चपलवक्रश्चहर्षाधि
क्योमहोत्कटः ॥ १२४ ॥ स्वेच्छाचारीकृतक्षौद्रईदृशोजायतेनरः ॥ संतानंनभवेत्तस्यभवेद्यदिनजीवति ॥ १२५ ॥ एकोद्वौतिष्ठतोदैवा
च्छेषंचम्रियतेध्रुवम् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ १२६ ॥ भृगुरुवाच ॥ ताम्रपात्रंसप्तपलंद्विमुखोपरि
धारयेत् ॥ पद्मनाभमहामंत्रंसप्तबीजसमन्वितम् ॥ अर्द्धायुतंचतत्कार्यंपट्टद्वादशहाटकम् ॥ १२७ ॥ रजतंद्विगुणंवस्त्रमष्टोत्तरशतंकरम् ॥
सवत्सागो प्रदानेननाशयेत्सर्वपातकम् ॥ स्त्रीकंठेधारयेद्यंत्रंभौमेनक्तंचकारयेत् ॥ १२८ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः
॥ १२९ ॥ इतिविनाशयोगफलम् ॥ १२ ॥ तुर्येशोवाष्टलग्नेशःक्रूरोवाक्रूरसंयुतः ॥ तुर्येषष्ठाष्टमेरिष्फेपापाःक्रूरगृहेयदा ॥ १३० ॥ क्रूरो

वाशत्रुक्षेत्रस्थोयदाजीवोभवेत्तदा ॥ श्रीवत्सेसुखसंपत्तिर्जायतेनात्रसंशयः ॥१३१॥ पूर्वमृषेःकृतासेवातीर्थेगत्वापुनःपुनः ॥ देवार्चनंद्विजे
भक्तिंकृत्वातेनेहजन्मनि ॥ १३२ ॥ सुखीसुकर्मकृच्चैवाजीव्यकोबहुपुत्रकः ॥ बहुस्त्रीभिश्चसंयुक्तोबुद्धिमांश्चविचक्षणः ॥ १३३ ॥ कुल
मध्येप्रधानश्चगजवाजियुतोनरः ॥ मनःस्वस्थोभवेद्दाताधनाढ्यस्तामसीमतिः ॥ १३४ ॥ त्रिंशद्वर्षेगतेपश्चान्महासौख्यंप्रजायते॥ राजा
वाराजमान्यश्चकुबेरस्यसमोभवेत् ॥ १३५ ॥ चत्वारिंशद्गतेवर्षेदीर्घरोगःप्रवर्तते ॥ श्वासकासादिरोगाश्चजायंतेचमुहुर्मुहुः ॥ १३६ ॥ शुक्र
उवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ यंत्रंश्रीपद्मनाभस्यभूर्जपत्रेचलेखयेत् ॥ १३७ ॥ यक्षकर्दमसंयुक्तं
गंधपुष्पैःप्रपूजयेत् ॥ ऊर्णापट्टंचसुश्रेष्ठंचतुर्विंशकरैर्युतम् ॥ १३८ ॥ तस्योपरिसमासीनश्चायुतंजपमाचरेत् ॥ पद्मनाभत्रिबीजस्यकार
येद्विधिसंयुतः ॥ १३९ ॥ पट्टवस्त्रंपरीधायपूर्वोक्तविधिनासह ॥ ततोदानंप्रकर्त्तव्यंषट्कषोडशहाटकम् ॥ १४० ॥ रजतंद्विगुणंवस्त्रमष्टो
त्तरशतंकरम् ॥ ताम्रपात्रंरुद्रपलंघृतेनपारिपूरितम् ॥ १४१ ॥ ब्राह्मणायप्रदातव्यंश्रद्धाभक्तिसमन्वितैः ॥ गणेशस्यनृसिंहस्यतथैवब्रह्म
रुद्रयोः ॥ १४२ ॥ अयुतंचजपेद्भक्त्यासुवर्णादीन्प्रदापयेत ॥ एतद्दानप्रभावेणसुखभागीभवेन्नरः ॥ १४३ ॥ कविनाचकृतः
प्रश्नोभृगुणापरिभाषितः ॥ १४४ ॥ इतिश्रीवत्सयोगफलम् ॥ १३ ॥ उदयेचयदाराहुःसुखेष्टेवाव्ययेशनिः ॥ गुरौषष्ठाष्टमे
रिःफेपापाधर्मेसुतेथवा ॥ १४५ ॥ एतद्ग्रहानुसारेणयोगोराक्षससंज्ञकः ॥ अल्पायुर्जायतेबालःपुण्येनैवसजीवति ॥ १४६ ॥
सहस्राणिपंचकुजबीजमंत्राक्षरंजपेत् ॥ पश्चाज्जपानुमानेनत्रिगुणंदानमाचरेत् ॥ १४७ ॥ हाटकेसप्तषट्कंचभक्त्याचश्रद्धयान्वितः ॥
एतद्दानानुसारेणसर्वत्रविजयीभवेत् ॥ १४८ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ १४९ ॥ इतिराक्षसयोगफलम् ॥ १४ ॥

सहजस्थोयदाराहुःषष्ठेचैवशनैश्वरः ॥ व्ययस्थानेगुरुर्यस्यत्रिकोणेपापखेचराः॥ १५०॥ योगोयंमुद्भवोनामसुतहीनोथरोगयुक् ॥परिच्छि
न्नग्नेःसौख्यंजायतेनात्रसंशयः॥ १५१॥पंचबीजंनृसिंहस्यद्विसहस्रंजपंचरेत्॥ऊर्णापट्टोपरिस्थित्वापूर्वोक्तविधिनासह ॥१५२॥ षट्चत्वा
रिंशहेमरजतं च चतुर्गुणम् ॥ ताम्रपात्ररुद्रपलंगांसवत्सांपयोन्विताम् ॥ १५३ ॥ एतद्दानंप्रकर्त्तव्यंशुभेचंद्रेशुभेदिने ॥ एतद्दानानुसारेणपु
त्रोभ्राताचजीवति ॥१५४॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥१५५॥इत्युद्भवयोगफलम् ॥१५ ॥ लग्नेधर्मेधनेकर्मेक्रूराद्यूनेसुतेऽथ
वा ॥ नीचाधनेथवालग्नेयोगोयंभीषणोमतः ॥ १५६ ॥ तपस्वीनिंदितःपूर्वंसाध्वीस्त्रीचकलंकिता ॥ दानंकृत्वातत्पतयेपश्चात्तापादिकं
चरेत् ॥ १५७ ॥ प्राप्यतेचधनंधान्यंक्षणेवृद्धिःक्षणेक्षयः ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम्॥ १५८ ॥ भृगुरुवाच
शनेस्त्रीणिसहस्राणिकेतोर्द्वेचमनुंजपेत् ॥ ताम्रपात्रंरुद्रपलंतन्मध्येनवमंडलम् ॥ १५९ ॥ ऊर्णपट्टंचपुटितंकृत्वाशुद्धांघ्रिहस्तकः ॥
तस्योपरिसमासीनोविधिवज्जपमाचरेत् ॥ १६० ॥ जपांतेस्वर्णषट्कंचरूप्यषट्कंचदापयेत् ॥ रक्तवस्त्रंसप्तकरंद्विजेभ्यश्चप्रदापयेत् ॥ १६१ ॥
कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ १६२ ॥ इतिभीषणयोगफलम् ॥ १६ ॥ धर्मस्थानेयदाचार्किःसुतेक्रूरोथवाशशी ॥ परेधर्माय
गेभानौयोगोयंसौरनामतः ॥ १६३ ॥ सगर्भामारितापूर्वंवनेतेनशिखंडिनी ॥ एतत्कर्मानुसारेणपुत्रनाशोभवेद्ध्रुवम् ॥ १६४ ॥ शुक्र
उवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ सुवर्णपंचषट्कंचरजतंद्विगुणंततः ॥ १६५ ॥ ताम्रपात्रंसप्तपलंपंच
रत्नैश्चपूरितम् ॥ सहस्रंचजपंकृत्वापद्मनाभस्यमंत्रतः ॥ १६६ ॥ ततोदानंप्रकर्त्तव्यंसवत्सांगांस्वलंकृताम् ॥ पूर्वाभिमुखतःस्थित्वाशा
लग्रामस्यसन्निधौ ॥ १६७ ॥ एतद्दानानुसारेणप्राप्यंतेसुखसंपदः ॥ यदानकुरुतेदानंत्रिजन्मसुसुखंनहि ॥ १६८॥ कविनाचकृतःप्रश्नो

भृगुणापरिभाषितः ॥ १६९॥ इतिसौरयोगफलम् ॥ १७ ॥ मूर्तौक्रूरोयदाउच्चेत्रिकोणेचयदागुरुः ॥ सौरिःसौम्योऽथवालग्नेलाभेक्रूरोयदा
भवेत् ॥ १७० ॥ तदाहिनहुषोयोगोमंत्रीवानृपतिर्भवेत् ॥ पंडितोपिसुखीश्रीमान्भृगुणापरिभाषितः ॥ १७१ ॥ इतिनहुषयोगफलम् ॥
॥ १८ ॥ सुतस्थानेयदाक्रूराःसुतेशःक्रूरसंयुतः ॥ पापारिःफेधनेकेंद्रकेंद्रयोगस्तदोच्यते ॥ १७२ ॥ तीर्थसेवाकृतापूर्वमृषिभक्तिःकृतात
था ॥ अस्मिञ्जन्मनितेनायंधनाढ्योराजपूजितः ॥ १७३ ॥ धर्मात्माचसुखीभोगीपित्ताधिक्योभवेन्नरः ॥ बहुस्थानेऽन्नदाताचवर्तुल
प्रकृतिर्भवेत् ॥ १७४ ॥ अपुत्रोपिभवेत्सोपिपूर्वपापानुसारतः ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ १७५ ॥
भृगुरुवाच ॥ नवास्रमंडलंकृत्वातन्मध्येसिंहमालिखेत् ॥ चंदनेनचकर्त्तव्यंभूर्जपत्रेप्रयत्नतः ॥ १७६ ॥ ऊर्णापट्टोपरिस्थित्वा
तस्याग्रेजपमाचरेत् ॥ सप्तबीजाक्षरंमंत्रंनृसिंहस्यजपेत्सुधीः ॥ १७७ ॥ अर्द्धायुतंजपंकृत्वापूर्वोक्तविधिनासह ॥ ततोदानंप्रकर्त्त
व्यंयदहंकथयामिते ॥ १७८ ॥ ततश्चहाटकंसप्तषट्कंरूप्यंचतुर्गुणम् ॥ चतुर्दशपलंताम्रंघृतेनपरिपूरितम् ॥ १७९ ॥ अशनान्तेप्रदा
तव्यंसदक्षिणमनोहरम् ॥ ततश्चघोटकंशुभ्रंसर्वोपस्करसंयुतम् ॥ १८० ॥ सवत्सागौःप्रदातव्याब्राह्मणायप्रयत्नतः ॥ सप्तान्नंप्रस्थप्र
स्थंचवस्त्रंषष्टिकरोन्मितम् ॥ १८१ ॥ एतद्दानंप्रकर्त्तव्यंशालग्रामस्यसन्निधौ ॥ नृसिंहयंत्रंस्त्रीकंठेधारयेच्चदिवानिशम् ॥ १८२ ॥ पुत्र
दंतेप्रकर्त्तव्यंभौमेनक्तंतथाचरेत् ॥ चिरजीवीभवेत्पुत्रःसर्वत्रसुखवान्भवेत् ॥ १८३ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ १८४ ॥
इतिकेंद्रयोगफलम् ॥ १९॥ कर्मेशोपिसुखेशोपिलग्नेषष्ठेष्टमेव्यये ॥ स्वभेष्टमेयदाक्रूराःसौम्याःपापाःस्मरेतदा ॥१८५॥ कुलयोगस्तुविज्ञे
यस्तीर्थनिंदाकृतापुरा ॥ उद्वेगश्चभवेत्तस्यस्वल्पलाभेयथातथा ॥ १८६ ॥ आदौमध्येचसौख्यंचअंतेचधनसंभवम् ॥ अथवाभ्रातृहीनस्तुजा

यततामर्साभातः ॥१८७॥ शुक्रउवाच॥किंजाप्यंकस्यपूजाचाकिंदानचकिमौषधम् ॥ भृगुरुवाच ॥ [illegible] वसतबाजसमान्वतम् ॥
॥ १८८ ॥ विधिवद्यजपंकृत्वाततोदानंसमाचरेत् ॥ सवत्सांगांचदुग्धाढ्यांषट्टंद्वादशहाटकम् ॥ १८९ ॥ रजतंद्विगुणंवस्त्रंताम्रपात्रंचतु
ष्पलम् ॥ एतद्दानानुसारेणयोगदोषक्षयोभवेत् ॥१९०॥घृतपात्रंघृतैर्भृत्वाब्राह्मणायप्रदापयेत् ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः॥
॥१९१॥ इतिकुलयोगफलम्॥२०॥ सुतेशःशत्रुक्षेत्रस्थःशत्रुयुक्तोथपश्यति ॥ धर्मेलाभोदयेसौम्याः क्रूरैर्दृष्टाःसुतंगृहम् ॥ १९२ ॥ तदाम
तंगयोगोऽसौरुद्रसेवाकृतापुरा ॥ अत्रजन्मनितेनासौपितृसौख्याधिकोभवेत् ॥ १९३ ॥ बन्धुमित्रैश्चसंयुक्तःकीर्तिमांश्चबहुप्रजाः ॥ षोड
शेब्देविशेषात्तुसौख्यमात्मबलैर्भवेत् ॥१९४॥ गजवाजिधनैर्युक्तोराजावाराजमंत्रिकः ॥ रुद्रसेवानुसारेणईदृशोजायतेनरः ॥१९५ ॥ तप
स्वीनिंदितःपूर्वंतस्माद्धीनफलंलभेत् ॥ महाचिंताभवेत्तस्यसुतनाशस्यहेतुना ॥१९६ ॥ शुक्रउवाच ॥ किंजाप्यंकस्य पूजाचकिंदानंचकि
मौषधम् ॥१९७॥ भृगुरुवाच ॥ नवास्त्रमण्डलेमध्येतपस्विरूपमाचरेत् ॥ तदग्रेपद्मनाभस्यद्विसहस्रमनुंजपेत्॥१९८॥ततोदानंप्रकर्त्तव्यंष
ट्पिष्टंचहाटकम् ॥ रजतंद्विगुणंताम्रपात्रंपलचतुर्दशम् ॥१९९॥ अष्टोत्तरशतकरंवस्त्रंरक्तंचकंबलम् ॥ गोधूमंतंडुलंप्रस्थयुग्मंदद्याद्विशेषतः
॥ २०० ॥ गन्धद्रव्यंचदातव्यंगांचवैवत्ससंयुताम् ॥ ताम्रपात्रंघृतैर्भृत्वाजापकायप्रदापयेत् ॥ २०१ ॥ एतद्दानावसानेतुभौमेनक्तंसमाचरे
त् ॥ ततश्चश्रीफलंभव्यंमायामंत्रेणमन्त्रयेत्॥२०२॥ऋत्वंतेधारयेद्भार्यात्रिरार्तवदिनांतरम् ॥ एतद्दानोपचारेणप्राप्यतेसंततिर्ध्रुवम्॥२०३॥
दीर्घायुर्जायतेबालःसुखसंपत्तिमान्भवेत् ॥ पद्मनाभमहायंत्रंबाहौशिरसिधारयेत् ॥ २०४ ॥ राजमान्योधनाढ्यश्चसर्वत्रसुखवान्भ
वेत् ॥ दानाभावेमहादुःखंपुत्रैरपिधनैरपि ॥ २०५ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ [illegible]र्वरोगी इतिमातंगयोगफ

२ तीर्थसेवाकृता ... पलवक्ताचदि संहि-
लम् ॥ २१ ॥ शुक्रक्षेत्रेकुजःसौरिःषष्ठाष्टद्वादशोदये ॥ त्रिकोणेष्टमपेदौवातदायोगोहिपंकजः ॥ ... धिपः ॥ गजवा
व्यंगोमृदुलोचनः ॥ कचाल्पोमधुरोवाग्मीकपालेचातिसुंदरः ॥ २०८ ॥ धनाढ्योऽथसुखीभोगीराजमान्योधनाधिपः ॥ गजवा
जिवनैर्युक्तःस्वभृत्यानांचपोषकः ॥२०९॥ पीडासंप्राप्यतेकिंचिद्यदास्थादारुणाभवेत् ॥ तस्माद्दानंजपंचैवमध्येमध्येप्रदापयेत्॥२१०॥
प्रथमैकादशेषष्ठेद्वितीयेचाष्टपंचमे ॥ अकस्माज्जायतेकष्टंमासेवावत्सरेऽपिवा ॥ २११॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकि
मौषधम् ॥ भृगुरुवाच ॥ कुजेत्रीणिशनौसप्तबीजमंत्राक्षरंभवेत् ॥ २१२ ॥ नवास्रमंडलस्याग्रेद्विसहस्रंजपंचरेत् ॥ द्वाविंशतिपलैस्ताम्रैः
शिशुंमध्येनिवेशयेत् ॥२१३॥ दिव्यगन्धेनाभिमंत्र्यस्नानंगंधोदकैः स्मृतम्॥ तत्पात्रंचघृतैर्भृत्वापंचरत्नसमन्वितम्॥२१४॥हाटकंचाध
षट्कंचकंबलंरक्ततंतुकम् ॥ एतद्दानप्रभावेणउग्रपीडाविलीयते ॥ भूर्जेनवग्रहंयंत्रंलिखित्वायक्षकर्दमैः ॥२१५॥ धारयेत्कंठबाह्वोर्वायोगदोष
क्षयोभवेत् ॥ कविनाचकृतः प्रश्नोभृगुणापरिभाषितः ॥ २१६ ॥ इतिपंकजयोगफलम् ॥ २२ ॥ धनेधर्मेव्ययेक्रूरालग्नेशःक्रूरसंयुतः ॥
गर्भकालेपितुःपीडावधबंधसमागमः ॥२१७॥ योगोऽयंपावकोनाममहाकष्टप्रदोभवेत् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकि
मौषधम् ॥२१८॥ भृगुरुवाच ॥ षष्ठाष्टमेशधनपपापखेटमनूञ्जपेत् ॥ द्विसहस्रमिताञ्छुद्धकरपादःसुखस्थितः ॥२१९॥ आसनांतंतदादा
नमदद्यावन्मनोहरम् ॥ सर्वोपस्करसंयुक्तंसवत्सागौःपयस्विनी ॥२२०॥ हाटकंदशषट्कंचषड्गुणंरजतंतथा ॥ दिव्यकंबलवस्त्रंचदद्यादेवनसं १७
शयः ॥ २२१ ॥ एतद्दानप्रभावेणचिंताकष्टंविनश्यति ॥ ...पुत्रोलभतेपुत्रंमृतवत्साप्रसूयते ॥ २२२॥ एनाभावेमहाकष्टंभृगुणापरिभाषि
तम् ॥ २२३ ॥ इतिपावकयोगफलम्॥२३॥ क्रूरक्षेत्रेयदासौम्याःसौम्यक्षेत्रेचपापकाः ॥ शत्रुक्षेत्रेग्रहाः ... ... योगस्तदाभवेत्॥२२४॥

सुखीचजायतेबालः पूर्वजन्मप्रसादतः ॥ धनधान्ययुतोनित्यंमहाराजस्यसेवकः ॥२२५॥ दीर्घरोगीमहापुत्रा जायतेनात्रसंशयः ॥ गुरुव
वाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥२२६॥ भृगुरुवाच ॥ नवास्त्रमंडलंकृत्वाऊर्णापट्टेनवेष्टितः ॥ त्रिसहस्त्रंजपेज्जाप्यंततो
दानंप्रदापयेत् ॥२२७॥ एकाग्रमनसाभक्त्यारुद्रमन्त्रंनवत्रयम् ॥ हाटकंषोडशंपट्टंरजतंचतथैवहि ॥२२८॥ रक्तवस्त्रंतथादिव्यंपंचषष्टिकस
णिच ॥ गोसहस्त्रप्रदानेनसर्वतापःप्रलीयते ॥२२९॥ प्राप्यतेधनधान्यंचसर्वव्याधिक्षयोभवेत् ॥पुत्रंचलभतेभद्रंदीर्घायुष्यमरिंदम ॥२३०॥
इतिशिवयोगफलम् ॥२४॥ शनिक्षेत्रेयदाराहुःपंचमेसुकृतोदये ॥ रविभौमौसुतस्थानेदृश्यतांधूम्रयोगकः ॥ २३१॥ धूम्रकेबालहत्याचकृ
तापूर्वेहिजन्मनि ॥ तेनपापेनरोगित्वमपुत्रत्वंचजायते ॥ २३२ ॥ राहोःसप्तशतंत्रीणिसहस्त्राणिमनुंजपेत् ॥ पश्चाद्दानंचकर्त्तव्यंसप्तषट्कंचहा
टकम् ॥ २३३ ॥ द्विगुणंरजतंवस्त्रंकरैर्वैसप्तभिर्मितम् ॥ गोधूमंतंडुलंप्रस्थंगांसवत्सांपयस्विनीम् ॥ २३४ ॥ ताम्रपात्रंरुद्रपलंघृतेन
परिपूरितम् ॥एतद्दानप्रभावेणचिरंजीवीसुतोभवेत् ॥२३५॥रोगाःसर्वेक्षयंयांतितद्दानस्यप्रभावतः॥श्रुत्वैवंचप्रदातव्यंभृगुणापरिभाषितम्॥
॥२३६॥इतिधूम्रयोगफलम्॥२५॥शनिस्तृतीयेदशमेव्ययेचभुजेथवास्याद्यदिजन्मकाले ॥ तदासगर्भ्योनभवेत्सुतस्ययद्वाभवेन्मृत्युमुपैति
शीघ्रम् ॥२३७॥ नवत्रयंमंत्रमिनस्यसौरेःकुजस्यजाप्यंत्रिसहस्त्रसंख्यम्॥२३८॥ततश्चदानंकुर्वीतसुवर्णदशभारकम्॥अष्टोत्तरशतकंरक्तव
स्त्रंचयत्नतः ॥ प्रस्थद्वयंसप्तधान्यंघृतेनचसमन्वितम् ॥ २३९ ॥ एतद्दानप्रभावेणभ्रातातस्यहिजीवति ॥२४०॥ इतिक्रमयोगफलम् ॥
॥२६॥ भौमक्षेत्रेयदाशुक्रःशुक्रक्षेत्रेयदाकुजः ॥ षष्ठाष्टमेचवाजीवस्तन्वधीशोरिपोर्गृहे ॥२४१॥ योगोयंचत[illegible]मधनाढ्योराजपूजितः ॥
सुखीभोगीचकामीचबहुस्थानेषुदानकृत् ॥ २४२ ॥ संतानविषयेचिंतातथारोगसमुद्भवः ॥ अष्टत्रिंश[illegible]र्वरोगीप्रजायते ॥२४३॥

तपस्वीमारितःपूर्वेततोदुःखंसुनिश्चितम् ॥ चत्वारिंशेचवर्षेतुकष्टंचिंताव्ययोभवेत् ॥ महारोगोभवेत्तस्यपूर्वपापानुसारतः ॥ २४४ ॥
तपस्विरूपं ताम्रपात्रंरुद्रपलंतन्मध्येनकमंडलम् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ २४५ ॥ भृगुरुवाच ॥
ततश्च श्रद्धायुतंचकर्त्तव्यंपूर्वोक्तविधिनासह ॥ २४७ ॥ कृत्वाचतन्मध्येचंदनेनच ॥ २४६ ॥ तदग्रेकारयेज्जाप्यंरुद्रमन्त्रंनवत्रयम् ॥
चतुःप्रस्थंचतुः वस्त्रंरक्तंचमाषान्नंमुद्गगोधूमतंडुलम् ॥ षट्त्रिंशंचस्वर्णरूप्यंचतुर्गुणम् ॥ सवत्सागौःप्रदातव्याअष्टोत्तरशतकरम् ॥२४८॥
कर्मेशःक्रूरसंयुक्तः इतिचतुरयोगफलम् ॥ २७ ॥ प्रस्थंदापयेच्छ्रद्धयान्वितः ॥ २४९ ॥ एतद्दानप्रभावेणसर्वचिन्ताविलीयते ॥२५०॥
सुवर्णधान्यदानंच पूर्वंसहस्रधेनूश्चदत्त्वाब्राह्मणभोजनम् ॥ शुक्रक्षेत्रेचशुक्रयुक् ॥ क्रूराःसौम्याःपरेलग्नेवर्द्धमानस्तदाभवेत् ॥ २५१ ॥
एतद्दानंचदत्त्वा नीचेकुलेऽपिसंजातोमहाराजोभवेन्नरः ॥ २५३॥ कृतंतेनेहजन्मनि ॥२५२॥ महाराजोथवामंत्रीधनाढ्योराजपूजितः ॥
प्राप्नोतिसद्दशंसौख्यं षोडशेदशमेवाब्देराजमान्योनरोभवेत् ॥ तुपश्चात्तापमकारयत् ॥ पुनस्तुष्टिःपुनर्निन्दाकृतातेनेहजन्मनि ॥२५४ ॥
एकविंशेथवात्रिंशे पश्चात्तापप्रभावेणदेहेकष्टंप्रवर्तते ॥२५६॥ नृपद्वारेषुकिंकरः ॥ २५५ ॥ सौख्यंचलभतेशीघ्रंवृद्धकालेनसंशयः ॥
संताननंभवेत्तस्यजातोपिच अथसन्तानहेतोश्चमहाचिंताप्रवर्त्तते ॥ वर्षेरोगस्यसंभवः ॥ क्षणेसौख्यंक्षणेकष्टंजायतेचमुहुर्मुहुः ॥ २५७ ॥
रीतिपात्रंत्रिंशपलंताम्रपात्रंपलान्दश ॥ नजीवति ॥ २५८ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥
तस्योपरिसमासीनोरुद्रमंत्रंनव ऊर्णापट्टंहरिद्रर्णंचतुर्विंशत्पुटीकृतम् ॥ २६० ॥ ॥ २५९ ॥ नवास्त्रमंडलंकुर्याच्चंदनैःकुंकुमादिभिः ॥
रजतंद्विगुणंकांस्यंकरमध्ये ततोदानंप्रकर्त्तव्यंत्रिंशत्पट्टंचहाटकम् ॥ त्रयम् ॥ अयुतंचजपेच्छुद्धोमहादेवस्यसन्निधौ ॥ २६१ ॥

त्तरंशतम् ॥ २६२ ॥ भैव्याश्वसुदृढंरम्यंसवत्सांमांत्रदापयेत् ॥ जापकायप्रदातव्यंगोयुगंवस्त्रसंयुतम् ॥ २६३ ॥ एतद्दानप्र
भावेणपुत्रीरोगविवर्जितः ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ २६४ ॥ इतिवर्द्धमानयोगफलम् ॥ २८ ॥ शनिक्षेत्रेयदा
जीवोजीवक्षेत्रेचमंगलः ॥ सुतेशःशुभगेहस्थस्तुर्येषष्ठाष्टमेयदा ॥ २६५ ॥ सुतेशोपिगुरुस्थानेदृश्यतेवाकुजेक्षितः ॥ तदा
हिवीरयोगोसौजायतेनात्रसंशयः ॥ २६६ ॥ विधवागर्भमुत्पाद्यपूर्वपापंकृतंयतः ॥ तेनसंतानहीनोऽसौजायतेनात्रसंशयः ॥
॥ २६७ ॥ संतानंप्राप्यतेनापितस्यरोगोमहान्भवेत् ॥ गौरःकृशोमहावाग्मीयशःश्रीगुणवानपि ॥ २६८ ॥ पित्ताधिक्योभवेद्वी
रोजायतेचमुहुर्मुहुः ॥ प्रियवाक्योल्पदाताचकिंचिच्चिह्नंकटौभवेत् ॥ २६९ ॥ अचिरात्पापसयोगेएतद्भवतिलक्षणम् ॥ शुक्रउवाच॥ किंजा
प्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ २७० ॥ भृगुरुवाच ॥ चंदनैर्भूर्जपत्रेतुकारयेत्पंचमंडलम् ॥ सुशोभनेताम्रपात्रेपलद्वादशनिर्मिते
॥ २७१ ॥ कारयेन्मंडलंपश्चान्महारुद्रस्यसन्निधौ ॥ पंचबीजाक्षरंमंत्रंमहादेवस्यजापयेत् ॥ २७२ ॥ ततोदानंप्रकर्त्तव्यमष्टषट्कंचहाटकम्॥
एतद्दानप्रभावेणसंततिःप्राप्यतेध्रुवम् ॥ २७३ ॥ अरोगीचभवेत्सत्यंतत्पुण्यंलभतेयदा ॥ २७४ ॥ इतिवीरयोगफलम् ॥ २९ ॥ सुतपः
शुभगेहस्थःसुतेधर्मेकुजेक्षितः ॥ षष्ठाष्टमेसुखेरिःफेधर्मेशौचेप्रमादकः ॥ २७५ ॥ पूर्वंकृतातीर्थसेवातीर्थेवैगाहनंपुनः ॥ गोदानंचकृतंपश्चा
द्गत्त्यातेनेहजन्मनि॥२७६॥सुरूपीचगुणीवक्ताधनाढ्योराजपूजितः॥ शांतोमानीस्वल्पदश्चपितृसौख्याधिकोभवेत् ॥२७७॥ मुखेमधुर
भाषीचहृदिहालाहलोपमः ॥ संतानंनभवेत्तस्यभवेच्चेव्याधिपीडितम् ॥ २७८ ॥ महादानप्रभावेणतस्यशांतिर्भवेद्ध्रुवम् ॥ २७९ ॥
इतिप्रमादयोगफलम्॥३०॥धर्मेतुर्येभवेत्सौम्यःसौम्यक्षेत्रेविशेषतः॥ त्रिषडेकादशेक्रूराःहंसेशक्रसमोनृपः॥२८०॥इतिहंसयोगफलम् ३१॥

सुखेकर्मेयदाक्रूरालग्नेचापिषडष्टके ॥ लग्नेलग्नपतौक्रूरेतदावैबर्बरोभवेत् ॥ २८१ ॥ मासेब्देप्रथमेचिंतापितृतोमातृतोऽपिवा ॥
धनव्ययोमहाकष्टंजायतेनात्रसंशयः २८२ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ ब्राह्मणान्भोजये
त्पुत्रह्यष्टोत्तरशतोन्मितम् ॥ २८३ ॥ दक्षिणाचप्रदातव्यायेनसंतुष्टताभवेत् ॥ एतत्कर्मप्रभावेणपूर्वदोषोविनश्यति ॥ २८४ ॥ कविनाच
कृतःप्रश्नोभृगुणापरिभाषितः ॥ २८५ ॥ इतिबर्बरयोगफलम् ॥ ३२ ॥ सुतेशःक्रूरसंदृष्टःलग्नेषष्ठाष्टमेव्यये ॥ क्रूरैर्दृष्टंसुतस्थानंगोलयोग
स्तदाभवेत् ॥ २८६ ॥ ब्रह्महिंसागुरोर्निन्दाकृतातेनेहजन्मनि ॥ संतानंनभवेत्तस्यदीर्घरोगस्तदाभवेत् ॥ २८७ ॥ गौरश्चपलवक्ताचकृशः
क्रोधीप्रियंवदः॥किंचित्कपटकृन्मानीआत्मकार्येचतत्परः ॥ २८८ ॥ कटिबंधेस्यचिह्नंस्याच्छीघ्रोद्वेगीसकृद्रिपुः ॥शुक्रउवाच॥ किंजाप्यं
कस्यपूजाचकिंदानंचकिमौषधम् ॥ २८९ ॥ भृगुरुवाच ॥ गोदानंमहिषीदानंभव्याश्वंसप्तहाटकम् ॥ श्रीफलंचप्रदातव्यंस्वर्णयुक्तपरिच्छदम्
॥ २९० ॥ एतद्दानप्रभावेणप्राप्यतेसंततेःसुखम् ॥ रोगार्थंपद्मनाभस्यविधिवन्मंत्रमुत्तमम् ॥ २९१ ॥ लिखित्वाशिरसाधार्यंरोगहीनस्ततो
भवेत् ॥२९२॥ इतिगोलयोगफलम् ॥ ३३ ॥ सुतेधर्मेथवारिःफेक्रूराभौमेक्षितायदा ॥ सुतेशःपंचमंपश्येत्सौम्याःकेन्द्रत्रिकोणगाः२९३॥
ध्वजयोगस्तस्ययोगाद्भाग्यवांश्चमहासुखी ॥ ऋषिसेवाप्रभावेणराजतुल्योनसंशयः ॥ २९४ ॥ पुनरेवकृतंपापंमार्जारीसुतसंयुता ॥ मारि
तातेनपापेनरोगीवाऽपुत्रिकोनरः ॥ २९५ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ त्रिसहस्रंजपःकार्यो
महादेवस्यसन्निधौ ॥ २९६ ॥ दशपङ्क्तंसुवर्णस्यगवांचैवशतंतथा ॥ एतद्दानंप्रकर्त्तव्यंरोगनाशोभवेद्ध्रुवम् ॥ २९७ ॥ कविनाचकृतःप्रश्नोभृगु
णापरिभाषितः ॥ २९८ ॥ इतिध्वजयोगफलम् ॥ ३४ ॥ लाभेशोवासुतेशोवासुखेकर्मोदयेयदा ॥ सौम्यखेटान्वितंलग्नंमणियोगस्तदोच्य

ते ॥ २९९ ॥ गुणवान्धर्मबुद्धिश्चत्यागीभोगीसुरार्चकः ॥ स्वातंत्र्याल्लभतेसौख्यंचत्वारिंशाब्दतोध्रुवम् ॥ ३०० ॥ विनोदीसत्कविर्वा
ग्मीधनधान्यसमन्वितः ॥ वृद्धकालेमहत्सौख्यंप्राप्यतेभृगुंभाषितम् ॥ ३०१ ॥ इतिमणियोगफलम् ॥ ३५ ॥ लाभेशोऽपिसुखेशोवा
लाभेवायेपरेऽथवा ॥ पापायदिधनेधर्मेकुबेरोयोगउच्यते॥३०२॥पूर्वंपात्रेकृतंदानंपंचगव्याशनंकृतम् ॥ सुतीर्थेमरणंप्राप्तंतेनासावत्रजन्म
नि ॥ ३०३ ॥ सुखीसुकर्मकृच्चैवगजवाजिधनान्वितः ॥ सर्वलक्षणसंपूर्णोनानागुणविशारदः ॥ ३०४ ॥ ततःकष्टंभवेत्किंचिदंतेहीनफलं
लभेत् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम्॥३०५॥भृगुरुवाच॥पद्मनाभस्यमंत्रंचपंचबीजात्मकंजपेत्॥अर्द्धायुतज
पंकृत्वातदंतेदानमाचरेत् ॥ ३०६ ॥ सप्तषष्टंशुभंहेमरजतंद्विगुणंतथा॥श्रीफलंहेमसंयुक्तंशतहस्तंनवांबरम्॥३०७ ॥ एतद्दानंप्रकर्त्तव्यंरोग
हीनःसुखीभवेत् ॥ अन्यथादीर्घरोगेणदुःखंप्राप्नोतिमानवः ॥ ३०८ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः॥ ३०९ ॥ इतिकुबेरयोग
फलम् ॥ ३६ ॥ शनैश्चरोरिपुक्षेत्रेपंचमेजन्मनिस्थितः ॥ सिंहस्थितेनरविणावीक्षितश्चेद्भवेत्ततः॥३१०॥ लाभेव्ययेषष्ठाष्टमेक्रूराःस्युर्यदिखे
चराः ॥ अन्यत्रचशुभाःखेटाःसिंहयोगस्तदोच्यते ॥ ३११ ॥ धनीमानीमहाक्रोधीरोगीसंततिदुःखितः॥ जातायामपिसंतत्यांसाकालेन
विनश्यति ॥ ३१२ ॥ शुक्रउवाच॥किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम्॥भृगुरुवाच॥अष्टासंकमलंकृत्वाशनिरूपंचचंदनैः॥३१३॥
कारयेत्ताम्रपात्रेषुततोजाप्यंसमाचरेत् ॥ रवौपंचकुजेत्रीणिबीजमंत्राक्षरान्वितम् ॥ ३१४ ॥ द्विसहस्रंचरेज्जाप्यंततोदानंसमाचरेत् ॥ रज
तंदशपट्टंचसप्तषष्टंचहाटकम् ॥ ३१५ ॥ गोसहस्रंचवस्त्रंचरक्तंषष्टिकरोन्मितम् ॥ स्त्रीभ्योदद्यादलंकारान्भौमवारेचयत्नतः ॥ ३१६ ॥ एत
द्दानोपचारेणचिरायुःसंततिर्ध्रुवम् ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ३१७ ॥ इतिसिंहयोगफलम् ॥ ३७ ॥ लग्नेशःक्रूरसंयुक्तः

शत्रुयुक्तोथवाभवेत् ॥ षष्ठाष्टमेव्ययेतुर्येव्ययेक्रूराःसुतेऽथवा ॥ ३१८ ॥ त्रयःसौम्याधनेचांतेयोगःकेदारसंभवः ॥ अतिथौचकृताभक्तिः
पूर्वेतीर्थेपुनःपुनः ॥ ३१९ ॥ तत्पुण्यस्यप्रभावेणभवेदिहचजन्मनि ॥ गौरश्चपलवक्ताचबुद्धिमांश्चध्रुवंधनी ॥३२०॥ कुलमध्येप्रधानश्चदा
ताभोक्ताबहुप्रदः ॥ व्रणंवाहिभवेत्तस्यदेहेतल्लक्षणंध्रुवम् ॥ ३२१ ॥ विंशद्वर्षतऊर्ध्वंचयावत्स्यात्पंचविंशतिः ॥ महासौख्यंमहाराज्यंलभ्य
तेचनसंशयः ॥ ३२२ ॥ ततोवर्षद्वयंसम्यक्प्रकारेणमहासुखम् ॥ त्रिंशद्वर्षेगतेनूनंमहासौख्यंप्रजायते ॥ ३२३ ॥ चत्वारिंशद्गते
राज्यंशत्रुयुक्तंनसंशयः ॥ संतानंनभवेत्तस्यभवेद्वापिनजीवति ॥ ३२४ ॥ पक्षरोगोभवेद्देहेराजरोगोथवाभवेत ॥ पूर्वजन्मानुसारेणकं
ठरोगःप्रजायते ॥ ३२५ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच॥ताम्रपात्रंरुद्रपलंतन्मध्येनवमं
डलम् ॥ ३२६ ॥ चंदनेनचकर्त्तव्यंसाध्वीरूपंमुनेर्युतम् ॥ ऊर्णापट्टंहरिद्वर्णंचतुर्विंशत्पुटैःकृतम् ॥ ३२७ ॥ तस्योपरिसमासीनोरुद्रमंत्रंन
वत्रयम् ॥ जाप्यंसहस्रद्वितयंकुर्यात्पूर्वविधानतः॥३२८॥ततोदानंप्रकर्त्तव्यंशक्रषट्कंचहाटकम्॥रजतंद्विगुणंवस्त्रमष्टोत्तरशतोन्मितम् ३२९
प्रस्थंप्रस्थंचमाषान्नंदत्त्वाचैवविशेषतः ॥ पंचप्रस्थंघृतंचैवमासनंसुमनोहरम् ॥ ३३० ॥ सर्वाभरणसंयुक्तंगुप्तदानंप्रदापयेत्॥एतद्दानप्रभा
वेणजायतेसुफलंसुखम् ॥ ३३१ ॥ राजरोगःक्षयंयातिपुण्यंसौख्यंदिनेदिने ॥ नकुर्याच्चयदादानंतदादुःखीनसंशयः ॥ ३३२ ॥ कवि
नाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ३३३ ॥ इतिकेदारयोगफलम् ॥ ३८ ॥ कर्मेशःक्रूरसंयुक्तोमित्रक्षेत्रेभवेद्यदा ॥ त्रिकोणेवापिमध्य
स्थोजीवोवाभृगुभूमिजौ ॥ ३३४ ॥ तदाचकारकोयोगोह्यल्पायुर्जायतेनरः ॥ यदिजीवतिबालोसौनृपतुल्यःसुखीभवेत् ॥ ३३५ ॥ गौर
श्चपलवक्ताचदीर्घदर्शीबलोत्कटः ॥ पित्रादिमातृबंधूनांजायतेवल्लभोत्तमः ॥ [illegible] ॥ भ्रातृचिंताभवेत्तस्यपूर्वपापानुसारतः ॥ [illegible]

पुत्रहंतासीत्पूर्वतीर्थेनसंशयः ॥३३७॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचाकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ ताम्रपात्रांत्रशपलतन्मध्य
नवमंडलम् ॥ ३३८ ॥ चन्दनेनचकर्त्तव्यंतदग्रेजपमाचरेत् ॥ भौमत्रिबीजमंत्रंतुएकादश्यांजपेन्नरः ॥ ३३९ ॥ ततोदानंप्रकर्त्तव्यंषट्कंषट्कं
चहाटकम् ॥ रजतंद्विगुणंरक्तंवस्त्रंशतकरंततः ॥३४०॥ सप्तान्नंदापयेत्प्राज्ञःपंचप्रस्थसमन्वितम् ॥ तथाप्रस्थद्वयंतैलंदापयेच्छ्रद्धयान्वितः॥
॥ ३४१ ॥ भौमयंत्रंचदानान्तेबालःकंठेचधारयेत ॥ एतद्दानोपचारेणभ्रातुर्भवतिजीवनम् ॥ ३४२ ॥ कविनाचकृतःप्रश्नोभृगुणापरिभा
षितः ॥ ३४३ ॥ इतिकारकयोगफलम् ॥३१॥ व्ययेवाचाष्टमेक्रूराःछिद्रेशेद्वादशेपरे ॥ क्रमेक्रूराधनेक्रूरागन्धर्वश्चमहासुखम् ॥ ३४४ ॥
पूर्वगंगातटेतेनरुद्रसेवाकृताबहु ॥ अस्मिञ्जन्मनितेनेहपितृतोषोबहुप्रजाः ॥ ३४५ ॥ षोडशाब्देतथाविंशेसौख्यमात्मबलैर्भवेत् ॥
गजवाजिगणैर्युक्तोराजावाराजमंत्रिकः ॥३४६॥ रुद्रसेवानुसारेणईदृशोजायतेनरः ॥ तपस्वीनिंदितः पूर्वंतस्माद्धीनफलंभवेत॥३४७॥
चिंताचजायतेतस्यसौख्यंचाल्पधनंसुतम् ॥ सौख्यमध्येतस्यचिंताअकस्माज्जायतेध्रुवम् ॥ ३४८ ॥ षड्विंशेचापिचत्वारिंशाब्देस्याद्दीर्घवे
दना ॥ उदरेवाकरेपादेबहुकालंप्रजायते ॥ ३४९ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचाकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ रीतिपात्रं
चवाताम्रंचतुर्दशपलात्मकम् ॥ ३५० ॥ चंदनेनचकर्त्तव्यंतन्मध्येनवमंडलम् ॥ तपस्विरूपकंमध्येकृत्वासंशुद्धमानसः ॥ ३५१॥ ऊर्णा
पट्टोपरिस्थित्वारुद्रमंत्रंनवत्रयम् ॥ जपंचतुःसहस्रंचकृत्वारूपंविभावयेत् ॥ ३५२॥ कृत्वाजपंततोदानंदद्याद्विप्रायसादरम् ॥ सर्वोपस्कर
संयुक्तमष्टषट्कंचहाटकम् ॥३५३॥ रजतंषोडशषट्कंचवस्त्रषष्टिकराणिच ॥ मुद्गगोधूममाषान्नंतंडुलंचविशेषतः॥३५४॥ चतुःप्रस्थंचतुःप्रस्थं
मुद्राअष्टोत्तरंशतम् ॥ एतद्दानानुसारेणचिन्ताकष्टंविनश्यति ॥ ३५५ ॥ दानाभावेमहाकष्टंभृगुणापरिभाषितम् ॥३५६॥ इतिगांधर्वयोग

फलम् ॥ ४० ॥ धनेपापाःपरेसौम्याजीवशुक्रारकेंद्रगाः ॥ त्रिपञ्चमगतःसौरिर्भृंगरीटिस्तदाभवेत् ॥ ३५७ ॥ सुरूपश्चपलोवक्तामृदु कायःसुखीपुमान् ॥ धनव्ययैर्महाचिंतांसंप्राप्नोतिनसंशयः ॥ ३५८ ॥ वृद्धकालेमहासौख्यंभवेत्पुण्यप्रभावतः ॥ शुक्रउवाच ॥ किंजाप्यं कस्यपूजाचकिंदानंचकिमौषधम् ॥३५९॥ भृगुरुवाच ॥ शंकरस्यचदुर्गायाबीजमंत्राक्षराणिच ॥ द्विसहस्रंजपंकुर्यान्नद्यास्तीरेविशेषतः ॥ ॥ ३६० ॥ शंखंधृत्वात्रिकंयोनिमुद्रांकृत्वाजपंचरेत् ॥ पूर्वोक्तविधिनासम्यक्ततोदानंसमाचरेत् ॥३६१॥ गोधूमंचचतुःप्रस्थंसप्तप्रस्थाचश र्करा ॥ आज्यंसार्द्धद्वयप्रस्थमर्द्धषट्कंचहाटकम् ॥३६२ ॥ दिव्यांबरयुगंदद्याद्देव्यैदेवाययत्नतः ॥ गुरोर्वाक्यानुसारेणपूजाकार्याविशेषतः ॥ ॥३६३॥ दानाभावेमहादुःखंभृगुणापरिभाषितम् ॥ इतिभृंगरीटियोगफलम् ॥४१॥ रविक्षेत्रेयदाजीवोजीवक्षेत्रेभृगुर्यदा ॥ भृगुक्षेत्रेयदासौरिः केंद्रेवाथधनेसुखे ॥ ३६४ ॥ उच्चेवास्वगृहेवापिभृगुर्वार्कगुरूयदि ॥ पद्माख्ययोगतःसम्यक्सुसमहापुरुषोभवेत् ॥३६५॥ सप्तमेचभवेन्मुक्तिर्भव त्येवनसंशयः ॥ अकस्माज्जायतेदुःखंपूर्वजन्मप्रभावतः ॥३६६॥ अच्युतस्यत्रिबीजंतुजपंकुर्यात्प्रयत्नतः ॥ ततोदानंप्रकर्त्तव्यंसप्तषट्कंचहाट कम् ॥ ३६७ ॥ अश्वंगांचसचैलंचबहुमूल्यमनोहरम् ॥ सर्वोपस्करसंयुक्तंकंबलंरक्ततंतुकम् ॥३६८॥ एतद्दानप्रभावेणयावज्जीवंसमृद्धि मान् ॥ कविनाचकृतःप्रश्नोभृगुणापरिभाषितः ॥ ३६९ ॥ इतिपद्माख्ययोगफलम् ॥४२ ॥ सुखेलग्नेयदासौम्याधर्मेपापारिपोर्गृहे ॥ स्व हेत्रीणिचत्वारिकर्मेशोचेसुखीपुमान् ॥३७०॥ ब्रह्मयोगेतुसंजातःपुमान्पित्रधिकोभवेत् ॥३७१॥ जन्मतोहिपितुःसौख्यंजायतेचदिनेदिने ॥ ॥ ३७२ ॥ कैत्वार्षीर्निंदितःपूर्वंपश्चाद्दुःखीभवेच्चसः ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ ३७३ ॥ भृगुरुवाच ॥ [illegible] ततोदानंप्रदापयेत् ॥ कृत्वाचभूर्जपत्रेषुततोदानंप्रदापयेत् ॥३७४॥ सुवर्णंदशषट्कंचरूप्यमुद्रास्तुषोडश ॥३७५॥ वर्द्धने

प्रयित्वातुलस्यादष्टोत्तरंशतम् ॥ ३७६ ॥ एतद्दानप्रभावेणपुत्रपौत्रीविशेषतः ॥ महत्सुखंभवेत्तस्ययावज्जीवंनसंशयः ॥ ३७७ ॥ सर्वत्रचमहावाग्मी पण्डितःस्याज्जितेंद्रियः ॥ सर्वोपस्करसंयुक्तोगुरुभक्तःसदानरः ॥ ३७८ ॥ मध्यकालेविपद्दुःखंभृगुंशुक्रःसपृष्टवान् ॥ शुक्रउवाच ॥ किं जाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ ३७९ ॥ भृगुरुवाच ॥ सुवर्णदशषट्कंचरजतंद्विगुणंतथा ॥ एतद्दानप्रभावेणचिरंजीवीसमृद्धि मान् ॥ ३८० ॥ हरध्यानवशात्पश्चात्कुबेरस्यसमोभवेत् ॥ दानाभावेमहादुःखंभृगुणापरिभाषितम् ॥ ३८१ ॥ इतिब्रह्मयोगफलम् ॥ ४३ ॥ जायाधीशोरिपुक्षेत्रेक्रूरयुक्तोथपश्यति ॥ जायास्थानेयदाक्रूराक्रूराजायागृहेयदा ॥ ३८२ ॥ योगोयंसमरोनाममहाराजाभवि ष्यति ॥ गजवाजिधनैर्युक्तोजायतेचनसंशयः ॥ ३८३ ॥ तीर्थसेवाप्रभावेणतादृशोजायतेनरः ॥ ३८४ ॥ पुत्रस्त्रीपुत्रविद्वेषीसभवेच्च मुहुर्मुहुः ॥ ईश्वरेचमहायोगेयदिस्त्रीसंततिर्ध्रुवम् ॥ ३८५ ॥ धनाढ्यापिभवेन्नारीभर्तादुःखीचजायते ॥ संतानंनभवेत्तस्यभवेद्वापिनजीवति ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ ३८६ ॥ भृगुरुवाच ॥ स्वामीसंभोगकालेचयदाचेष्टाकृतापुरा ॥ तेनपाप वशेनापितस्यचिंताप्रवर्तते ॥ ३८७ ॥ जायाधीशस्यमंत्रेणपंचबीजात्मकेनवै ॥ रात्रौसहस्रकंसप्तजपंकुर्यान्महानिशि ॥ ॥ ३८८ ॥ ततोदानंप्रकर्त्तव्यंसप्तषट्कंचहाटकम् ॥ रूप्यंषोडशकंचैवदशप्रस्थंचतंडुलैः ॥ ३८९ ॥ रक्तवस्त्रंप्रदातव्यंकरमष्टोत्तरंशतम् ॥ घृतंपंचचचत्वारित्रीणिप्रस्थंचसंकुला ॥ ३९० ॥ सुखशय्याप्रदातव्यागुप्तभावेननान्यथा ॥ एतद्दानप्रभावेणतस्यदोषोविनश्यति ॥ ३९१ ॥ रामंचलक्ष्मणंनागंकंठेदत्तंप्रयत्नतः ॥ दानाभावेमहादुःखंभृगुणापरिभाषितम् ॥ ३९२ ॥ इतीश्वरयोगफलम् ॥ ४४ ॥ व्ययेतुर्योदयेसौम्याः परेपापास्त्रिकोणगाः ॥ क्रूरक्षेत्रेगुरुर्यस्यवज्रयोगस्यसंभवः ॥ ३९३ ॥ सर्वत्रविजयीसस्यान्नित्यंभृत्यादिपोषकः ॥ कुलमध्येप्रधानश्चनाना

द्यंगैःसमृद्धिमान् ॥ ३९४ ॥ दृष्टोदशाब्दतःपश्चात्सौख्यमात्मबलैर्भवेत् ॥ द्वाविंशतितथावर्षेअन्यथानोत्सुकोभवेत् ॥ ३९५ ॥
त्रिंशद्वर्षेगतेनूनंबंधनंचधनव्ययः ॥ महाकष्टंमहाचिंताजायतेचमुहुर्मुहुः ॥ ३९६ ॥ द्वात्रिंशद्विगतेवर्षेधनांकिंचित्प्रवर्तते ॥ त्रिंशद्वर्षेगतेप
श्चात्सुखंप्राप्नोतिनान्यथा ॥ ३९७ ॥ चत्वारिंशद्गतेवर्षेमहासौख्यंप्रजायते ॥ सर्वंमहासुखंनित्यंजायतेनात्रसंशयः ॥ ३९८ ॥ वक्रयोगप्रभा
वेणमहाचिंतामुहुर्मुहुः ॥ संतानार्थेमहाचिंतादानात्सौख्यंनसंशयः ॥ ३९९ ॥ दानाभावेमहद्दुःखंभृगुणापरिभाषितम् ॥ इतिवक्रयोगफलम्
॥ ४५ ॥ कर्मेक्रूराःसुतेसौम्याःसुतेशःक्रूरसंयुतः ॥ कुजार्कौवासुतस्थानेसौम्यदृष्टौहितौयदा ॥ ४०० ॥ शुक्रयोगानुसारेणससुखीधनवान्
भवेत् ॥ समंसौख्यंचमध्येतुवृद्धकालेमहासुखम् ॥ ४०१ ॥ संतानार्थेमहाचिंताराजरोगोथवाभवेत् ॥ ब्राह्मणापहृतिःपूर्वंकृतातेनेहजन्मनि
॥ ४०२ ॥ संतानधनयोश्चिंताजायतेचमुहुर्मुहुः ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचार्किं दानंचकिमौषधम् ॥ ४०३ ॥ भृगुरुवाच ॥
प्रीतिपात्रंनवंपुत्रतन्मध्येनवमंडलम् ॥ ब्रह्मरूपंचतन्मध्येकारयेच्चंदनेनच ॥ ४०४ ॥ नृसिंहमंत्रकंतत्रमंत्रबीजाक्षरान्वितम् ॥ श्रद्धायुक्तो
जपंकुर्यात्तदग्रेविधिनासह ॥ ४०५ ॥ ततोदानंप्रकर्त्तव्यंषट्कंद्वादशहाटकम् ॥ रजतंद्विगुणंरक्तंवस्त्रमष्टशतंकरम् ॥ ४०६ ॥ अश्वंगांच
प्रदद्यात्तुद्विजायसुविधानतः ॥ रामंचलक्ष्मणंनागंपूर्वोक्तविधिनासह ॥ ४०७ ॥ नृसिंहबीजंस्त्रीकंठेऔषधंचप्रयत्नतः ॥ पुत्रपौत्रादिसंयुक्तो
धनधान्यधरोभवेत् ॥ ४०८ ॥ दानाभावेमहादुःखंभृगुणापरिभाषितम् ॥ इतिशुक्रयोगफलम् ॥ ४६ ॥ सुखोदयेधनेशश्चसौम्याःपापाः
समन्विताः ॥ कर्मेक्रूरोथवायूनेयोगोयंलोहितस्तदा ॥ ४०९ ॥ लौलचौर्यंकृतंपूर्वंद्विजतःशूद्रतोऽथवा ॥ तेनपापवशेनैवलोहितोयोगवा

न्भवेत् ॥ ४१० ॥ स्थानभ्रष्टोरणेहानिर्जायतेचमुहुर्मुहुः ॥ द्वात्रिंशद्वर्षपर्यंतंमहादुःखीभवेन्नरः॥४११॥ षड्विंशद्वर्षेविगतेराजयोगः प्रवर्तते
धनहीनोभवेत्सोपिभवेच्चपरपिंडभुक् ॥ ४१२ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचाकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ सुतीर्थेमरणं
प्राप्तंकुलोत्पत्तिर्धनान्वितम् ॥ ४१३ ॥ संतानंचभवेत्तस्यएकंवापिद्वयंततः ॥ ततश्चजायतेचिंतासंतानसुखहेतवे ॥ ४१४॥ चतुर्दशपलं
पात्रंतन्मध्येब्रह्मरूपकम् ॥ स्वर्णपीठेसमासीनोपद्मनाभनवत्रयम् ॥ ४१५ ॥ बीजाक्षरंजपेद्यत्नाद्विसहस्रंचकारयेत् ॥ ततोदानं
प्रकर्त्तव्यंषट्त्रिंषोडशहाटकम् ॥ रजतंद्विगुणंवस्त्रमष्टोत्तरकरंशतम् ॥ सवत्सांगांप्रदद्यात्तुसद्यस्तैलसमन्वितम् ॥ ४१६ ॥ लोहंपंचपलंचैवम
हिषींचसमाश्रिताम् ॥ धर्मकर्मादिसंयुक्तोधनधान्ययुतोभवेत् ॥ ४१७ ॥ दानाऽभावेमहादुःखंभृगुणापरिभाषितम् ॥ इतिलोहिताख्य
योगफलम्॥४७॥क्रूरक्षेत्रेयदाचंद्रःसौम्यक्षेत्रेकुजोरविः ॥ लग्नेशोपिभवेत्क्रूरःक्रूरश्चशत्रुगेहगः ॥४१८॥ केंद्रेसौम्याभवंत्यस्यनलयोगस्तदा
भवेत् ॥ कीर्तिमानपिधर्मात्माराजामोक्ताबहुप्रजाः॥४१९॥बाहौवाउदरेवापिजंघेवामशकंतिलम्॥पृष्ठतोवापिगुह्येवाएतद्भवतिलक्षणम् ॥
॥४२०॥गंगायांरुद्रशापाच्चजातमेतंन्नसंशयः॥अस्मिञ्जन्मनितेनेहसौख्यंवापिधनंनहि ॥४२१॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिं
दानंचकिमौषधम् ॥ भृगुरुवाच ॥ दानात्संप्राप्यतेसौख्यंविनादानंसुखंनहि ॥ ४२२ ॥ रीतिंवाताम्रपात्रंचपलंवापिचतुर्दश ॥ द्विगुणंकां
स्यपात्रंचतन्मध्येपंचमंडलम्॥४२३॥चंदनेनचकर्त्तव्यंरुद्रयंत्राकृतिस्ततः ॥ ऊर्णापट्टयुतंकृत्वातस्योपरिनिवेशयेत् ॥ ४२४ ॥ ततःपूजा
प्रकर्त्तव्यारुद्रजाप्यंसमाचरेत् ॥ भूशय्याचोपवासश्चकर्त्तव्यश्चअहर्निशम् ॥ ४२५ ॥ त्रिंशद्दिनंसमासाद्यपूजाजपपरायणः॥ब्रह्मचर्यपरो
भूत्वातत्कार्यसुखमाहितः ॥ ४२६ ॥ हाटकंनवषट्कंचद्विगुणंरजतंतथा॥दिव्यंरथंप्रदद्यात्तुपुंस्त्रीचंद्रसमन्वितम् ॥ ४२७ ॥ दानांतेरुद्रयंत्रंतु

धारयेद्राहुमूभ्रच ॥ एतद्दानप्रभावेणततोदुःखाद्विमुच्यते ॥ दानाऽभावेमहादुःखंभृगुणापरिभाषितम् ॥ ४२८ ॥ इत्यनलयोगफलम् ॥
॥ ४८ ॥ तृतीयेवायदाराहुःषष्ठाष्टत्रितयेशनिः॥व्ययस्थानेयदाजीवःपापात्पुण्यसुतोथवा ॥ ४२९ ॥ क्रूरेशाःसहितायस्य केंद्रेपापग्रहा
यदा ॥ विश्वानंदोभवेद्योगोविश्वानंदस्यकारकः ॥ ४३० ॥ संतानार्थेभवेच्चिंताशरीरेरोगसंभवः ॥ भृगुरुवाच ॥ शनौपंचतमस्त्रीणिबीज
मन्त्राक्षरंजपेत् ॥ ४३१ ॥ सहस्रंपंचकर्त्तव्यंपूर्वोक्तविधिनासह ॥ ततश्चदशषट्कंचस्वर्णतारंचतुर्द्दश ॥ ४३२ ॥ गांसवत्सांचसप्तान्नमेतद्दा
नंसमाचरेत् ॥ एतद्दानप्रभावेणलभतेपुत्रसंपदः ॥ ४३३ ॥ दानाऽभावेमहादुःखंभृगुणापारिभाषितम ॥ इतिविश्वानंदयोगफलम् ॥
॥ ४९ ॥ त्रिकोणेकेंद्रलाभेवाउच्चेखेटोयदाभवेत् ॥ ततःपंचतमस्थानेपापाःसौम्यास्त्रिकोणगाः ॥ ४३४ ॥ अथवापंचमेधर्मेमहानन्दस्त
दुच्यते ॥ महानन्दोमहामानीधनाढ्यश्चसुखीभवेत् ॥ ४३५ ॥ सर्वत्रविजयीनित्यंपुत्रपौत्रादिसंपदः ॥ कविनाचकृतःप्रश्नोभृगुणाप
भाषितः ॥ ४३६ ॥ इतिमहाऽऽनंदयोगफलम् ॥ ५० ॥ द्वित्रिस्थानेयदासौम्याद्वित्रिस्थानेचपापगाः ॥ गोलयोगःसविज्ञेयोबालह
त्याकृतापुरा ॥४३७॥ तेनायंनिर्द्धनोमूर्खोजायतेगोलयोगतः ॥ सौम्याःकेंद्रत्रिकोणस्थास्तदाहिससुखीधनी ॥ ४३८॥ भ्रातृतःपुत्रतश्चिं
ताथवारोगसंभवः ॥ ४३९ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम ॥ भृगुरुवाच ॥ ताम्रपात्रपलान्पुत्रतन्मध्येनव
मंडलम् ॥चंदनेनचकर्त्तव्यंतदग्रेजपमाचरेत् ॥४४० ॥ रुद्रमंत्रस्तवादीनिजपमंत्राक्षरंजपेत् ॥ सहस्रंकारयेज्जाप्यंततोदानंसमाचरेत् ॥
॥ ४४१॥हाटकंत्वष्टषट्कंचद्विगुणंरजतंतथा ॥ वस्त्रंषष्टिकरंप्रोक्तंगांसवत्सांविशेषतः ॥ ४४२॥ ततःसेवांचरुद्रस्यवर्षमेकंचनित्यशः॥ दाना
त्संजायतेसर्वंभृगुणापरिभाषितम् ॥ ४४३ ॥ इतिगोलयोगफलम् ॥ ५१ ॥ चतुःस्थानेयदाक्रूराःसौम्याःषष्ठाष्टमेव्यये ॥ पाप

१ "पापयोगः—स विज्ञेयो जायते बन्धने ध्रुवम् " इति पाठो०

योगेमहादुःखंदंडबन्धनकारकम् ॥ ४४४ ॥ ब्रह्महत्याकृतापूर्वंतेनेहास्यतुजन्मनि ॥ रोगीवाधनचिंतावासुतहीनस्तुजायते ॥ ४४५ ॥
शुक्रउवाच ॥ किंदानंकस्यपूजाचकिंमंत्रंचकिमौषधम्॥ भृगुरुवाच ॥ताम्रपात्रंपलान्पंचतन्मध्येनवमंडलम्॥४४६ ॥ ब्रह्ममूर्तिश्चतन्मध्ये
कारयेच्चंदनेनच ॥ शनौपंचकुजेत्रीणिबीजमंत्राक्षरद्वयम् ॥ ४४७ ॥ दानंचैवप्रदातव्यंषट्कंषोडशहाटकम् ॥ रजतंद्विगुणंवस्त्रमष्टोत्तरशतंक
रम् ॥ ४४८ ॥ सवत्सागौःप्रदातव्यासप्तान्नंप्रस्थप्रस्थकम् ॥ रोगात्प्रमुच्यतेदानाद्भवेत्पुत्रादिसंयुतः ॥४४९ ॥ दानाभावेमहादुःखंभृगुणा
परिभाषितम्॥इतिपाशयोगफलम्॥५२॥सुतेलग्नेशुभाःपापाःकर्मेशःक्रूरसंयुतः॥भौमक्षेत्रेगुरुश्चैवप्राजापत्येसुखीभवेत् ॥४५०॥ तीर्थेसाधु
सतासेवातत्पुण्यंनेहजन्मनि॥ धनाढ्योराजमान्यश्चजायतेनात्रसंशयः॥४५१॥किंचिच्चिंतासरोगोवाभ्रातृतोबंधुतस्तदा॥ किञ्चिद्दानेनसौ
ख्यंचभृगुणापरिभाषितम् ॥ ४५२ ॥ इतिप्रजापतियोगफलम् ॥ ५३॥त्रिकोणेवाथच्छिद्रेशःक्रूरोवाक्रूरसंयुतः ॥ क्रूरक्षेत्राणिगेहेवायोगोऽ
यंतुविनाशहा ॥४५३॥ तपस्वीनिंदितः पूर्वंनारीहत्यादिकंकृतम्॥ अल्पायुर्दीर्घरोगीचसंतानंनततोभवेत् ॥४५४॥ शुक्रउवाच॥ किंजा
प्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥ भृगुरुवाच ॥ रुद्रमंत्राक्षरंसप्तबीजंसाहस्रकंजपेत् ॥ सुवर्णंदशषट्कंचतारंचैवचतुर्दश ॥४५५॥ ताम्रं
पात्रेरुद्ररूपंवस्त्रंषष्टिकरंतथा ॥ गांसवत्सांचसप्तान्नंद्विप्रस्थंचसमन्वितम् ॥४५६॥ दानांतेरुद्रमंत्रंचबालकंठेचधारयेत्॥ पंचांगुलीयंयंत्रंच
कंठेप्रक्षाल्यधारयेत् ॥ ४५७ ॥ एतद्दानान्महावाग्मीपुत्रपौत्रादिसंयुतः ॥ महाधनीमहाभोगीबहुभृत्यादिसंयुतः ॥ ४५८ ॥ दानाभा
वेमहादुःखंभृगुणापरिभाषितम् ॥ इतिविनाशहानियोगफलम् ॥ ५४ ॥ कर्मेलाभपरेक्रूराधर्मस्थानेशुभाऽशुभाः ॥ ४५९ ॥ कर्मेकर्मे
शवाक्केन्द्रेसुतेशोमित्रगेहगः ॥ खेटाक्षयोगः संभूतःशिवेभक्तिःकृतापुरा ॥ ४६० ॥ मरणंजायतेतस्यगंगायामिहजन्मनि ॥ धनाढ्यो

राजमान्यश्चक्रूरः शत्रुविमर्दकः ॥ ४६१ ॥ आत्मनाकुरुतेकार्यंबहुस्थानेऽन्नदायकः ॥ गुणीचराजामंत्रीचभोगीदानीविचक्षणः ॥ ४६२ ॥
राजमंत्रीभवेद्दातापितृतोऽप्यधिकोभवेत् ॥ अष्टादशेऽपरेविंशेह्यात्मवान्सुखमश्नुते ॥ ४६३ ॥ चतुर्विंशतिवर्षेतुअन्यस्थानात्सुखंभ
वेत् ॥ सुखंधनंजयंमानंशत्रुतोपिभयंभवेत् ॥ ४६४ ॥ भ्रात्रारिष्टंततश्चिन्ताभूयोभूयः प्रजायते ॥ शुक्रउवाच ॥ किंजाप्यंक
स्यपूजाचकिंदानंचकिमौषधम् ॥ ४६५ ॥ भृगुरुवाच ॥ सतीपुत्रोऽपिनिन्दाप्तोब्रह्मस्थापनिकाकृता ॥ एतत्पापप्रतापेनतद्दोषंल
भतेपुरा ॥ ४६६ ॥ रीतिंवाताम्रपात्रंवाअष्टादशपलानिच ॥ पंचमंडलमध्येतुहरिरूपंविनिर्दिशेत् ॥ ४६७ ॥ पद्मनाभस्यबीजंतु
द्विसहस्रंजपंचरेत् ॥ ततोविंशतिषट्कंचहाटकंतारतद्गुणम् ॥ ४६८ ॥ शुक्लंवापीतवस्त्रंवापंचषष्टिकरंपरम् ॥ महाश्वश्चप्रदातव्यःकंबलंवामनो
हरम् ॥ ४६९ ॥ सर्वोपस्करसंयुक्तांगांदद्याद्वत्ससंयुताम् ॥ श्रीफलंभौमनक्तंतुमायाबीजेनदीपयेत् ॥ ४७० ॥ रामंचलक्ष्मणंनागंहारीप्रि
यांहरौषधिम् ॥ एकवर्णांसवत्सांगां दुग्धयुक्तांप्रदापयेत् ॥ ४७१ ॥ एतद्दानोपचारेणसंततिर्जायतेध्रुवम् ॥ सर्वत्रसुखमाप्नोतिभृगुणापरि
भाषितम् ॥ ४७२ ॥ इतिखेटाक्षयोगफलम् ॥ ५५ ॥ केंद्रेसौम्याव्ययेसौम्यास्तुर्येलाभेऽष्टमेऽशुभाः ॥ छिद्रेशःक्रूरसंयुक्तोजीवोऽर्कोवाबुधो
भृगुः ॥ ४७३ ॥ मालायोगेसुखीभोगीगुणाधिक्योबहुप्रजः ॥ रूपयुक्तःसदाचारीशिशुचिंतायुतोभवेत् ॥ ४७४ ॥ अस्मिन्योगेभवेन्नारी
जाताभवतिदुर्बला ॥ सरोगाचभवेच्चिंतादुःखिनीपुत्रकारणात् ॥ ४७५ ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम् ॥
भृगुरुवाच ॥ अर्द्धायुतंजपःकार्योरुद्रमंत्रंनवत्रयम् ॥ ४७६ ॥ मिष्टमन्नंसदुग्धंचभुक्त्वाजाप्यंसमाचरेत् ॥ हाटकंसप्तषट्कंचरजतंद्विगुणं
तथा ॥ ४७७ ॥ रक्तवस्त्रंचपंचाशत्करंदद्यात्सुभक्तितः ॥ एतद्दानानुसारेणनीरोगीपुत्रवान्भवेत् ॥ ४७८ ॥ स्वगृहात्पुरुषःकुर्यान्नारीतत्पि

वृगेहवः ॥ दानाभावेमहादुःखंभृगुणापरिभाषितम् ॥ ४७९ ॥ इतिमालायोगफलम् ॥ ५६ ॥ कोणेवाखांबुलग्नेशःखपेशोभास्करोदये ॥
धनेवासहजेक्रूरःप्रमोदेचमहासुखी ॥ ४८० ॥ तीर्थावगाहनंपूर्वंगंगातीरेचसर्वदा ॥ एकदाचमहारण्येइयंदृष्ट्वामनोहरम् ॥ ४८१ ॥ गृही
त्वाचकुरुक्षेत्रंगतोयत्रहरालयः ॥ दृष्ट्वातत्रमुनिंपंगुंतस्यसेवाकृताबहु ॥ ४८२ ॥ तीर्थसेवाप्रदानेनराजमान्योधनाढ्यता ॥ पुत्रपौत्रा
दिसंयुक्तोगजवाजिसमन्वितः ॥ कुलमध्येप्रधानश्चपितृतश्चाधिकोभवेत् ॥ ४८३ ॥ द्वाविंशद्वर्षतोनूनंसौख्यमात्मबलेर्भवेत् ॥ षट्त्रिंशा
ब्दगतेवर्षेगजबंधःप्रजायते ॥ ४८४ ॥ षट्पंचाशत्तमेवर्षेमहाराजसमोभवेत् ॥ पुत्रपौत्रादिसंयुक्तःसर्वकार्येषुपारगः ॥ ४८५ ॥ कदा
चिज्जायतेदुःखंपुत्रादिधनतस्तथा ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचाकिंदानंचकिमौषधम् ॥ ४८६ ॥ भृगुरुवाच ॥ रुद्रमंत्रंनवत्री
णिबीजमंत्राक्षरंजपेत् ॥ अयुतार्द्धंतुकर्त्तव्यंपूर्वोक्तविधिनासह ॥ ४८७ ॥ ततोदानंप्रकर्त्तव्यंषट्द्वादशहाटकम् ॥ रजतंद्विगुणंवस्त्रं
दद्यात्पष्टिकरंतथा ॥ ४८८ ॥ एतद्दानंचवैपुत्रनिशाकालेविशेषतः ॥ एतद्दानप्रभावेणत्रिकुलेजायतेसुखम् ॥ ४८९ ॥ दानाऽभा
वेमहादुःखंभृगुणापरिभाषितम ॥ ४९० ॥ इतिप्रमोदयोगफलम् ॥ ५७ ॥ इति श्रीयोगसागरेसभार्चितदेशेशुक्रभृगुसंवादे
श्रीपुष्ट्यादिसप्तपञ्चाशद्योगकथनंनामद्वितीयंप्रकरणंसंपूर्णम् ॥ २ ॥ शुभमस्तु ॥ ॥ परमानंदरूपोऽपिविश्वभारधरश्चयः ॥
सर्वसाक्षीत्रिलोकेशःतस्मैसूर्य्यायवैनमः ॥ १ ॥ पूर्वमंत्रपरिज्ञानंकथयामिनसंशयः ॥ अहंवररुचिर्नामतत्त्वंभार्गवभाषितम् ॥
॥ २ ॥ यानिवाक्यानिशुक्रायप्रोक्तानिभृगुणामुदा ॥ तानिसर्वाणियोगैर्हिकथयामिनसंशयः ॥ ३ ॥ आदित्याद्याग्रहास्सर्वेश्रे
णीकृत्वापृथक्पृथक ॥ योधिकोबलवान्खेटस्सएवयोगकारकः ॥ ४ ॥ यथासूर्य्योदयादिष्टघटयः १ शुद्धस्पष्टार्कः १

[illegible]मिलित्वा २ द्वादशभिर्गुणितंजातम् २४ अष्टभिर्भागःशेषम् ० ॥ यत्रशून्यमागतंतत्रयोगोपिनास्तितत्किंकर्तव्यम् । शृणु

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | ३ | ५ | २ | ४ | ६ | ८ | ९ |
| २ | ५ | ७ | १४ | ६ | ११ | ३ | २२ |
| ० | ७ | १२ | ५ | १३ | २ | १४ | ८ |

एवंचंद्राद्याग्रहाअपिगुणिताभाजिताश्चशून्यरहितशेषेणयोगकारकाभवन्ति॥यथासूर्यः १।२। आगत
स्तदायोगोपिभवति ॥ एवंचंद्रःएवंभौमःएवंबुधः एवंगुरुःएवंशुक्रःएवंशनिःएवंराहुः ॥ [illegible] ता
त्कालिकंकृत्वाषष्टिभिर्गुणितं ततः ॥ अष्टोत्तरशतंभागोयच्छेषंतदिहोच्यते ॥ अवर्गो १ अद्भुत
[illegible]व २ अंतारिक्षो ३ अद्रि ४ आशनः ५॥ अम्बुः ६ अर्बुद ७ अह्लोला ८ आत्मसंज्ञा ९ अनादरः १० ॥ १॥ अनंत ११ औषधी१२
[illegible] १३ अपंगु १४ अनुमोहितः १५ ॥ अष्टकः १६ अम्बरेशरश्च १७ अखनी १८ अखलोहितः १९॥२ ॥ अदुम्बरः२०अपाक
[illegible] २१ अंतरिक्षो २२ अनादिकम् २३ ॥ अर्हगणः २४ अश्वरेखा २५ अवनीशः २६ अनात्मकः २७ ॥ ३ ॥ अंगिर २८
[illegible] २९ अदंडः ३० अश्रुपातकः ३१ ॥अनर्घः ३२ अंडनामाख्यः ३३ अल्का ३४ अल्क ३५ अगोचरः ३६ ॥ ४ ॥
[illegible] ३७ अंगभंगश्च ३८ अजया ३९ अर्कसंज्ञकः ४० ॥ अदांतः ४१ अन्नमेरुश्च ४२ अध्यापकः ४३ अधानकम् ४४ ॥ [illegible]
[illegible] ४५ अर्घ ४६ अंदोली ४७ अरुचिः ४८ अम्बरीषकम् ४९ ॥ अमोघा ५० आत्मबीजंच ५१ अलकः ५२ [illegible]
[illegible] ५४ [illegible] अनर्कः ५६ अंच्युतः ५७ अक्षि ५८ ईक्षितः ५९ ॥ इंद्रः ६० उग्रः ६१ इलावर्तः ६२ [illegible]
[illegible] ॥७॥ [illegible] एरंडः ६६ अत्रिपालिन्यः ६७ उंछकः ६८॥उग्रः ६९ उदासीनः ७० ऐरावतः ७१ इंदिरा ७२ ॥ ८॥ [illegible]
[illegible] ७७ इन्द्रवज्राख्यः ७८ आडम्बरः ७९ अनर्थकः ८० ॥ ९॥ आजन्म ८१ [illegible]

...कः ८२ आतुरी ८४ अर्जकः ८५ अंक्कारास्यः८६ इंद्रियाय ८७ इमाद्रिकं८८ ॥१॥ उद्धृत ८९ अंडपालश्च ९० ...
... ॥९२ अपर्णाय ९३ इनाश्वर्य्यः९४ एला९५इष्टः९६ अदंडकः९७॥११॥असद्रावी९८अचंभास्य९९ ...
... ॥१०१ अष्टसिद्धि १०२अनाश्रीः१०३ अर्बुकास्यः१०४ अनामयी १०५ ॥१२॥ ईश्वरः१०६इज्यसेवा१०७ ...
... इति कीर्तितम्॥अवर्गादिकयोगानामेतदष्टोत्तरंशतम्॥१३॥कवर्गः१ कर्तृ२कर्तारः३ करंकाः४कर्णधारकः५॥ कर्पटी६करुणागार...
...कसरी ८केशपाशकः ९॥१॥ केवली १० कलिका ११ कामः१२ कर्णसूत्रः १३ कपालिकः १४॥ कौमोदकी १५ कीटसंज्ञा १६
केशरी १७ कोलः १८ कामिनी १९॥२॥ कमला २० कमलिनी २१ कांतिः २२ कायेराः२३ कम्बलश्च सः२४ ॥ केयूरः २५ कार
नाटीच २६ कपर्दी २७ कमलेश्वरः२८ ॥ ३ ॥ कंचुकी २९ कीरः३० कामीच ३१ कावेरी ३२ कश्यपश्चसः ३३ ॥ कौशकी ३४ कपि
लास्यश्च ३५ कंदाः ३६ कंदादि ३७ कोपरः ३८ ॥४॥ कृत्स्ना३९काली४०कला४१कालः४२कुमारः४३ कर्पीटकंतथा४४॥ कमठ
४५ कल्पः ४६ कारंडः ४७ कणकं ४८ किरीटं ४९ कर्दमः५०॥५॥कलापः५१कनकायोगः५२कुंडलः५३ कुंतलोच्यते ५४॥कचारि
५५ कचयाख्यातः ५६ कच्छपः ५७ कल्पलोचनः ५८ ॥ ६ ॥ कंदर्पः ५९ कंतः६० कातिघ्नः ६१ कंजाननः६२ कुमारिकः६३ ॥
...ली ६४ कमनीयश्च ६५ कांची ६६ कांतिः ६७ कुमारिका ६८॥ ७ ॥ कल्लोलिनीच ६९ कामाख्या ७० कामरूपाच ७१ कोम
...७२ ॥ कात्यायनी ७३ कर्कटाख्या ७४ कोदंडः७५ कुलपाशकः ७६ ॥ ८ ॥ कदम्बः ७७ कोकनादश्च ७८ कृपा७९ केशा ८०
... ॥ कटकः ८२ कर्बुरश्चैव ८३ कोटः ८४ कंशः ८५ कलापिकः८६॥९॥कोपरी ८७ कुंडः८८कंसारिः८९ केसतः ९० कर

जाम्बुकः ९१ ॥ कमालः ९२ कालयोगाख्यः ९३ कंकः ९४ कादन्नः ९५ कोडनः ९६ ॥१०॥ कर्कंधुः९७कंजकारूप्यः९८ कोपः ९९
कलिसंज्ञकः १०० ॥ कुलेखा १०१ कर्पलाशश्च १०२ कंजरातनः१०३ कीलकः १०४॥११॥ कलातीतः१०५कमेन्दुश्च १०६ कश्य
पारुणः१०७कुदमर्दकः १०८॥१२इतिकवर्गादियोगाः॥चक्रपाणि १ श्चक्रधरः२ चिंतामणिश्च३चांद्रिकः ४॥चेत ५ चर्पट ६चांडालो७
चंचलो ८चपलः९अचलः१०॥१॥ चित्ररेखा ११ चित्तसंज्ञा१२चंद्रमा१३चामिकस्तथा॥१४चिताधरः१५चर्मनीशो१६छत्रधारी १७
क्षमाकरः१८॥२॥जयजोतो१९जवापांगीर२०झर्झरी२१झामरीतथा२२॥चेता२३चामीकरश्चैव२४चारुलोचन२५चामरः२६॥३॥ चिंता
२७चंचुक२८चापाख्य२९चेतनः३०चाप ३१ श्चोद्धतः ३२॥ चर्माम्बर ३३ चण ३४चारु ३५ चूत३६चम्पाख्य ३७चुंचुकः ३८ ॥४॥
चमरी ३९ जयधानाश्री४०छेमा४१छात्रक४२छोभका४३॥जीतमूतो ४४ जगसालः४५जेवरी४६ जोर ४७ जोषिता ४८॥५॥ झुंडाव
ली ४९ झटित्परश्च ५० उग्रदंडः ५१ चलाचलः ५२॥चातुरी ५३ चोलमाख्यातः५४ चंद्रकांतिश्च ५५छर्छरी५६ ॥६॥ छूरसंज्ञकः ५७
जटायुः ५८ जोधं ५९ जांगल्य६०जानकी ६१॥ जयवर्द्धीच ६२ जज्वालः६३युद्ध६४जृंभकएवच६५॥७॥जनार्दनो६६ जयी६७जाती
६८ जनाराति ६९ जलहपि७०॥ जिज्ञासी ७१ यदुयोगाख्यं ७२ जम्भाराति ७३ यशोमतिः ७४॥८॥ चैतन्य ७५ चैन७६चारार्की
७७चिखुरा७८चवर्नोच्यते७९चातृकः८०चतुरोमारः८१चाशनश्च८२चतुर्भुजः ८३॥९॥ चरांगी ८४ चोलरोमाख्यः ८५ चालकः ८६
चतुराननः ८७॥चोरी ८८चौर्य्य८९ चनाकारा ९० चटपटी ९१ चलकाद्युतिः ९२॥१०॥छलिकः९३ छिद्रमानंदी९४ छाकाहारी९५
चमायतिः९६॥चरणाद्रि. ९७ चलेखाख्यः९८चित्रकूटादिसंज्ञकः९९॥११॥चंपकारूढ१००चर्वङ्गी१०१ चारुमोचनएवच॥१०२चर्मक

१०३ चंडलीकश्च १०४चंपाकांतिः १०५चरेड्कः॥१०६चंद्राली१०७चंद्रपदी१०८एतेयोगाःप्रकीर्तिताः॥१२इतिचवर्गः॥टवर्गः १टंकर२
टंकोरं ३ टणत्कारो ४ टनेश्वरः ५॥टूर्णः ६ टंकणापांगी ७ टोर ८ टामेश्वरस्तथा ९॥१॥टिक्कितं १० डुवरश्चैव११डिमडिमा१२डुंगर
श्वसा१३डोलनं१४ डोल१५ ढाकश्च १६ढुढुरी१७टनत्संज्ञकः१८॥२॥डीहा १९ डोहन २०ठठंपालः२१ठकुरो २२ डिंडिमाधरः २३॥
डाकिन्यः२४ डंडपाणी२५ डम्बरः२६डीलमीलकम्२७॥३॥डार२८डारक२९डोलाख्यः३०डवडवी३१डरनांतकंठ३२॥ढारकः३३ढर
की३४डाढी३५ ढंढना३६ डोगरीस्मृता३७॥डुवरी ३८ डिग्विहारीच३९डैनकी४०डिगधारकः४१॥४॥टित्कीता,४२ टर्कबालक्यः४३
ठाडीसंज्ञः प्रकथ्यते ४४॥५॥टीकरः ४५ टोरी ४६ टोराख्यः ४७ टंटकः ४८ टाहू४९टारणः५०॥ टीमाकरः५१टोन५२टाराकी ५३
टाकनः५४ टनकाद्युतिः ५५॥६॥टोडलश्चैव ५६ टीकाख्यः५७टौनकः५८ ठकुरेश्वरः ५९॥डारती६० डोरमाकांत६१ डाही६२डावर
६३डेनकः६४॥७॥डेलाख्यो६५डंडभर्त्तारः६६डालमालो६७डमास्वरः६८॥डोहनो६९ डोहनाकारो७० डालरीयोगउच्यते ७१ ॥८॥
डंडकः७२डोर७३डाहेंद्रः७४डिलिपकः७५डहरुस्मृतः७६॥ टुल्कटः ७७ टेम ७८टेमाख्यः ७९ टीटहीकथितोबुधैः८०॥८॥टर्नाभः८१
टंटकारुण्यः ८२ टारदः ८३ टरटाकनः ८४॥टाहरः ८५ ढढपालश्च ८६ ठंड ८७ठोकन ८८ टासकाः८९॥१०॥ठर्पदः ९०डर्पदः९१
डोही९२टाट९३टंद्यन९४टेनकाः९५॥टेककनकः९६टंघनटः९७टामरीटस्तथैवच९८॥११॥ टेकनेकः ९९ टरत्कोपी १०० टंबमिस्वर
१०१टोकनः१०२॥टोन्नतो १०३ डोकरश्चैव१०४ टंढमारक१०५टंबरः१०६॥टात्काली१०७टीकट१०८श्चैवमेतत्तेकथितंमया ॥१२॥
इतिश्रीटवर्गयोगाः ॥ अथतवर्गादि ॥ तरणी १ तारणी २ तत्त्वं ३ तत्त्वगोपाल ४ तीज्वलः ५॥ तोमरं ६ तोषणं ७ तेजा ८ तर्क ९

ताडन १० तुंदिलः ११ तिरस्कारो १२ तलंचाख्यः १३ तीत्तरः १४ थलसंज्ञकः १५ दीर्घ १६ दाता १७ दयाधारः१८ दारणो १९ संहि.
तारणोपिवा २० द्रष्टु २१ द २२ तरकः २३ दाहुकः दीर्घकेशश्च २४ दलाकारं २५ ततोद्विज २६ददु२७ दंतकश्च२८ दीनयोगोतनो
पारे २९ दिव्य ३० दीनार्द्रं ३१ दंडपाणी ३२ दुर्गायोगःप्रकथ्यते ३३ दंपतिः ३४ दारुणं ३५ दारिद्रं ३६ दामवेन्द्रकम् ३७दर्वी ३८
द्वीपक ३९ दीनश्च ४० धर्मारि४१ स्तानरंगो ४२ मिधोधकः ४३ धर्मकाश ४४ धुंधुमारी४५ धंध ४६ धौमाख्यो ४७ धान्यकः४८
नृसिंहकः ४९ नंदनोनाम ५० नादितो ५१ नेतयोगकः५२॥ नेता ५३ नोहरसंज्ञः ५४ नैष्टय ५५ नाराच ५६ नेमिनः ५७नेमाख्य५८
नमामि ५९ नित्यानंदकः ६० निमावत्य ६१ निंदयोगाः ६२ ।निंदावली ६३ नरयोगकः ६४ नाक ६५ नाकीव ६६ नैर्ऋतिश्च६७थल
योगः प्रकथ्यते ६८ दीर्घ ६९ दीस्वर ७० दारोह ७१ दीनानाथः ७२ दामोदर ७३ दालभ्य ७४ द्रष्टयोगश्च ७५ धनसंज्ञं ७६
धमोदकं ७७ धूरणोथलकारश्च ७८ धुंधुचारि ७९ धनसंज्ञकः ८० धानुषा ८१ धवलीयोगः ८२ निम्बु ८३ नेमावली ८४ तथ
नांदिको ८५ नरनारायणो योगाः ८६ निम्नाधर ८७ नारंजि ८८ नवनीतकं ८९ तिरस्कारो ९० तमाकारी ९१ तमसा ९२ तानसंज्ञकः
९३तारा९४ताटंक९५ तानीसः ९६ तेजस्वी ९७ त्तित्तिरःस्मृतः ९८ तोता ९९ तोष १०० नमस्कार १०१ तिलांगी १०२
तास्वरी १०३ तत्वं १०४ तुंदिलः १०५ तूल १०६ तोमरः १०७ दुर्धर्षमिति १०८ विख्यातः तवर्गोयोगउच्यते॥अथपवर्गः॥ पवनः १
पंकेः २ प्रेरया ३ प्रेमा ४ पावन ५ पाठकः ६ पार्षदः ७ पिप्पली ८ पवनात्मज ९ पाखंडकं १० पंचत्व ११ पाणियोगा १२ पूज्य १३
पुष्पक १४ पुरातनः १५ पौलोमा १६ पर्जकश्चैव १७ पौराणिक १८ पालाशकः १९ फुल्लयोगाः २० फलस्तुतिः २१ वज्रदष्टः २२

मझुगोग २३ वेतालश्च २४ बोधकः २५ वाक्कद २६ ब्रह्मदंडी २७ वाराहो २८ वसंतः २९ वसुयोगकं ३० विशाखा
यः ३१ वाणिज्यं ३२ वर्णसंज्ञ ३३ वधयोगकं३४॥ बोधको ३५ वेणुयोगाश्च ३६ वक्षिको ३७ वासुदेव ३८ वासुक३९ वारणाख्य४०
लक्योगा ४१ वद्रिका ४२ वल्कश्चैव ४३ बांधवो ४४ विश्वराजकः ४५ बार्हस्पत्यो ४६ भवानि ४७ भार्गवो ४८ भावियोगकं
४९ भीमसेन ५० भगोदार्वि ५१ भारतो ५२ भरतात्मकः ५३ भवनानिच ५४ भगीरथ ५५ मन्मथो ५६ मातलिस्तथा ५७
मधुलिट् ५८ माधवश्चैव ५९ मधुहा ६० मौक्तिकस्तथा ६१ मोदसंज्ञश्च ६२ मकरी ६३ मुसलो ६४ मंजरीतथा ६५ मज्जासारो ६६
माणिक्यो ६७ मेघा ६८ मोदन ६९ मुल्मुलः ७० मातंगी ७१ मूज्वलश्चैव ७२ मास ७३ मृत्युस्तथैवच ७४ मुरहा ७५ मोक्ष
योगश्च ७६ माधव्या ७७ मालिनिस्तथा ७८ मण्डली ७९ मुर्मुरीयोगा ८० मांजारी ८१ मंतरीटकम् ८२ मल्लकी ८३ मोदकीयोगाः
८४ मोरभंजश्च ८५ मोरकः ८६ मार्कंड ८७ मर्दनश्चैव ८८ मालती ८९ मलसंज्ञकः ९० मकरध्वज ९१ महनं ९२ मोक्ष ९३
वन्नाटो ९४ बोध ९५ वेधकः ९६ फलाशन ९७ फल्गुरेवच ९८ फेत्कारी ९९ भरद्वाजी १०० भोगी १०१ भोगक १०२
मर्दुलं १०३ मांडवी १०४ मुर्गला चैव १०५ मानन्दो १०६ मर्द्धयोगकः १०७ मंजिष्टश्चेतिविज्ञेयं १०८ पवर्गस्यत्विदंद्विज ॥
यवर्गकः १ यलवालाद्र २ यजमोदा ३ राजोगकाः ४ रनाग्र ५ राजिबोनाम ६ रामः ७ राघव ८ राटकः ९ राडश्च १०
रोमुलसकयोम्यः ११ रोम १२ रोमावलि १३ रोशनः १४ रसत्या संज्ञश्च १५ रोपनं १६ रोस्वसंज्ञकं १७ रोमावली ततो १८ राज्ञी
१९ राजः २० राजति २१ राजिनीतियोगः २२ ॥ रमा २३ राजेंद्र २४ रघुहार२५रोमा २६ राकाच २७ रावनी २८ रामेश्वरः २९

राहुयोगा ३० रात्री ३१ राजीव ३२ राजिवसंज्ञकं ३३ रंक ३४ राग ३५ रीकटश्च ३६ रोगजं ३७ रजकंतथा ३८ रोचनं ३९
रणवर्द्धश्च ४० लक्ष्मीः ४१ लाष्ट ४२ लीलकं ४३ लान्नं ४४ लीलकंठश्च ४५ लूता ४६ लेखक ४७ लघुताशनः ४८ लंबोदर ४९
ललात्मक्त ५० लीला ५१ लंपट ५२ लोपिका ५३ लोपामुद्रा ५४ लीलांबरः ५५ लम्बकर्णश्च ५६ लंपकाः ५७ लोकभूषण ५८
लवंगादलय ५९ लेखया ६० लंब्र ६१ लालामृत ६२ लंवरस्तथा ६३ लकुटो ६४ लिंबु ६५ लीनश्च ६६ लज्जाः ६७ लांछन ६८
लाटकं ६९ लोमसः ७० लोभ ७१ लोभाख्य ७२ लेह ७३ लालकांतिकं ७४ रेचकी ७५ रंध्रयोगाश्च ७६ रज्जुकी ७७ राचकी
तथा ७८ रायति ७९ रोपनस्तथा ८० लोमशी ८१ लोपयासंज्ञः ८२ लतार्तं ८३ लालस्तथा ८४ लिंगघोषी ८५ लोकसंसं ८६
लाजवर्तक ८७ लचातिकं ८८ रूजो ८९ रूजापागी ९० रावलो ९१ रघुवंशकं ९२ रावटी ९३ रुक्म ९४ रोषश्च ९५
रूपावलि ९६ रवेर्मुखं ९७ ॥ राज्याभिषेक ९८ रोकांगी ९९ रुस्वरो १०० लक्ष्मियोगकः १०१ लुंठन १०२ लोकपालाश्च
१०३ लोकाधीश १०४ यवस्तथा१०५वार्जकः १०६ रूणाहा १०७ रौद्रा १०८ यवर्गस्यद्विजोत्तम॥अथशसवर्गः॥शिवा १ सत्यश्च२
सौदास ३ सांत्विकं ४ सत्यवर्तिकं ५ सर्व ६ साराद्धं ७ सरावल्या ८ सनातः९सोमयोगकं १० सज्या ११ शाकुनि १२ साकिनी१३
शची १४ शेनातथानघ १५ सचानं १६ शिवानाम्नी१७सूत १८ सौराष्ट्रकीतथा १९ हस्ती २० हत्या तथा २१ होरा२२स्नानुमान्२३
सखोषा २४ सुरकार्य्यस्यंसाधकः ॥ २५ शांभवी २६ सुरसेनाश्च २७ सौख्या २८ शोभनं २९ स्यमंतकं ३० सुखार्क ३१ सच्या
३२ शोकश्च ३३ सुभगः ३४ हस्तियोगकः ३५ हिमाद्रि ३६ होलकाश्चैतद् ३७ हायणो ३८ हिंगुलाजकं ३९ हयनाम्नी ४०

हयो ४१ दुलांको ४२ हाट्टकस्तथा ४३ हनुमुखो ४४ हयश्चैव ४५ होम ४६ हर्षिनी ४७ हम्यना ४८ हामावली ४९ हयग्रीव ५० मुंड ५१ सुम्भ ५२ सुतात्मकः ५३ सासरी ५४ संठ ५५ सरट ५६ सुचीमुखी ५७ शीतला ५८ शर्करश्चैव ५९ शक्रयोगः ६० शिनाजेकः ६१ सरकी ६२ सोढ योगाश्च ६३ सहसा ६४ सौरभस्तथा ६५ सुरसेना ६६ सभायोगः ६७ सांकृतः ६८ सुरपूजकः ६९ हुताशनो ७० हनूमांश्च ७१ होत्रि ७२ हालापियोगः ७३ हिंदुमाख्या ७४ हुतायोगः ७५ हिंसकः ७६ शिवप्रशंसक ७७ होता ७८ हर्म्याख्य ७९ हार्दिक्यं ८० हरतिः ८१ शौरिकस्तथा ८२ शोणभद्रश्च ८३ साराख्यः ८४ सुरपोष ८५ शचीधरः ८६ शोषकः ८७ संहारयोगा ८८ सरसः ८९ साधकीतथा ९० सेकरः ९१ सरयूश्चैव ९२ शेवया ९३ सैवियोगकः ९४ साधनी ९५ सहसारूढः ९६ संस्कृतं ९७ सोमनाथकं ९८ ॥ सारावली ९९ सनातयोगः १०० सोमयाजी १०१ शुक्रवक्त्रभः १०२ संगः १०३ संगावलीन १०४ शौरी १०५ शोभनी १०६ शरणागती १०७ सीमा १०८ नाम्नीसकाराद्यायोगावलिरिहोदिता॥ इति श्री० ॥ अवर्गयोगेयोजातोबभूवमुखजःसर्वे॥ केदारस्यैवनिकटेविद्यावेदसमन्वितः॥ १॥ दत्तानितेनदानानिपर्वण्यपिविशेषतः ॥ एकस्मिन्समयेविप्रःकृतवान्कर्मदारुणम् ॥ २॥ ब्राह्मणस्य हुतंद्रव्यंनदत्तंलोभहेतुना ॥ ब्राह्मणोविमुखोभूत्वाजगामनिजवेश्मनि ॥ ३ ॥ किंचित्कालांतरेचैवसविप्रःपंचतांगतः॥ सतेनकर्मणायुक्तः प्राप्तस्तुयमशासनम् ॥ ४॥ बभूवनानाजन्मानिमर्त्यलोकेपुनःपुनः ॥ पश्चान्मानुष्यमापन्नःकिंचित्पुण्यप्रभावतः॥ ५ ॥ चंद्रवह्निशराऽष्टा सूर्याद्दशाष्टाधिकादश॥ चतुर्विंशतिषट्त्रिंशत्नंदाधिकत्रिंशकेषु च ॥ ६॥ षट्चत्वारिंशकेवर्षेमहत्कष्टंप्रजायते ॥ परमायुषश्चतस्याऽब्दाःसप्ततिप्रमिताद्विज॥ ७॥ १।३।५।८।१२।१८।२४।३६।३९।४६॥ एतद्वर्षेषुकष्टम्॥ अथअद्भुतयोगः ॥ अद्भुतेऽपिचयोजातोयशस्वीपूर्वजन्मनि॥

[illegible]पकारण्यनिकटेबाहुजोधनवानपि॥८॥सर्वस्वंब्राह्मणेदत्त्वाजगामगिरिगह्वरे॥ तत्रैकांघ्रिस्तपश्चर्यांकृतवान्रविसम्मुखे॥९॥तत्रभाविबला
त्पुत्रस्वैरिण्येकासमागता ॥ तपश्चर्य्यांपरित्यक्त्वाभक्ताद्यैर्व्यसनेरतः॥१०॥ समृतोजाह्नवीतीरेगतश्चेंद्रपुरंतदा ॥ ततःपुण्यक्षयेजातेमृत्युलो
कंसमागतः ॥ ११॥२।८।९।१३।१७।२१ एतद्वर्षेकष्टम् ॥परमायुवर्षाणि ८१॥ अथअंतरिक्षयोगः ॥ योगेन्तारिक्षकेजातःपूर्वजन्मनिभू
मिपः ॥ कीकटाधिपतिर्भूत्वाचोग्रदंडःप्रतापवान् ॥१२॥ सहिसैन्यमनुष्याणांप्रजानांदंडनेरतः॥अगम्यागमनंकृत्वाअखाद्यंखादितंद्विज॥
॥ १३ ॥ एवंसन्यवसत्तत्रबहुवर्षगतागतैः ॥ समरेषुमृतःशूरोगतश्चेंद्रपुरंतदा ॥ शतजन्मोत्तरेविप्रमानुषत्वमुपागतः॥१४॥आद्येतुर्येसप्तमे
च[illegible]ऽष्टादशसुतथा॥१५॥एकोनत्रिंशकेवर्षेमहत्कष्टंप्रवर्तते॥परमायुषश्चतस्याऽब्दाअष्टषष्टिप्रमाणकाः ॥ १६ ॥१।४।७।११।१८।२९॥
अथ अद्रियोगः ॥ अद्रियोगेचयोजातःपूर्वजन्मनिपादजः ॥ कणकाम्बइतिख्यातःसौराष्ट्रनगरेवसन् ॥१७॥कृषिवाणिज्यनिरतोधान्या
निविविधानिच ॥ साधुसेवापरोनित्यंब्राह्मणानांचसेवकः ॥१८॥ धनमैश्वर्य्यमतुलंशिवस्याराधनेरतः॥ एतस्मिन्समयेविप्रचंद्रग्रस्तेचपर्व
णि ॥ सर्वस्वंब्राह्मणेदत्त्वासदातिथ्योबभूवह ॥१९॥नानातीर्थाटनंकृत्वायोगाभ्यासरतस्ततः॥गिरिनारस्यनिकटेसमृतोदिविवैगतः२०॥
[illegible]भोग्यंचबभूवबहुवार्षिकम् ॥ ततःपुण्यक्षयेजातेपुनरागत्यभूतले ॥२१॥ वह्निबाणदशैकोनविंशतिर्याधिविंशतिः॥एकोनत्रिंश
[illegible]त्सुचैतथा ॥२२॥ पंचाशत्केषुवर्षेषुमहत्कष्टंप्रवर्तते॥सप्ताशीतिमिताविप्रवत्सराआयुषस्तथा ॥ २३ ॥ ३ । ५ ।१०।१९॥
[illegible]।२९।[illegible]।८७॥ अथआशनयोगः॥योजातआशनेयोगेपूर्वजन्मनिवैश्यजः ॥ कावेरीनिकटेचैवन्यवसत्पूर्वजन्मनि ॥ २४ ॥
[illegible]तिकर्कशा ॥ स्वस्त्रीवधंवैकृत्वाचपरदेशेतथागतः ॥ २५ ॥ ककुभिस्वर्धुनीतीरेतत्रस्थित्वा[illegible] ॥

...र्चनंकृत्वा...परायणः ॥ २६ ॥ आयुर्वस्तुसमाप्तत्वान्ममारपथिवैश्यजः ॥ तिर्य्यग्योनिसमुत्पन्नः मानुषत्वंभवेऽधुना ॥ २७ ॥
॥ २ ॥ ८ । १६ । २७ । ३८ । ४८ ॥ रुद्रनेत्राष्टभूपेषुसप्ताधिविंशतौतथा ॥ अष्टचत्वारिंशदब्देतथाऽष्टत्रिंशकेद्विज ॥ कष्टमायुःप्रमाणंचपर
मपंचोन... ॥ १९ ॥ २८ ॥ इति ॥ अथवासतुव्याधोऽभूत्पूर्वजन्मनिमहाधमः ॥ पशुपक्षिमृगव्याघ्रजीवानांघातनेरतः ॥ २९ ॥
एकस्मिन्समयेविप्रदंडकारण्यवासकृत् ॥ दैवाद्विप्रःसमायातःसत्यधर्मरतस्तथा ॥ ३० ॥ ब्राह्मणस्यप्रसंगेनसव्याधस्तीर्थकेगतः ॥
...तोऽस्य...भानौमासमेकंनिरंतरम् ॥ ३१ ॥ तेनपुण्यप्रभावेणसव्याधश्चदिवंगतः ॥ षष्टिवर्षसहस्रांतेपुनरागत्यभूतले ॥ ३२ ॥ तात्का
लिकग्रहास्तत्तेजातिवर्णस्वरूपकम् ॥ लांछनंतिलमाषाश्चवक्तव्यंज्ञानिसूरिभिः ॥ ३३ ॥ त्रिपंचनंदविश्वेषुदशसप्ताधिकेषुच ॥ कष्टमल्पायु
रब्दाश्चद्वाविंशत्प्रमितामताः ॥ ३४ ॥ परमायुश्चतस्यैवैकोनपञ्चाशदब्दकम् ॥ ३ । ५ । ९ । १३ । १७ । कष्टं २२ । ४९ ॥ माघेमासिसितेपक्षेसप्त
म्यांमरणंवदेत् ॥ ३५ ॥ अथअद्रियोगः ॥ अद्रियोगेयदाजातस्तपस्वीपूर्वजन्मनि ॥ वृंदारण्यस्यनिकटेनिवसन्परिवारयुक् ॥ ३६ ॥ देव्य
र्चनंकृतंसम्यक्विंशद्वर्षप्रमाणकम् ॥ ददाहभवनंकोपाद्ब्राह्मणस्यतदानघ ॥ ३७ ॥ तेनपापानुसारेणजायतेचव्रणांकितः ॥ मरणेजाह्नवी
तीरेगोशतंब्राह्मणेददौ ॥ ३८ ॥ तेनपुण्यप्रभावेणधनाढ्योजायतेऽधुना ॥ चंद्राऽग्निबाणवसुषुदिग्विश्वेषुचसप्तसु ॥ ३९ ॥ शशिविष्णौ
त्रिकेष्वेकोनविंशत्रिकेतथा ॥ ४० ॥ त्रयाधिकेविंशतिकेसप्तविंशतिकेतथा ॥ एकोनत्रिंशकेवर्षेकष्टमायुःप्रमाणकम् ॥ ४१ ॥ स्वल्पंतदाधि
क...त्रिंशद्वर्षंप्रकीर्तितम् ॥ परमायुश्चतस्यैववत्सराःपंचषष्टिकाः ॥ ४२ ॥ १ । ३ । ५ । ८ । १० । १३ । १७ । १९ । २३ । २७ । २९
आ...सितेपक्षेनवम्यांनिधनंभवेत् ॥ अथआशनयोगफलम् ॥ योगेआशनकेजातःपूर्वजन्मनिपादजः ॥ प्रभाकरइतिख्यातःप्रयागेनिवस

न्पुरा ॥ ४३ ॥ व्यापारेषुरतःसोऽपिनानाद्रव्यमुपार्जितम् ॥ भ्रातृभागोनदत्तश्चकृत्वायुद्धंपरस्परम् ॥ ४४ ॥ भ्रातृभ्रोदोषजनितःस तंहि.
र्वस्वंविलयंगतम्॥दशवर्षसहस्राणितिर्य्यग्योनीःपुनःपुनः॥४५॥पश्चाद्वैमानुषींयोनिंचागतोधरणीतले ॥ नात्युच्चोनातिह्रस्वश्चसर्वांगेषुप्र
चिह्नितः ॥ ४६ ॥ तात्कालिकग्रहैरेतज्ज्ञातव्यंसुखदुःखयोः ॥ २ । ४ । ७ । ११ । १८ । २१ । २६ । २९ । ३१ । ३५ । ३६ ॥
३८ । ४५ । ४७ कष्टम् ॥५०। अल्पमृत्युः । परमायुवर्षाणि॥८४॥चैत्रैमासिभवेन्मृत्युश्चतुर्थ्यांचासितेपुनः॥४७॥अथाम्बुयोगः॥ अम्बु
योगेयदाजातो महोदारोगुणाऽऽकरः ॥ आसीत्पूर्वमयोध्यायांसरयूनिकटेवसन् ॥ ४८ ॥ बुद्धिदासइतिख्यातःपत्नीपुत्रसमन्वितः ॥
तस्यभार्य्यामहादुष्टाकर्कशाकटुभाषिणी ॥ ४९ ॥ परपुंसिरताभ्रष्टापाखंडाऽऽचरणेरता ॥ एकदातुपररतांदृष्ट्वास्वांस्त्रींप्रकोपतः ॥ ५० ॥
शनैःशनैश्चतरसाखङ्गमुद्यम्यचैवसः॥अहन्प्राणप्रियांभार्य्यामविचार्य्यसुदुःखितः५१॥ अनेनविधिनाविप्रपापमुग्रमुपार्जितम्॥व्याकुलः
सपरित्यज्यवेश्माऽरण्यंजगामह ॥५२॥ दैवाद्व्याघ्रेणदुष्टात्मामारितःकालचोदितः ॥ सतेनकर्मणायुक्तःप्राप्तस्तुयमशासनम् ॥ ५३ ॥
[illegible]नानाजन्मानिमर्त्यलोकेपुनःपुनः॥पश्चान्मानुष्यमापन्नःकांतिमान्सुखसंयुतः॥५४॥३।४।७।१०।१३।१७।१९।पीडा।२०। अल्प
[illegible] महामृत्युः॥फाल्गुनस्यसितेपक्षेद्वितीयायांतिथौतथा ॥ अपराह्णेभवेत्तस्यपंचत्वंनाऽन्यजन्मवै॥५५॥इति॥ अथाऽर्बुदयोगः ॥
[illegible]योगेसपंडितस्तामसोऽथवा॥पूर्वंतुबाहुजोविप्रधरणीपतिरात्मवान् ॥५६॥ शिवस्यस्मरणेनिष्ठःसत्यवादीजितेंद्रियः ॥ परो
[illegible]धर्ममार्गेसनातने ॥५७॥ यज्ञांश्चविविधान्कृत्वाब्राह्मणास्तोषिताभृशम् ॥ एकदाचंद्रमाग्रस्तःतीर्थराजेतदाऽनघ ॥ ५८ ॥ १०
[illegible]ऽकृतमो[illegible]तम् ॥ आयुषंस्तुसमाप्तत्वात्तत्क्षेत्रेपंचतांगतः ॥ ५९ ॥ विमानमुपरिस्थित्वागतइंद्रबृहस्पति ॥

[illegible]तोभुवि मंडले ॥ ६० ॥ उग्रतेजाःप्रतापीचसेवकेनसमन्वितः ॥ द्रव्यंसुविपुलंगेहेपूर्वोपार्जितकंचयत् ॥६१ ॥
[illegible]।८।१३।१८।२३।२६।२९।३१ वर्षेषुपीडांविनिर्दिशेत्३९वर्षेअल्पमृत्युः ॥ परमायुरब्दाः . ६१ ॥ आषाढेधवलेपक्षेषष्ठ्यांचम
रणंध्रुवम्॥इति॥अथाऽऽल्लोलयोगः ॥दानशूरोमहाप्राज्ञःपूर्वजन्मनिभूपतिः॥६२॥ सर्वकर्मानुरक्तश्चवेश्यायांप्रीतिमुद्वहन् ॥ मध्यदेशेवसत्पूर्वं
माधवोतिप्रतापवान्॥कृत्वाराज्यंचनिर्विघ्नंसमृतःशरयूतटे६३तेनपुण्यप्रभावेणसजातोब्राह्मणोऽधुना॥ महाभिमाननिरतोविद्ययाचसमन्वि
तः॥६४॥नानादेशाटनंकृत्वाबहुद्रव्यमुपार्जितम्॥१।४।७।९।१४।१९।२४।अल्पमृत्युः॥चतुःषष्टिश्चवर्षाणिकथितंप्राणधारणम्॥ वैशाखे
धवलेपक्षेनवम्यांनिधनंभवेत्॥६५॥अथात्मयोगः॥आत्मसंज्ञेचयोजातःपूर्वजन्मनिब्राह्मणः॥कर्मनाशानदीतीरेनिवसन्परिवारयुक्६६॥
हरिदेवइतिख्यातःपत्नीतस्यमनोहरा॥कृषिवाणिज्यनिरतोब्रह्मकर्मतुलुप्तवान्६७नसेविताअतिथयोनदत्तंदानमण्वपि॥एकस्मिन्समयेवि
प्रसाध्वीचस्त्रीकलंकिता ॥६८॥तेनपापानुसारेणश्रियस्तस्यक्षयंगताः॥समृतोगोमतीतीरेपुनरागत्यभूतले ॥६९॥ गौरोऽरुणोसमध्यश्च
क्षिप्रक्रोधीदयापरः ॥७०॥२।६।९।१३।१८।२१ वर्षेकष्टं ॥ ४२ अल्पमृत्युः ॥ ६९ परमायुः ॥ इति॥अथाऽनादरयोगः ॥ अनादरेनरो
जातःपूर्वजन्मनिपादजः॥शोरठेनगरेचैवपुत्रदारसमन्वितः॥७१॥हिंसाघातरतोनित्यंचौर्य्यकर्मपरायणः ॥७२॥ समृतोराजदंडेनकारा
ऽऽगारेतदानघ ॥ ७३ ॥ नानानरकेषुसंस्थित्वाबहुवर्षसहस्रकम् ॥ पुनरागत्यमेदिन्यांदारिद्र्याच्चप्रपीडितः ॥ ७४ ॥ अन्तःक्रूरः
[illegible]पितुस्त्कर्मपरायणः ॥४।६।८।११।१७।१८।२२। २८ एषुमासेष्वथोवर्षेपीडनंबहुकीर्तितम् ॥ ७५ ॥ ३६ वर्षेअल्पमृत्युः ४९
परमायुः॥ ज्येष्ठमासेसितेपक्षेचतुर्थ्यांचैवपञ्चता॥७६॥अथाऽनंतसंज्ञकयोगः॥अनन्तयोगेयोजातोगुर्जरेनगरेपुरा॥माधवेतिसमाख्यातः

कन्यापुत्रविवर्जितः। चातुर्मास्यव्रतंकृत्वाचांद्रायणमथाऽऽचरत्॥७७॥एवंस्वल्पतिथेकालेसमृतोगदपीडितः॥षष्टिवर्षसहस्रांतेपुनरागत्यभू
तले॥७८॥स्वस्रादिभीषणाकारःदेवतागुरुपूजकः ॥ परभाषाविघातार्थेसंधानंकथितंतदा॥७९॥तेनपापानुसारेणपत्नीहानिःपुनःपुनः ॥
३।६।९।११।१९वर्षेकष्टं॥२० वर्षेअल्पमृत्युः॥परमायुर्वर्षाणि ५८ ॥ भाद्रेमासित्वधवलेद्वादश्यांमरणंवदेत् ॥८०॥ अथौषधीयोगः ॥योगे
औषधिकेजातःपूर्वजन्मनिवैश्यजः॥कालिंजरस्यनिकटेन्यवसत्परिवारयुक्।८१।जनार्दनइतिख्यातःपत्नीतस्यातिकर्कशा।परवित्तापहा
रीचद्रव्यस्योत्पादनेरतः॥८२॥ब्राह्मणस्यहृतंद्रव्यंकृत्वाचविविधाञ्छलान्॥नदत्तंद्विजमुख्यायलोभोपहतचेतसा॥८३॥ एववैश्योवर्तमा
नःसमृतःकालचोदितः॥नरकेषुपरिस्थित्वानानाजन्मानिचाप्तवान्॥८४॥दिव्यवर्षसहस्रांतेपुनरागत्यभूतले ॥ प्रमादीधूर्तोविषयीकुनखी
चंचलःशठः॥८५॥दीर्घसूत्रीमनोत्साहीसर्वांगेपीडनंमहत्॥१।३।६।८।१२ कष्टम्॥षोडशाब्देअल्पमृत्युः ॥ परमायुर्वर्षाणि६५॥ कार्तिके
धवलेपक्षेसप्तम्यांनिधनंभवेत्॥८६॥अथाऽऽरोयोगः॥आरयोगेचयोजातःसपुमान्दीर्घजीवनः ॥ आसीत्पूर्वेभवेविप्रोम्लेच्छवंशेतदावसत्
॥८७॥ केशवेतिसमाख्यातःयोगमार्गपरायणः ॥एकदाद्विजमुख्यःसशिवस्यस्मरणेरतः॥८८॥मृत्वाचजाह्नवीतीरेगतोऽसौनंदनंवनम् ॥
क्षीणेपुण्येततोजातःपुनरागत्यभूतले॥८९॥परोपकरणेनिष्ठःसर्वदासत्यभाषकः॥१।३।६।९।११।१७।२३वर्षेचातिकष्टं॥४९अल्पमृत्युः॥
७० महामृत्युः॥आश्विनेधवलेपक्षेतस्यमृत्युर्भवेद्ध्रुवम् ॥९०॥ अथापंगुयोगः ॥ अपंगुयोगेयोजातोद्विजोऽभूत्पूर्वजन्मनि॥देशेहिकीकटेवे
[illegible]संयुतः॥[illegible]मोदरइतिख्यातःसर्वशास्त्रार्थपारगः॥९१॥नृपद्वाराकृताप्राप्तिर्द्रव्याणिविविधानिच॥सत्कर्मसुव्ययंकृत्वाब्राह्मणा[illegible]
[illegible]॥९२॥[illegible]तपश्चर्यामथाकरोत्॥तत्रभाविबलात्पुत्रस्वैरिण्येकासमागता॥९३॥ तपश्चर्यांपरित्यज्य[illegible]

[illegible] ॥ [illegible]लोकेचभास्करे॥षष्टिवर्षसहस्रांतेपुनरागत्यभूतले॥गौरांगोदीर्घदेहश्चमनस्वीतेजसांपतिः ॥ २।४।९।११।
[illegible]।१७ मृत्युसमंकष्टम् परमायुर्वर्षाणि ६३॥ भाद्रेमासिसितेपक्षेतृतीयायांचपंचता॥९४॥इति॥अथाऽनुमोदितः॥ आसी[illegible]
[illegible]बाहुजो[illegible]नपानपि ॥ परमेश्वरइतिख्यातःकंकदेशेऽवसत्पुरा ॥ ९५ ॥ मद्यपानरतःसोऽपिक्रव्यभोजनसंयुतः॥कुंभीपाकेतथागत्वा[illegible]
[illegible]योनिसहस्रकम् ॥ ९६ ॥ समृतःसरयूतीरेतेनासौमानुषोऽभवत् ॥ प्रपंचाधिकरणेनिष्ठःइंद्रजालीचभ्रष्टकः ॥ ९७ ॥ परापवादनिरतो[illegible]
[illegible]त्कर्मरतस्सदा ॥ २।४।८।१२। मृत्युसमंकष्टम् ॥ २७ ॥ अल्पमृत्युर्यदिजीवतितदावर्ष ५१ परमायुः ॥ श्रावणेचाऽसितेपक्षेदश
म्यांचैवपंचता ॥ ९८ ॥ इति ॥ अथाऽष्टकयोगः ॥ अष्टयोगेनरोजातःपूर्वजन्मनिमैथिले ॥ नामतोवासुदेवश्चमिथ्याजल्पतिनित्यशः ॥
॥ ९९ ॥ एकस्मिन्समयेविप्रनृपद्रव्यंचचोरितम् ॥ तत्सकाशान्मृत्युरभूदश्वत्थद्रुमकेतटे ॥ गतोसाविन्द्रलोकेचपुनरागत्यभूतले ॥ मुखं
चचिह्नितंतस्यपरकार्य्यविनाशकम् ॥ वर्षेतुर्येऽष्टमेकष्टंषोडशेऽपिज्वराकुलः ॥१००॥ विंशद्वर्षांतरेविप्रह्यल्पमृत्युर्भविष्यति ॥ यदिजीव
तिबालोस्यषष्टिवर्षांतरेमृतिः ॥१०१॥ इति ॥ अथाऽम्बरेश्वरयोगः ॥ अम्बरेश्वरयोगेचयदिजन्मधरातले ॥ देवरूपीसात्त्विकश्चप्रज्ञायुक्तो
नरोभवेत् ॥ १०२॥ वैष्णवोदानशीलश्चपितृभक्तिपरायणः ॥ सुधीःसर्वेषुशास्त्रेषुकाव्याऽलंकारबोधकः ॥ १०३ ॥ सर्वश्रेष्ठोगुणाऽतीतः
प्रथमाऽब्देसकष्टितः॥४०।४९।१७ अल्पमृत्युः॥परमायुर्वर्षाणि॥६८॥आषाढेधवलेपक्षेसप्तम्यांनिधनंभवेत्॥१०४॥इति॥ अथाऽस्वनी
[illegible]योगेचास्वनिकेजातःपूर्वजन्मनिपादजः॥विपाशानिकटेचैवन्यवसत्पूर्वजन्मनि॥१०५॥सुंदरेतिसमाख्यातःपत्नीपुत्रसमन्वितः॥
[illegible]निरतोब्राह्मणानांचनिंदकः॥१०६॥एकस्मिन्समयेविप्रह्यनृतौचविमोहितः॥गोत्रजागमनंकृत्वापापमाचरितंत्विदम्॥१०७॥

समृतः शस्त्रदोषेण पापकिन्नरकेगतः ॥ पुनरागत्यमेदिन्यांकष्टेनाऽतिप्रपीडितः ॥ १०८॥ १। २। ४। ८। १०। १२। १८
। २२। २७ एषुवर्षेष्वल्पमृत्युः ॥ यदिजीवतिमानवस्तदायुरब्दाःपञ्चपञ्चाशत्प्रमाणाःप्रकीर्तिताः ॥ १०९ ॥ ज्येष्ठेमासितुधवलेचाष्टम्यां
मरणंभवेत् ॥ ११० ॥ इति ॥ अथाऽश्वलोहितयोगः ॥ कश्चित्क्षात्रकुलेपूर्वंतथाचनर्मदातटे ॥ दरीतिचपुरीभव्याप्रकीर्णागुणिनांगुणैः ॥
॥ १११ ॥ भीष्मश्येनइतिख्यातस्तत्रराजातुधार्मिकः॥ पत्नीहारवतीख्यातापतिसेवापरायणा ॥११२॥ दम्पतीतौगतौतीर्थेकृत्वादानार्च
नंभृशम् ॥ चंद्राद्रिनिकटेचैवतपश्चर्य्यामथाऽकरोत्॥११३॥ आविर्बभूवभगवान्प्रत्यक्षोगरुडध्वजः ॥ दत्त्वावरत्रयंतस्यअंतर्धानंगतोहरिः
॥११४॥ दम्पतीतौतुसहसापुनरागत्यभूतले॥तपस्वीतेजसाऽधिक्योधेनुब्राह्मणपालकः॥११५॥ सर्वसौख्येचनिरतःनानाद्रव्यसमन्वितः
४। ९। ११। १४। १८। २१। २४। २९ महाकष्टम् ॥ ३८ अल्पमृत्युः ॥ परमायुर्वर्षाणि ७० ॥ कार्तिकेशुक्लपक्षेतुपञ्चम्यांनिधनंभ
वेत् ॥ ११६ ॥ अथक्षेपकावलोहितयोगः ॥ अवलोहितेपियोजातःकश्चित्पादजकेकुले ॥इंद्रप्रस्थस्यनिकटेन्यवसत्पूर्वजन्मनि॥११७॥
देवराजइतिख्यातोब्राह्मणानांचसेवकः ॥ द्रव्यंसुविपुलंकृत्वातथाभूपानुकम्पया ॥ ११८ ॥ वापीकासारकूपाश्चारामाबहुविधाःकृताः ॥
जाह्नवीनिकटेमृत्युर्बभूवद्विजसत्तम ॥ ११९ ॥ पुनरप्युज्ज्वलेदेशेबभूवचद्विजस्तदा ॥ तत्रस्वर्गसमंभोगंभुक्त्वासचनिरंतरम् ॥ १२० ॥
तृतीयेजन्मनिप्राप्तोब्राह्मणस्यकलेवरम् ॥ धर्मशीलश्चमतिमाञ्श्लाघनीयगुणःप्रियः ॥ १२१ ॥ १। ५। ७। ११। १५। १९। २४
अल्पमृत्युः॥परमायुर्वर्षाणि ६७॥चैत्रेमासिद्वितीयायांशुक्लपक्षेद्विजोत्तम॥वक्तव्यंमरणंचास्यसर्वथाप्यनिवारितम् ॥१२२ ॥अथऔदुंबरयो ३२
गः॥पुराकर्नाटनगरेब्राह्मणःशास्त्रकोविदः॥धर्माऽधर्मविवेकीचनृपद्वारेप्रतिष्ठितः १२३॥एकदात्वनृतौविप्रस्तुकामविमोहितः॥ सतींगत्वाच

तेनापिपापेननरकंगतः ॥ १२४ ॥ अशीत्यब्दसहस्रांतेपुनरागत्यभूतले ॥ तिर्यगाननवान्भूत्वात्तस्वाऽभूत्यापवर्जितः ॥ १२५ ॥ ३।४
९।१३।१८ कष्टं॥परमायुर्वर्षाणि ९० भाद्रेमासितुधवलेनवम्यांमरणंभवेत्॥१२६॥इति॥अथाऽपाख्ययोगः ॥ अपाख्ययोगेयोजातस्तप
स्वीपूर्वजन्मनि॥दशारण्येवसत्सोपिशिवस्यस्मरणेरतः ॥१२७ ॥ एकदाचन्द्रमोग्रस्तेतीर्थराजेसमागतः॥वेण्यांमनोबभूवास्यतेनयातोदि
वंप्रति॥१२८॥क्षीणेपुण्येसमागत्यब्राह्मणस्यकुलेऽधुना ॥ गौरांगोदीर्घनेत्रश्चधनधर्मसमन्वितः ॥१२९॥३।८।११। १६।२१ वर्षे कष्टम्
४६ वर्षे मृत्युः॥आश्विनेकृष्णपञ्चम्यांमरणंचभवेद्ध्रुवम्॥१३०॥अथाऽन्तारिक्षयोगः॥अंतारिक्षेचयोजातःपूर्वजन्मनिमागधे॥ इंद्रवर्मेतिवि
ख्यातःपत्नीतस्यप्रभाकरी॥१३१॥महाभिमाननिरतोद्रव्यस्योत्पादनेरतः॥एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥१३२॥ भगिनीपु
त्रस्यागतस्यचादरंकृतवान्भृशम्॥स्वगृहेस्थापयामासमासमेकंनिरंतरम्॥१३३॥तस्यद्रव्याणिसर्वाणिगृहीत्वाविविधैश्छलैः॥ नदत्तंतेनवि
प्रातःकृतंयुद्धंपरस्परम् ॥१३४॥ एवंस्वल्पतिथेकालेबाहुजःपंचतांगतः॥ततोनरकयोनिंतुनानाजन्मनिप्राप्तवान्॥१३५॥अस्यजन्मतृती
यंचविप्रवंशेसमुद्भवम्॥कापटचाऽऽचरणेमग्नोनानाकष्टसमन्वितः ॥ ३।६।९।११।१६।१९।२१।२७ वर्षेकष्टम्३६अल्पमृत्युः ॥ परमायुर्व
र्षाणि६७ आषाढेशुक्लपक्षेहित्रयोदश्यांचपंचता ॥१३६॥इति॥अथाऽनादियोगः ॥ योगेअनादिकेजातः प्रयागेन्यवसत्पुरा ॥ पापकर्मो
द्यमेमग्नश्चौरकर्मरतःसदा ॥ १३७ ॥ एकदादैवयोगेनतन्मार्गेचसमागता ॥ शूद्रस्यदुहिताशुभ्रागर्भभारसमन्विता ॥१३८॥ स्थूलेनल
कुटेनाऽथताडितामस्तकेहिंसा ॥ मृतातेनैवदुःखेनपापमाचरितंत्विदम्॥ १३९ ॥ तेनपापानुऽसारेणनानाजन्माबभूवह ॥ कीटभृंगविहं
गादितिर्यग्योनिंपुनः पुनः ॥ प्राप्यमानुष्यमापन्नंकिंचिद्वित्तसमन्वितः ॥ १। ४। १०। १६। १९। २२। २५ वर्षेकष्टम् ॥ परमा

र्वर्षाणि ॥८९॥ कार्त्तिकेशुक्लपक्षेतुसप्तम्यांमरणंध्रुवम् ॥१४०॥इति ॥ अथाऽहर्गणयोगः ॥ अहर्गणेसमुत्पन्नआसीत्पूर्वंतुपादजः॥चंद्रसेन इतिख्यातः पत्नीतस्यमनोरमा ॥ १४१॥यमुनादक्षिणेभागेन्यवसत्परिवारयुक् ॥ धनाढ्यश्चाऽतिभक्तश्चमुक्तामालीसुरूपकः ॥१४२॥ तस्मिन्ग्रामेवसत्येकोब्राह्मणोनीतिमानपि ॥कृतवांस्तत्प्रसंगेनतीर्थाऽटनमसौमुदा॥ १४३॥ सत्पात्रेहिद्विजेदत्तागोभूम्यश्वहिरण्यकम् ॥ समृतोगोमतीतीरेपुनरागत्यभूतले ॥ १४४ ॥ गोलांकितोभव्यरूपश्चिह्नंदक्षिणवामयोः ॥ २ । ४ । ८ । ११ । १७ । १९ वर्षेकष्टम् २२ अल्पमृत्युः॥ परमायुर्वर्षाणि ७९ भाद्रेमासेशुक्लपक्षेतिथौषष्ठ्यांनजीवति ॥ १४५ ॥ अथाश्वरेखायोगः ॥ अश्वरे खानाम्नियोगेजातःपूर्वंसब्राह्मणः ॥ विद्याधनयुतश्चाऽपिकार्पण्येनविमोहितः ॥ १४६ ॥ परद्रव्यापहारीचपरनिंदापरायणः ॥ पापिष्ठोहिंसकश्चैवपुत्रस्त्रीभ्रातृसंयुतः ॥ १४७ ॥ एकस्मिन्समयेविप्रब्राह्मणस्यप्रसंगतः ॥ कथांपौराणिकींश्रुत्वालग्नचित्तोहरौ द्विजः ॥ १४८ ॥ किंचिद्दानार्चनंकृत्वातीर्थराजेतथाऽनघ ॥ समृतोजलमध्येहितेनयातोदिवंप्रति ॥ १४९ ॥ इंद्रलोकात्परि भ्रष्टआगतोधरणीतले ॥ नात्युच्चोनातिह्रस्वश्चचिह्नंदक्षिणवामयोः॥ १५० ॥ १।४।६।८।१२।१७ एतद्वर्षेमासेपीडा २० वर्षेअल्पमृत्युः परमायुर्वर्षाणि६७॥श्रावणेचासितेपक्षेदशम्यांचैवपंचता॥१५१॥इति॥अथाऽवनीशयोगः॥अवनीशेयदाजातःसर्वविद्याविशारदः॥ पूर्वंज न्मांतरेचैवराजाश्रेष्ठकुलेतदा ॥ १५२ ॥ सुंदरीतिसमाख्यातः पत्नीतस्यपतिव्रता ॥ नानाविलासविभवैः सुताऽऽनंदेनसंयुतः ॥ १५३ ॥ सत्पात्रायकुलीनायब्राह्मणायकुटुम्बिने ॥ गोभूम्यश्वहिरण्यानिदानंदत्त्वाविशेषतः ॥ १५४ ॥ एकस्मिन्समयेविप्रअरातिश्चसमागतः ॥ कृत्वाचस्वंयुद्धंखड्गेनद्विजसत्तम ॥ १५५ ॥ समरेषुमृतःशूरोगतोसौनंदनेवने ॥ पुनरागत्यमेदिन्यांपूर्वपुण्यप्रभावतः ॥ १५६॥ ११।

संहि.

कष्टम्॥२४ वर्षेअल्पमृत्युः ॥ परमायुर्वर्षाणि४७॥ज्येष्ठमासतृतीयायांशुक्लपक्षेऽपराह्णके॥पंचत्वंचभवेत्तस्यनात्रकार्य्याविचारणा॥१५७॥
अथाऽनात्मकयोगः ॥ अनात्मयोगेऽपिचजातजन्माप्रकोपवादीपरकार्य्यनाशकः ॥ आत्माऽर्थचिंताकुटिलः कुकर्माकुमार्गगामीपरवित्त
हारकः ॥ १५८ ॥ चिरंप्रशांतिः प्रकृतिः सनातनीसरोषवार्तोगुरुदेवनिंदकः ॥ पूर्वार्जितार्थस्यकरोतिनाशंसंतानहीनःसततंमनुष्यः ॥
॥ १५९ ॥ सोऽसौवैश्यकुलेपूर्वंनर्मदादक्षिणेतटे ॥ ईश्वरेतिप्रसिद्धश्चक्रयविक्रयणेरतः ॥ १६० ॥ तत्सकाशात्कृतंद्रव्यंभूमौस्थापित
वान्स्वयम् ॥ नित्यंकदन्नंभुंक्तेह्निदानंकृतवान्क्वचित् ॥१६१॥ गतोसौनरकेघोरेतिर्य्यग्योनिंपुनः पुनः ॥ पश्चात्प्राप्तोमनुष्यत्वंमर्त्यलोके
समागतः॥१६२॥गौरारुणोदीर्घदेहःप्रथमाऽब्देसकष्टितः॥४।८।११।१४।१८।२०कष्टम्॥परमायुर्वर्षाणि८७॥चैत्रेमासेसितेपक्षेनवम्यांचै
वपंचता॥१६३॥अथांऽगिरायोगः ॥ अथांऽगिरायोगभवंचजन्मयत्पूर्वंद्विजेंद्रस्तपसिप्रवीणः ॥ वनाद्रिगेहश्छदनाम्बुभोजनःशिवस्यभ
क्तः सचपारलौकिकः ॥ परोपकारीसचदाननिष्ठः सत्यात्मकःशक्तियुतःपरार्थम् ॥ १६४ ॥ गोदावर्य्याश्चनिकटेसमृतःकालचोदितः॥
पूर्वपुण्यप्रभावेणसजातोब्राह्मणोधुना ॥ १६५ ॥ वेदविद्याविवेकीचसर्वशास्त्रस्यपारगः ॥ उदारःपितृभक्तश्चसर्वपूज्योजनेश्वरः ॥१६६॥
धार्मिकःसत्यवादीचजितेंद्रियपराक्रमी ॥ ४ । ५ ।७ । १० ।१२ वर्षेकष्टम्॥२९ वर्षेअल्पमृत्युः॥परमायुर्वर्षाणि४८॥कार्त्तिकेचासितपक्षे
ह्येकादश्यांचपंचता ॥ १६७ ॥ अथाऽष्टवार्तिकयोगः ॥ कश्चिद्दासकुलेपूर्वंगौडदेशेवसन्नपि ॥ कंकरेतिसमाख्यातःपरिचर्य्यापरायणः ॥
॥१६८॥नृपाऽनुकम्पयाविप्रद्रव्यंतुविपुलंकृतम्॥धर्ममार्गेव्ययंकृत्वाह्यारामाविविधाःकृताः ॥१६९॥ आयुषस्तुसमाप्तित्वात्समृतः काल
चोदितः ॥ पूर्वपुण्यानुसारेणजातोवैश्यकुलेऽधुना ॥ १७० ॥ गौरांगोदीर्घदेहश्चचंचलश्चधनान्वितः ॥ २ । ६ ।९।११।१४।१७ वर्षेकष्टं

२७अल्पमृत्युः ॥ परमायुर्वर्षाणि ७३ ॥ आश्विनस्यासितेपक्षेनवम्यांमरणंध्रुवम् ॥ १७१ ॥ अथाऽत्रदंडयोगः ॥ आसीत्पूर्वंद्विजश्रेष्ठः संहि.
पंपारण्यस्यसन्निधौ ॥ आश्रयेतिसमाख्यातोविद्यावेदविवर्जितः ॥ १७२ ॥ बाहुजस्यप्रसंगेनजीवाश्चबहुघातिताः ॥ वनेदावाग्निदाहे
ननितरांमांसभक्षणम्॥ १७३॥अभक्ष्यंभक्षितंतेनह्यगम्यागमनंकृतम्॥ तेनपापानुसारेणपीड्यमानश्चव्याकुलः॥१७४॥३।६।८। ९। १३
१८पीडा॥परमायुर्वर्षाणि९७॥मार्गशीर्षेसितेपक्षेऽष्टम्यांतुनिधनंभवेत् ॥१७५॥ अथाऽश्रुपातयोगः ॥१॥ अश्रुपातेनरोजातःकीकटेपूर्व
जन्मनि ॥ उदयेतिप्रसिद्धोऽसौकाश्मीरंगतवान्द्विजः ॥ १७६ ॥ तत्रस्थित्वाद्विवर्षंहिविद्याभ्यासमथाऽकरोत् ॥ स्वदेशेपुनरागत्यहर्ष
गद्गदमानसः ॥ १७७ ॥ इंद्रजालीबभूवाऽपिलोकानांवंचनेरतः ॥ एवंगतेतुवयसिवृद्धेसतिद्विजोत्तम ॥ १७८ ॥ चंद्रग्रस्तेप्रयागेचसमृतो
गदपीडितः ॥ पुनर्जन्मपुनर्मृत्युर्जन्ममृत्युशतैरपि ॥ पुनर्मानुषयोनौसमातृकुक्षेःसमुद्भतः ॥१। २।४ ।८।११।१६।१९ वर्षेषु पीडा ॥
परमायुर्वर्षाणि ५९ ॥ श्रावणेधवलेपक्षेपंचम्यांमरणंध्रुवम् ॥१७९॥ अथाऽनर्घयोगः ॥ योगेत्वनर्घकेजातःपूर्वजन्मनिपादजः ॥ परशुरा
मइतिख्यातःपत्नीपुत्रसमन्वितः ॥१८०॥ मध्यदेशेऽवसत्सोपिकृषिकर्मरतःसदा ॥ एकस्मिन्समयेविप्रकृतंकर्मजुगुप्सितम् ॥ १८१ ॥
सीमावादरतस्तत्रगोपुत्रोघातितस्तदा ॥ निशायांचौर्य्यकार्येणगोवित्तमहरद्विज ॥ १८२ ॥ एवंस्वल्पतिथेकालेगतेयातोमृतिंद्विजः ॥
दशजन्मोत्तरेविप्रपुनरागत्यभूतले ॥ १८३ ॥ श्यामारुणोदीर्घदेहश्चंचलश्चतुरःसुधीः । १ । ४ । ८ । १० । १३ । १७ । २० । २९ महा
कष्टम्॥परमायुर्वर्षाणि४८॥भाद्रेमासेशुक्लपक्षेचाष्टम्यांमरणंध्रुवम् ॥१८४॥अथांडयोगः ॥ अंडयोगेसमुत्पन्नस्तपस्वीपूर्वजन्मनि॥विंध्या
द्रिनिकटेचैवतपश्चर्य्यामथाकरोत् ॥ १८५ ॥ एकदादैवयोगेनस्वैरिण्येकासमागता ॥ दृष्ट्वापरस्परंचित्तेकामबाणेनमोहिते ॥ तप ३४

श्वर्य्यांपरित्यज्यभक्ताद्यैर्व्यसनेरतः ॥ १८६ ॥ तेनपापानुसारेणतपस्वीनरकंगतः ॥ दशवर्षसहस्रांतेपुनरागत्यभूतले ॥ महोक्षेणसमंगर्वी
प्रथमाब्देसकष्टितः ॥ १ । ३ । ५ । ९ । १३ । १८ ॥ एतद्वर्षेकष्टम् ॥ परमायुर्वर्षाणि ९१ मार्गशीर्षेतुधवलेद्वादश्यांचैवपंचता ॥१८७॥
अथाऽल्कायोगः ॥ अल्कायोगेतुयोजातःसर्वपूज्यःपराक्रमी ॥ कंकदेशेऽवसत्पूर्वंहिरण्योनामब्राह्मणः ॥ १८८ ॥ ब्रह्मचर्य्यरतोमौनीपर
मार्थस्यशोधकः ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥ १८९ ॥ तन्मार्गेचसमायाताविप्रकन्यावरांगना ॥ सर्वाऽऽभरणभूषाढ्या
सुन्दरीनवयौवना ॥ १९० ॥ दूरादपिविलोक्याऽथधर्षितालोभहेतुना ॥ पश्चादेनांतुहत्वासभूषावस्त्राणिचाहरत् ॥१९१॥वयस्येवंगतेतेन
कृतःपापस्यसंग्रहः ॥ नरकेष्वनेकेषुस्थित्वानानाजन्मानिप्राप्तवान् ॥ १९२ ॥ नश्यामोनाऽतिगौरांगोनदीर्घोनातिह्रस्वकः ॥ ३। ५।८
११ । १६ । १९ वर्षेकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ भाद्रेमासेशुक्लपक्षेनवम्यांमरणंवदेत्॥१९३॥अथअल्कयोगः॥अल्केयोगेचयोजातः
पूर्वंगुर्जरदेशके ॥ वैखानसइतिख्यातःपत्नीतस्यातिकर्कशा॥१९४ ॥प्रत्यहंद्वंद्वकर्त्रीसापापमार्गपरायणा ॥ पापानिकृतवान्सम्यक्पत्नीसं
गात्तदानघ ॥ १९५ ॥ वार्द्धकेसमयेप्राप्तेकिंचित्पुण्याऽर्जनंकृतम् ॥ तद्गत्वायमलोकेचभुक्त्वाभोगांश्चशाश्वतान् ॥ १९६ ॥ पुनरागत्यमे
दिन्यांधनधान्यसमन्वितः ॥ पवित्रःपरमोदारःकिंचिद्विद्याविभाषकः ॥ १९७ ॥ १।३।४।८।११।१५।१९। २३ वर्षेकष्टम् ॥ परमायुर्व
र्षाणि ॥ ७५ ॥ माघेतुधवलेपक्षेचाष्टम्यांमरणंभवेत् ॥ १९८॥ अथागोचरयोगः ॥ अगोचरेजन्मनिपूर्वकालेहिडंबदेशेगुणिनांगुणज्ञः॥
सर्वार्थसौख्यंलभतेतदानींकृपाविशिष्टःसुरविप्रपूज्यः ॥ १९९ ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यगौरवात्॥गुरुर्निंदाकृतातेनगतोऽसौय
ममंदिरे ॥ २०० ॥ पुनरागत्यमेदिन्यांबाहुजस्यकुलोत्तमे ॥ इदंतृतीयंजन्माऽस्तिमातृकुक्षेःसमुद्भतम् ॥ २०१ ॥ ३ । ५ । ७ । ९ ।

१३ । १८ । कष्टम् ॥ ४१ अल्पमृत्युः ॥ परमायुर्वर्षाणि ६०॥ चैत्रेमासितुधवलेपंचम्यांनिधनंभवेत्॥२०२॥अथाऽऽरण्ययोगः ॥ आर ण्येजन्मयस्यासौपुरायोध्यांवसन्मुदा ॥ परमेश्वरइतिख्यातस्तदारोगैःप्रपीडितः ॥ २०३॥ राममंत्रंजपेन्नित्यंब्राह्मणानांचसेवकः॥तीर्थे तीर्थेकृतासेवाऋषीणांचपुनःपुनः ॥ २०४ ॥ वयस्येवंगतेविप्रसत्कर्मनिरतस्यच ॥ स्वर्गाऽपवर्गभोगांश्चभुक्तवान्परलोकगः ॥ २०५ ॥ एवंवयसियातेचसत्कर्मसुपरायणः ॥ स्वर्गापवर्गभोग्यंचबभूवद्विजसत्तम ॥ पुनरागत्यमेदिन्यांसर्वसौख्येनसंयुतः ॥१।३।६ । ९ । १३ । १८ । २१ । २६ । २९ । ३१ । ३६ वर्षेकष्टम्॥परमायुर्वर्षाणि॥८७॥आश्विनेचासितेपक्षेचतुर्थ्यांचैवपंचता॥२०६॥अथांगभंगयोगः॥ अंगभंगेनरोजातःपूर्वजन्मवनांतरे ॥ चित्रकूटस्यनिकटेन्यवसत्पूर्वजन्मनि ॥२०७॥चौरकार्येचनिरतोमार्गाणामवरोधकः॥ नानापापं कृतंतत्रदैवाद्विप्रःसमागतः ॥ २०८ ॥ ब्राह्मणोपिविलोक्येमंमार्गेचौरंसुनिर्दयम् ॥ ब्रह्मज्ञानोपदेशंहिकृतवांश्चविशेषतः ॥ २०९ ॥ पूर्वं कर्मपरित्यक्त्वातीर्थाऽवगाहनेगतः ॥ द्वारकायांमृतःसोऽपिप्राप्तवान्यममंदिरम् ॥ २१० ॥ यमलोकात्परिभ्रष्टःपुनरागत्यभूतले ॥ २। ४। ८ । ११ । १७ । २१ । २५ । २९ ॥ कष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ माघेमासितुधवलैकादश्यांचपंचता ॥२११॥अथाऽजयायोगः॥ कश्चिद्द्विजकुलेपूर्वंब्रह्मपुत्रस्यसन्निधौ ॥ राजेंद्रइतिविख्यातःपत्नीतस्यवरांगना ॥ २१२ ॥ नस्वकर्माऽस्तिव्यापारेद्रव्यंसुविपुलंकृतम् ॥ कदन्नंभुक्तवान्नित्यंमलिनाम्बरधारकः ॥ २१३ ॥ पशुघातःकृतःसम्यक्कृतंचौर्यंचपुष्कलम् ॥ एकस्मिन्समयेविप्रददाहभवनंह्यसौ ॥ ॥ २१४ ॥ ब्राह्मणस्यपरंरम्यंवैरभावेनभोःसुत ॥ तेनपापानुसारेणकुंभीपाकंतदागतः ॥ २१५॥ कृमियोनिशतेभूत्वामर्कटोभूद्वनान्तरे ॥ सप्तसप्तसरयूमध्येतेनाऽभूद्भूसुरोपिसः ॥ २१६ ॥ ३ । ४ । ८ । ११ । १६ । १८ । २२ । २७ । ३१ । ३७ । ३९ वर्षेकष्टम् ॥ परमायु

र्षाणि६८॥फाल्गुनेधवलेपक्षेषष्ठ्यांचैवतुपंचता॥२१७॥अथाऽर्कसंज्ञयोगः॥अर्कसंज्ञेचयोजातस्तपस्वीपूर्वजन्मनि ॥ गौडदेशेऽवसत्सो
पिसूर्य्यव्रतपरायणः॥२१८॥अभ्यागताःसेविताश्चचातुर्मास्यव्रतंकृतम्॥तेनपुण्यप्रभावेणबभूवक्षितिपाधिपः ॥२१९॥राज्यप्रभाववशगः
पापंबहुसमाचरत् ॥ चतुर्जन्मोत्तरेविप्रपुनरागत्यभूतले ॥ २२० ॥ पुत्रेकष्टंधनेकष्टंगदार्तोपिसदानघ ॥ ४।७।१०।१४।१९। मरणांत
कष्टम्॥परमायुर्वर्षाणि४८ज्येष्ठेमासिसितेपक्षेसप्तम्यांचैवपंचता॥२२१॥ अथअदांतयोगः॥अदांतयोगेयदिजन्मजातंसपुष्टगात्रःकृषिकर्म
कर्ता॥विज्ञःसशास्त्रेपरदारगामीधनार्जनंकृतवान्सर्वकाले ॥२२२॥ पूर्वजन्मनिविप्रोसौनर्मदानिकटेवसत् ॥ आत्मदेवइतिख्यातःपरमो
दारपावनः ॥ २२३ ॥ तीर्थाऽवगाहनंकृत्वादानंदत्त्वाद्विजायच ॥ एकदासमयेविप्रकामेनलुब्धचेतसा ॥२२४॥ भगिनीकन्यासुन्दरीचमृ
द्वंगीचारुलोचना॥ बलादाकर्षितातेनहठाच्चैवरतिःकृता॥२२५॥सामृतातेनदुःखेनपापमाऽऽचारितंत्विदम्॥पापात्पापफलंभुक्त्वायोनीर्भु
क्त्वासहस्रशः॥२२६॥इदंजन्मतृतीयंचमातृकुक्षेःसमुद्गतम् ॥३।५।८।११।१५।२०।२७।२९ वर्षेकष्टम्॥परमायुर्वर्षाणि७०॥आषाढेधवले
पक्षेनवम्यांचैवपंचता ॥ २२७ ॥ अथाऽन्नमेरुयोगः ॥ अन्नमेरौयदाजन्मपूर्वजन्मनियोषिता ॥ कुरुक्षेत्रस्यनिकटेसर्वसम्पद्युता
शुभा ॥ २२८ ॥ धर्मशीलामतिमतीबालरंडातपस्विनी॥कार्त्तिकेमाघवैशाखेव्रतंस्नानंसमाचरत् ॥२२९॥ प्रयागमगमत्सातुहरिद्वारेतथा
गता ॥ बद्रिकारण्यनिकटेनिराहाराचनिर्जला ॥२३०॥ शिवस्याऽऽराधनंकृत्वास्वगृहेपुनरागता ॥ वापीकासारनिर्माणमारामंचतथाकरो
त ॥ २३१ ॥ आयुषस्तुसमाप्तित्वात्सामृतादिविवैगता ॥ देवलोकात्परिभ्रष्टाचागताधरणीतले ॥२३२॥ पूर्वपुण्यप्रभावेणपुंस्त्वंहिजायतेऽ
धुना ॥ १।३।७।११।१५।२२।२७ महाकष्टम् ॥ परमायुर्वर्षाणि७६॥आश्विनेधवलेपक्षेऽष्टम्यांहिमरणंभवेत्॥२३३॥अथाध्यापकयोगः॥

अध्यापकेनरःशूरःसर्वशास्त्रस्यपारगः ॥ महेश्वरस्यनिकटेजर्जरोनामब्राह्मणः ॥ २३४ ॥ परमैश्वर्य्यमतुलंशिवस्यस्मरणात्कृतम् ॥ महा
भिमाननिरतः शाक्तधर्मेसदारतः ॥२३५॥ एकदाचम्पकारण्येपुण्यंबहुचकारसः ॥ तेनपुण्यप्रभावेणपुनर्वैब्राह्मणोधुना ॥ कन्याश्चबहवो
जाताःपुत्रेचिंतातथाधने ॥२३६॥ ४।७।१०।१५।१९।२२ वर्षेकष्टम् ॥ परमायुर्वर्षाणि ९१ इति॥अथाऽऽधानयोगः॥आधानजन्मापरमो
दरिद्रः काठिन्यदेहश्चलचित्तवृत्तिः॥परोक्षनिंदागुरुदेवकस्यआत्मार्थकेयुक्तिविशेषशोधकः ॥२३७॥ पूर्वजन्मनिचाभीरोवृंदाऽऽरण्यस्यस
न्निधौ॥गोधनंधनधान्यानिपुष्कलानिगृहेतदा॥२३८॥गावःपापात्मनातेनजलपानान्निवारिताः॥तेनपापानुसारेणश्रियस्तस्यक्षयंगताः॥
॥ २३९ ॥ पुनरागत्यमेदिन्यांकिंचिद्धनसमन्वितः ॥ २।४।६।९।१३।१९।२१।२८।३२।३८ वर्षेकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ अथाऽऽ
हुतियोगः ॥ योगेआहुतिकेजातः पूर्वजन्मनिबाहुजः ॥ अंधकोनामांऽगदेशेन्यवसत्पूर्वजन्मनि ॥ २४० ॥ महाभिमाननिरतःप्रजानांता
डनेरतः ॥ ब्रह्मस्वंभक्षितंसम्यक्परस्त्रीरमणेरतः ॥ २४१ ॥ चित्रगुप्तान्तिकेगत्वाविचचारपुंनःपुनः ॥ असिपत्रवनेघोरेबहुकालेऽ
वसत्तदा ॥ पुनरागत्यमेदिन्यामभूत्पापपरायणः ॥ २४२ ॥ १ । ३ । ६ । ७ । ९ । १४ । २४ । ३० कष्टम् ॥ परमायुः ७३ ॥
भाद्रेमास्यसितेपक्षेसप्तम्यांमरणंवदेत् ॥ अथाऽर्घयोगः ॥ अर्घयोगेचयोजातो दीर्घजीवीगुणाऽन्वितः ॥ महोदारःप्रवक्ताच
देवब्राह्मणपूजकः ॥ २४३ ॥ पूर्वजन्मेंदिरादेशेबाहुजः शास्त्रपाठकः ॥ एकस्मिन्समयेविप्रसूर्यग्रस्तेचपर्वणि २४४ ॥
सर्वंदत्त्वाब्राह्मणायसत्पात्रायकुटुम्बिने ॥ तेनपुण्यप्रभावेणपुनरागत्यभूतले ॥ २४५ ॥ ३ । ८ । ११ । १९ । वर्षेकष्टम् ॥ ३६
परमायुर्वर्षाणि ॥ ६७ ॥ अथांदोलीयोगः॥ आसीत्पूर्वंजगन्नाथेब्राह्मणोदेवपूजकः ॥ प्रसन्नइतिविख्यातः पत्नीपुत्रसमन्वितः ॥२४६ ॥

देव्याश्चपूजनेमग्नश्चातिथीनांप्रपूजकः ॥ एकदाद्रव्यलोभेनकृतंकर्मजुगुप्सितम् ॥ २४७ ॥ चोरितंभूषणंवस्त्रंब्राह्मणस्यतदानघं ॥ समृतः
कुष्ठरोगेणनरकेषुस्थितस्तदा ॥ २४८ ॥ पुनर्जन्मपुनर्मृत्युर्जन्ममृत्युःपुनःपुनः ॥ इदंतुदशमंजन्मगौरांगोदीर्घलोचनः॥२ । ४ । ६ । ९
१२ । १९ । २१ । २९ वर्षेकष्टम् ॥ परमायुर्वर्षाणि ७२ ॥ माघेमासिसितेपक्षेत्रयोदश्यांचपंचता ॥ २४९ ॥ इति॥अथाऽऽरुचियोगः ॥
योगेह्यारुचिकेजातःपूर्वजन्मनिपादजः ॥ नृपांनुकम्पयातत्रद्रव्याणिकृतवान्भृशम्॥एकस्मिन्समयेविप्रकथांश्रुत्वाहरेरिमाम् ॥२५०॥लग्नं
चहृदयंतस्यांपुण्यमार्गेरतोदृढः ॥ तीर्थेतीर्थेकृतासेवाऋषीणांचपुनःपुनः ॥ गोदानमश्वदानंचरौप्यस्वर्णकदम्बकम् ॥ २५१ ॥ स्वदेशे
पुनरागत्यहर्षगद्गदमानसः ॥ आयुषस्तुसमाप्तित्वात्सशूद्रःपंचतांगतः ॥ भार्य्यातस्यसतीभूत्वास्वर्गलोकमुभौगतौ ॥ २५२ ॥ ततः
पुण्यक्षयेजातेपुनरागत्यभूतले ॥ ० । ० । ० । १० । १४ । १७ । २४ । २८ वर्षेकष्टम् ॥ परमायुर्वर्षाणि ६४ ॥ इति ॥ अथाऽ
म्बरीषयोगः ॥ अम्बरीषेचयोजातःपूर्वजन्मनिद्राविडे॥जातःक्षात्रकुलेचैवसर्वसम्पद्युतोधनी ॥२५३॥ कार्पण्येमधुरालापीपरद्रव्याऽपहा
रकः ॥ भगिनीपुत्रस्तदाऽऽयातःस्वर्णभारसमन्वितः ॥ तस्यद्रव्याणिसर्वाणिगृहीत्वाविविधैश्छलैः ॥ २५४ ॥ नदत्तंतेनतद्द्रव्यंलोभो
पहतचेतसा ॥ समृतोद्रव्यशोकेनपापमुग्रमुपार्जितम् ॥ भागिनेयवधेनाऽसौनिरयंगतवान्मृतः ॥ २५५ ॥ विंशतिजन्मोत्तरेविप्र
त्विदानींदुःखभाग्भवेत् ॥ ३ । ६ । ९।१३ वर्षेकष्टम्॥परमायुर्वर्षाणि४१॥अथाऽम्बरीषद्वितीययोगः॥ अम्बरीषेचयोजातोगुणज्ञःपंडितः
सुधीः ॥ दर्शनीयोऽतिचतुरस्तथाचदीर्घलोचनः ॥ २५६ ॥ दयार्द्रोभक्तिसंयुक्तःपरकार्य्यस्यसाधकः ॥ आसीज्जन्मांतरेचैवकीकटे
हिवसन्नसौ ॥ शत्रुघ्नेतिसमाख्यातःपत्नीपुत्रसमन्वितः ॥ २५७ ॥ एकस्मिन्समयेविप्रसवैश्योलोभसंयुतः ॥ ब्राह्मणेनतस्यगेहेस्वर्ण

मुद्रासहस्रकम् ॥ स्थापितंतुपुनःकार्येजातेयाचितवान्स्वयम् ॥ २५८ ॥ नदत्तवाँल्लोभयुतःपलायनपरायणः ॥ सवैश्यःपंचतांप्राप्तः
पापाच्चनरकेगतः ॥ पुनरागत्यमेदिन्यांसुताऽऽनंदेनसंयुतः॥२५९॥३ ।९।१२ । १८ वर्षेपीडा ॥ परमायुर्वर्षाणि ४९ ॥ अथाऽमोघा
योगः॥कश्चित्क्षात्रकुलेपूर्वज्वालामुख्याश्चसन्निधौ।कर्मदासइतिख्यातःक्षात्रधर्मपरायणः॥सत्यवादीमहोग्रश्चमहाशूरोऽतिविक्रमी॥२६०॥
नानायुद्धंकृतंतेनजितंशत्रुबलंबलात् ॥ आरोपिताःसर्ववृक्षाःपथिकूपाश्चनिर्मिताः ॥ जलोत्सर्गवृषोत्सर्गंकृत्वासतुविधानतः ॥ २६१ ॥
आयुषस्तुसमाप्तित्वान्ममारपथिबाहुजः ॥ वैश्यगेहेसमुत्पन्नः काश्यांचैवोत्तरेदिशि ॥ इदंजन्मतृतीयंस्याद्बुद्धिमांश्चविचक्षणः ॥ २६२॥
३ ।५ । ८ । १२ । १९ । २३ । ३६ । ३८ ॥ वर्षेकष्टम् ॥ परमायुर्वर्षाणि ॥ ७३ ॥ अथाऽऽत्मबीजयोगः ॥ कश्चिद्वैश्यकुले
पूर्वंकेरलेहिवसत्यसौ ॥ रुक्मदइतिविख्यातःसपत्नीकः सपुत्रकः ॥ क्रयविक्रयकर्ताचवाणिज्येचपरायणः ॥ २६३ ॥ धर्ममार्गेचकुश
लोब्राह्मणानांचसेवकः ॥ तस्यभार्य्यामहादुष्टाकर्कशाकटुभाषिणी ॥ प्रत्यहंद्रोहकुशलासदानिष्ठुरभाषिणी ॥ २६४ ॥ एकस्मिन्समये
विप्रवैश्येनापिचक्रोधतः ॥ स्थूलेनलकुटेनैवताडिताबहुधातदा ॥ २६५ ॥ साम्प्रतातेनदुःखेनपापमाचरितंत्विदम् ॥ वैश्योपिपंचतां
प्राप्तःसगत्वायमशासनम् ॥ २६६ ॥ गर्भभ्रष्टेतदाभूत्वामाहिषोमर्कटोपिच ॥ मर्कटोमकरेमाघेकृष्णानद्यांचवैमृतः ॥२६७॥ तेनपुण्या
वशेषेणमानुषेहिभवेधुना ॥ १ । ४ । ८ । ११ ।१६।कष्टम् ॥परमायुर्वर्षाणि५३ । अथअकलयोगः॥अकलयोगेपियोजातःपूर्वजन्मनिब्रा
ह्मणः ॥ दंडकारण्यनिकटेनिवसन्परिवारयुक् ॥ २६८॥केशवेतिसमाख्यातःपत्नीतस्याऽतिदुर्भगा॥एकस्मिन्समयेविप्रपुरुषोऽन्यः समा 
गतः ॥ २६९ ॥ पर्य्यंकेस्थाप्यस्वस्थानेरतिंकृतवतीतदा ॥ ब्राह्मणोथविलोक्येमांचातिक्रोधेनकंपितः ॥ २७०॥कुंतेनतीक्ष्णधारेणवाति

तौतौद्विजोत्तम ॥ द्वौमृतौतत्रभोविप्रप्रायश्चित्तंनकारितम् ॥ २७१ ॥ तेनपापानुसारेणकष्टंजातंमुहुर्मुहुः ॥ ४ । ७ । ११ । १७ ॥ १९ ।
२४ । २८ ॥ मासेवर्षेप्रपीडितः ॥ परमायुर्वर्षेप्रपीडितंः परमायुर्वर्षाणि ७९ ॥ अथअकलात्मकयोगः ॥ अकलात्मकेयदाजन्मवेज
नाथेतदाऽवसत् ॥ वासुदेवइतिख्यातोब्राह्मणोदेवपूजकः ॥ २७२ ॥ प्रतिग्रहंचगृह्णातिनिर्माल्यंचतदाऽनघ ॥ एकस्मिन्समयेविप्रभिक्षुको
द्वारमागतः ॥ २७३ ॥ नदत्तंतस्यवैकिंचित्तिरस्कारमथाऽकरोत् ॥ तेनपापानुसारेणश्रियस्तस्यक्षयंगताः ॥ २७४ ॥ समृतश्चातिकष्टेन
पुनरागत्यभूतले ॥ नात्युच्चोनाऽतिह्रस्वश्चविद्वेषीकलहात्मकः ॥ २७५ ॥ पाखंडाऽऽचरणेमग्नोमिथ्याजल्पतिनित्यशः ॥ ३ । ६ । ९ ।
१२ । २४ । ३१ । ३४ । ४७ । ५५ अल्पमृत्युः ॥ परमायुर्वर्षाणि ८० ॥ अथअपर्णायोगः ॥ कश्चिच्छूद्रकुलेपूर्वंब्रह्मपुत्रस्यसन्निधौ ॥
कृषिवाणिज्यनिरतःसर्वसम्पद्युतोधनी॥२७६॥वारेश्वरइतिख्यातःपुण्यमार्गेसदारतः ॥ पूजकोव्रत्यतिथीनांचपरमोदारमानसः ॥२७७॥
संमृत्वासागरेतीरेबभूवहवणिग्गृहे ॥ शोणभद्रस्यनिकटेपत्नीपुत्रविवर्जितः॥२७८॥तीर्थाऽवगाहनेमग्नोवृन्दारण्येतदामृतः ॥ हंसोभूत्वामा
नसरसिमनुष्यत्वंगतोऽधुना ॥ ४ । ६ । ७ । १४ । २१ । २७ वर्षेकष्टम् ॥परमायुर्वर्षाणि ७७ । अथअवर्णयोगः ॥ अवर्णयोगेसमुत्पत्तिः
पूर्वजन्मनिसंकरः ॥ सारस्वतइतिख्यातोवाणिज्येचपरायणः ॥ २७९ ॥ एकदाककुभेदेशेसगत्वावृषभान्वितः ॥ विक्रयेद्विगुणंद्रव्यं
लब्ध्वास्वगृहमागतः ॥ २८० ॥ तस्यभ्रात्राकनिष्ठेनभागार्द्धंयाचितंतदा ॥ नदत्तंतस्यवैकिंचित्कृत्वायुद्धंपरस्परम् ॥२८१॥ तंहिखड्गेन
हतवान्कालेप्राप्तेमृतःस्वयम् ॥ नानानरकेषुसस्थित्वानानाजन्मानिचाप्तवान् ॥ २८२ ॥ पुनरागत्यमेदिन्यांकिंचित्पुण्यप्रभावतः ॥
श्यामारुऽणोमध्यकायश्चंचलोऽतिदुरासदः ॥२८३ ॥ ६ । ८ । ११ । १७ ॥ मासेवर्षेचकष्टितः ॥ परमायुर्वर्षाणि ॥ ७९ ॥

अथअनर्कयोगः ॥ पूर्वजन्मनिचांडालःकीकटेनिवसन्पुरा ॥ मानधातासमाख्यातोह्यसत्कर्मपरायणः ॥२८४॥ जीवांश्चाघातयामास तंहि-
क्रव्यभोजीसदाऽनघ ॥ एकदासमयेविप्रभाविनोऽर्थस्यगौरवात् ॥ २८५ ॥ गङ्गास्नानायसर्वेहितस्यग्रामनिवासिनः ॥ गतवन्तश्चतै
स्सार्द्धंगतोऽसौजाह्नवीतटे ॥ २८६ ॥ तत्रसस्नानमात्रेणचांडालःपंचतांगतः ॥ आरुरोहविमानाग्र्यमप्सरोभिस्सहैवच ॥ २८७ ॥ इंद्र
लोकेऽथगत्वाऽसौस्थित्वावर्षसहस्रकम् ॥ पुनरागत्यमेदिन्यांधनीमानीचसाम्प्रतम् ॥ २८८ ॥ १ । ४ । ६ । ७ । ९ । १९ वर्षेकष्टम् ॥
परमायुर्वर्षाणि ७६ ॥ अथअच्युतयोगः ॥ अच्युतेपिनरोजातःपूर्वजन्मनिबाहुजः ॥ प्रजाःपालयितासम्यक्पुत्रवत्सतदाऽनघ॥२८९॥
पुत्रकन्यासमानश्चपरोपकरणेरतः ॥ दम्पतीतौगतौतीर्थंदानंदत्त्वाद्विजायच ॥ २९० ॥ एकस्मिन्समयेविप्रकृत्वाविश्वासघातकम् ॥ तेन
पापाऽनुसारेणस्थित्वातुनरकेचिरम् ॥ २९१ ॥ इदंजन्मतुरीयंनप्राप्तंवैदैवयोगतः ॥ ७ । ४ । ९ । १३ । १८ । २१ वर्षेक
ष्टम् ॥ परमायुर्वर्षाणि ॥ ५९ ॥ अथाक्षियोगः ॥ अक्षियोगेनरोजातोदरिद्रः पूर्वजन्मनि ॥ नैष्ठिकःसत्यवक्ताचयशस्वीवागभी
रकः ॥ २९२ ॥ वीष्टलेतिसमाख्यातः पत्नीतस्यपतिव्रता ॥ एकस्मिन्समयेविप्रहठाद्वर्षतिवासवे ॥ २९३ ॥ निराहारस्यतस्यैवगता
ऽह्नांविप्रविंशतिः ॥ पर्जन्येह्निनिवृत्तेतुकश्चिद्धितण्डुलान्ददौ ॥ २९४ ॥ पाकेजातेतण्डुलानांभिक्षुकोद्वारमागतः ॥ २९५ ॥ तस्मै
निवेदितंसर्वंमुपोष्यपरिवारयुक्॥२९६॥गरुडोपरिस्थितंविष्णुंशंखचक्रगदाधरम् ॥ दृष्ट्वादरिद्रोऽसौविप्रपपातधरणीतले ॥ २९७ ॥ गरु
डोपरितुसंस्थाप्यवैकुण्ठंप्रापितस्तदा ॥ दिव्यवर्षसहस्रांतेपुनरागत्यभूतले॥२९८॥५ । ९ । १३ । १९ । २२ कष्टम् ॥ परमायुर्वर्षं १०० ३८
अथाक्षियोगः ॥ अक्षियोगेपियोजातः सपुमान्बहुभार्य्यकः ॥ लक्ष्मींभुक्त्वामहींभुक्त्वाकथांश्रुत्वाविशेषतः ॥ २९९ ॥ पूर्वजन्मनिम

हाराष्ट्रेनगरेन्यवसत्तदा ॥ देवरामइतिख्यातोबहुतीर्थाटनंकृतम् ॥ ३०० ॥ सप्तजन्मोत्तरेविप्रपुनरागत्यभूतले ॥ ३।६।९।१३।७।२५। ३१
वर्षेपीडा॥परमायुर्वर्षाणि ८३॥अथईक्षितयोगः ॥ ईक्षितेयोगेयोजातःसपूर्वंबाहुजःस्मृतः॥कर्णाटकेऽवसत्सोऽपिदानवेन्द्रोमहाबलः३०१
यज्ञांश्चविविधान्कृत्वाब्राह्मणास्तोषिताःपुरा ॥ एवंभुक्तेत्मवैराज्यंनिर्विघ्नंतुतदानघ ॥ ३०२ ॥ एकस्मिन्समयेविप्रब्राह्मणश्चतपोधनः ॥
बुभुक्षितोतिकृपणोमलिनाम्बरधारकः ॥ ३०३ ॥ देहिदेह्यवदद्वाक्यंनदत्तंतस्यवैक्वचित् ॥ अतिक्रोधेनतेनैवदत्तश्शापश्चदुष्करः ॥
॥ ३०४ ॥ म्लेच्छोभूत्वागतस्तस्मात्पर्वताऽरण्यसन्निधौ ॥ बहुवर्षसहस्रांतेमानुषत्वंभवेत्पुनः ॥ २।७।११।१७।१९। वर्षे कष्टम्॥
परमायुर्वर्षाणि ७० ॥ अथेन्द्रयोगः ॥ इन्द्रयोगेचयोजातःपूर्वजन्मनिब्राह्मणः॥३०५॥ अंगदेशेवसत्सोपिभीष्मदेवेतिविश्रुतः॥३०५सर्व
शास्त्रस्यवेत्ताचपरमोदारपावनः ॥ प्रयागेमकरेमाघेसस्नातोमृगगेरवौ ॥ ३०६ ॥ एकस्मिन्समयेविप्रसहशिष्येणब्राह्मणः॥देशेहिककुभे
चैवराजद्वारेसमाऽऽस्थितः ॥ ३०७ ॥ तेनभूपेनविप्रायद्रव्यंदत्तंचपुष्कलम् ॥ स्वदेशेहिसमायातोहर्षगद्गदमानसः॥३०८॥सन्मार्गेचव्य
यंकृत्वाबहुवर्षगताऽऽगतैः ॥ आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥३०९॥ देवलोकेऽभवत्प्राप्तस्तत्रस्थित्वाविशेषतः॥ पुनरागत्य
मेदिन्यांब्राह्मणस्यकुलेधुना ॥ ३१० ॥ गौरांगोद्दस्वदेहश्चविद्याविनयसंयुतः ॥ १।३।८।११।१४।१७।२४।२९ ॥कष्टम् ॥
परमायुर्वर्षाणि ७९ ॥ अथउग्रकयोगः ॥ उग्रकेचनरोजातोधर्मिष्ठःप्रियवाङ्मयः ॥ गुणशीलोयाचकश्चस्वप्रतापीजनेश्वरः ॥ ३११ ॥
बहुस्त्रीनायकोभूत्वाबहुग्रामाऽन्वितःसदा ॥ आसीज्जन्मान्तरेचैववैश्योनाम्नासुदर्शनः ॥३१२॥ व्यापारेषुरतोधीमान्द्रव्यंतुविपुलंकृतम् ॥
तीर्थावगाहनंकृत्वादानंदत्त्वाद्विजायच ॥३१३॥ प्रतिष्ठार्थंददौस्वर्णंस्वगृहेपुनरागतः ॥ गंगासागरकेगत्वामृत्वाचसदिवंगतः ॥ ततःपुण्य

क्षयेजातेमर्त्यलोकंसमागतः ॥ ३१४ ॥१।४।७।११।१९।२४ वर्षेपीडा ॥ परमायुर्वर्षाणि ॥ ७२ ॥ अथइलावर्तयोगः ॥
इलावर्तेपियोजातःसपुमान्गुणसागरः ॥ कंदर्पकेलिनिरतोद्रव्यस्योत्पादनेरतः ॥ आसीत्पूर्वेभवेसोऽपिबाहुजोमैथिलेवसन् ॥ ३१५ ॥
शिवदासइतिख्यातः सर्वसम्पद्युतोधनी ॥ सूर्य्यस्याऽऽराधनेनिष्ठोव्रततीर्थानुपालकः ॥ एकदाविपिनेरम्येकृतआखेटकोभृशम् ॥
॥ ३१६ ॥ हरिणीचसगर्भातुहताबाणेनवैतदा ॥ बाहुजोऽपिहतः सिंहैर्गतोऽसौयमलोकके ॥ ३१७॥ पुनराऽऽगत्यमेदिन्यांकिंचित्पुण्य
प्रभावतः ॥२।३।६।७।९। मासेवर्षेप्रपीडनम् ॥ परमायुर्वर्षाणि ६६ ॥ अथांऽशुमानयोगः ॥ अंशुमानेनरोजातः सर्वपापपरायणः ॥
ब्रह्मभक्तश्चनिपुणोमद्यमांसाऽदनेरतः॥३१८॥एकस्मिन्समयेविप्रविप्रोद्वाहश्चकारितः॥व्याधिग्रस्तस्यदीनस्यपरिचर्य्यामथाऽकरोत्३१९॥
एकदाचंद्रमोग्रासेसर्वस्वंविधिनाददौ ॥ समृतःसरयूतीरेपत्नीजातासतीतदा ॥३२०॥ उभयोःकर्मणोहेतोःस्वर्गेस्थित्वाविशेषतः॥ क्षीणे
पुण्येतुवैजातेचागतोधरणीतले॥३२१॥३।४।७।१०।१४।१९।२६।२९।३३ ॥ कष्टम् ॥ परमायुर्वर्षाणि ८५ ॥ माघेमासितुधवलेनवम्यां
चैवपंचता ॥इति॥ अथऊर्द्धलिंगयोगः ॥ ऊर्द्धलिंगेचबलवान्साहसीयुद्धविक्रमी॥क्रोधाऽनलसमःकीर्त्यानिश्छलः शुद्धमानसः ॥३२२॥
पूर्वजन्मनिकाम्पिल्येयमुनानिकटेवसन् ॥ससौदासोनामराजाबभूवक्षितिमंडले ॥३२३॥ सम्राट्सहससैन्येनपापकर्मोद्यमेरतः॥अदंडचो
दंडितस्तेनचागम्यागमनंकृतम् ॥ ३२४ ॥ श्राद्धंहोमस्तथावेदःपुराणंचनिवारितम् ॥ सकलेष्वपिलोकेषुव्यभिचाररतेनवै ॥३२५॥ एक
स्मिन्समयेविप्रह्येकाकीगहनंवनम् ॥ सराजाचाश्वमारुह्यजगाममृगयांप्रति ॥३२६॥ दृष्टास्त्रीःपूर्वबहवः संतिगंगातटेचयाः ॥ हवनंमार्जनं
जाप्यंकुर्वः शम्भुव्रतंखलु ॥ ३२७ ॥ सराजाविस्मितोभूत्वाप्रोचिवान्किकृतंत्विदम् ॥ शिवव्रतंचराजेंद्रवाञ्छितार्थफलप्रदम् ॥ ३२८ ॥

सप्रजाश्चिंतयामासमानसंपूजनंकृतम्॥एवंत्वल्पेगतेकालेपंचत्वंहिगतोनृपः ॥३२९॥यमदूताआगताश्चपाशैराजादृढीकृतः॥पश्चाद्रुद्रगणैः
प्राप्तैरब्राद्राजाप्रमोचितः॥३३०॥ अयंशिवस्यभक्तोहिकैलासशिखरेगतः॥दिव्यवर्षसहस्रांतेपुनरागत्यभूतले ॥३३१॥१।९।७।१२।वर्षे
कष्टम्॥परमायुर्वर्षाणि७०॥अथाऽगोचरयोगः॥अगोचरेचयोजातःपुष्करेपूर्वजन्मनि॥ गन्धर्वेतिसमाख्यातःपशुहिंसापरायणः॥३३२ व
नाद्रिनिकटेभूमौविचरंश्चसदाद्विज॥जीवान्संघातयामासनिर्दयःपापभाक्पुरा॥३३३एकस्मिन्समयेविप्रक्षुत्तृड्भ्यांव्याकुलेंद्रियः॥इतस्तत
श्चविचरन्कालवश्योबभूवह॥३३४॥स्थित्वाबिल्वतरोःशाखांनिशायांदैवयोगतः॥समृतस्तेनभोविप्रशिवलोकंसमागतः३३५॥बहुवर्षसह
स्रांतेपुनरागत्यभूतले।३।८।१३।१९।२२।२९।३२।३९वर्षेकष्टम्॥परमायुर्वर्षाणि ८४॥ अथएरंडयोगः ॥ कश्चित्पूर्वेकुलालोपिभांडमृन्मय
कारकः॥ विक्रीतेप्रतिमासांतेप्राप्तिस्तस्यविशेषतः॥द्रव्यंतुविपुलंकृत्वाह्यारामंचतथाऽकरोत् ॥३३६॥ वापीकासारनिर्माणेधर्ममार्गेसदार
तः ॥ देवलोकंचसप्राप्यपुनरागत्यभूतले॥वैश्यगेहंचसंप्राप्यबाहुजोपिपुनर्भवेत् ॥ इदंजन्मतृतीयंहिमातृकुक्षेःसमुद्गतम्॥३३७॥३।८।१४
कष्टम्परमायुर्वर्षाणि ५७ ॥ अथअत्रिपालिन्ययोगः ॥ अत्रिपालिन्यसंजातेपूर्वजन्मनिपादजः ॥ उज्जैननगरेचैवन्यवसत्परिवारयुक् ॥
॥३३८॥सत्संगेतस्यवैचित्तंकथांश्रुत्वामनोरमाम् ॥ तीर्थाटनंकृतंसम्यग्द्वारकायांतथाऽऽस्थितः ॥३३९॥ तत्रभाविबलात्पुत्रसमृत्वाचदि
वंगतः ॥ बभूवक्षितिपाधीशोविंशतिकोशाधिपस्तदा ॥३४०॥ नानापापंकृतंसम्यक्प्रसंगाच्चतदानघ ॥ तिर्यग्योनिसमुत्पन्नःशतधाचम
हीतले ॥ ३४१ ॥ ५।९।१६।१९।२९।३१। वर्षेकष्टम्॥परमायुर्वर्षाणि ६८ ॥ अथउंछयोगः ॥ उंछयोगेचयोजातो बाहुजःपूर्व
जन्मनि ॥ नृसिंहइतिविख्यातो वानप्रस्थोबभूवह ॥ ३४२ ॥ नानावनाद्रिनिकटेऽभ्रमत्सोपिद्विजोत्तम ॥ मध्येपापंकृतंदैवात्परस्त्रीरति

लम्पटः ॥ ३४३ ॥ आयुषस्तुसमाप्तित्वात्समृतः कालचोदितः ॥ कीटयोनिर्विहंगश्चसारसोनकुलोभवत ॥ मर्कटस्तामसीतीरेसमृतः ॥ हरि-
स्वर्धुनीतटे ॥ तेनपुण्याऽवशेषेणमानुषोभवतिध्रुवम् ॥ ३४४ ॥ १ । ४ । ६ । ९ । १३ । १९ वर्षेकष्टम् ॥ परमायुर्वर्षाणि ८३ ॥ अथ
उग्रयोगः॥उग्रयोगेयदाजन्मविदर्भेपूर्वजन्मनि ॥३४५॥ ब्राह्मणोबलदेवश्चशास्त्रज्ञोधनवर्जितः॥देशाटनंकृतंसम्यग्द्रव्यस्योत्पादनंकृतम् ॥
स्वदेशेपुनरागत्यहर्षगद्गदमानसः ॥ ३४६ ॥ कन्योद्वाहःकृतःसम्यग्ब्राह्मणाअन्नतोषिताः॥एकस्मिन्समयेपत्नीदुर्वाक्यमवदत्तदा॥३४७॥
क्रोधयुक्तेनविप्रेणस्वशरीरंचघातितम् ॥ पापेनानेनात्मघातीनिरयंचगतोहिसः ॥ ३४८ ॥ नानाजन्मानिभुक्त्वासौमर्त्यलोकेतथाऽऽ
गतः ॥ ३ । ६ । ९ । १२ । १५ । १९ कष्टम्॥परमायुर्वर्षाणि९९॥अथउदासीनयोगः॥विरक्तोजन्मनिपुरारंगकारोद्विजोत्तम ॥ गौडदेशे
वसन्सोऽपिपत्नींत्यक्त्वातथाधनम् ॥ ३४९ ॥ वनाऽद्रिनिकटेऽवात्सीत्प्रत्यहंचहरिंस्मरन्॥बभूवबाहुजःसोपिकेरलेस्वल्पकालतः ॥३५०॥
पुनर्जन्मपुनर्मृत्युर्जन्ममृत्युःपुनः पुनः ॥ ८ । १३ । १७ । २१ । २५ कष्टम् ॥ परमायुर्वर्षाणि ॥६७॥ अथऐरावतयोगः ॥ योगऐराव
तेजातःपूर्वजन्मनिभूमिपः ॥ सरय्वाश्चोत्तरेभागेपूर्वजन्मनिपादजः ॥ ३५१ ॥ राजाशूद्रकुलेभूत्वाधनधान्यसमन्वितः ॥ पर्वस्वपिचते
नैवाऽध्यापिताऽब्राह्मणाः शुभाः ॥ ३५२ ॥ एकस्मिन्समयेविप्राजालोभविमोहितः ॥ तस्मिन्ग्रामेऽवसत्त्वेकोब्राह्मणोधनगर्वितः ॥
॥ ३५३ ॥ तस्यद्रव्याणिसर्वाणिगृहीत्वाविविधैश्छलैः ॥ आयुषस्तुसमाप्तित्वात्सराजापंचतांगतः ॥ ३५४ ॥ पुनर्जन्मपुनर्मृत्यु
र्जन्ममृत्युः पुनःपुनः ॥ पश्चान्मनुष्यतांप्राप्तःकिंचित्पुण्यप्रभावतः ॥ ३५५ ॥ १ । ५ । ९ । १३ । १८ । २३ । २९ । ४०
३२ । ३७ वर्षेकष्टम्॥ परमायुर्वर्षाणि ७८ ॥ अथेन्दिरायोगः ॥ आसीज्जन्मांतरेचैवविह्वलोनामसंकरः ॥ खशदेशेऽवसत्सोपिनृपस्यप

रीचारकः ॥ ३५६ ॥ नृपानुकम्पयातत्रद्रव्यंतुविपुलीकृतम् ॥ तीर्थाटनेगतोदैवात्समृतोयमुनातटे ॥ ३५७ ॥ गंधर्वेनगरंगत्वा
पितृलोकंततःपरम् ॥ पितृलोकात्परिभ्रष्टश्चागतोभूमिमंडले ॥ ३५८ ॥ नात्युच्चोमध्यदेहश्चपुंश्चलीसुखसंयुतः ॥ ३ । ४ । ८ । १२ ।
१७।२१।२७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८९ ॥ अथइनयोगः ॥ इनयोगेचयोजातःपूर्वजन्मनियोषिता ॥ कुशदेवीतिविख्यातापुंश्च
ल्यऽतिमनोहरा ॥ ३५९ ॥ पतिंत्यक्त्वाचसानारीपरपुंसिरस्तासदा ॥ परदेशेचकाराऽसौभ्रमणंयत्रतत्रच ॥ ३६० ॥ एवंकालेव्यतीतेंते
पुष्करेहिसमागता ॥ चातुर्मासव्रतंकृत्वानिराहारंचनिर्जलम् ॥ ३६१ ॥ तेनपुण्यप्रभावेणसाजाताचपुमान्द्विज ॥ ५ । ९ । १२ । १८
२५ । २२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७२ ॥ अथएकावर्तयोगः ॥ एकावर्तेगुणश्रेष्ठःविद्ययाचसमन्वितः ॥ धर्माधर्मविवेकीचकुशलः
सर्वकर्मणि ॥३६२॥कन्योद्वाहंतथाकृत्वागृहदानंतथाऽकरोत ॥ कालंजरगिरौरम्येन्यवसत्पूर्वजन्मनि ॥ ३६३ ॥ कोंकणेतिसमाख्यातो
ब्राह्मणःसर्वपूजकः ॥ पठनेपाठनेसुज्ञोनृपपूज्योजनेश्वरः ॥ ३६४ ॥ स्वर्गापवर्गभोग्यश्चबभूवद्विजसत्तम ॥ इदंजन्मतृतीयंतुसर्वसौख्येन
संयुतम् ॥ ३६५ ॥ १ । ४ । ९ । १३ । १८ । २४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७४ ॥ अथइक्षुयोगः ॥ इक्षुयोगेनरःपूर्वंधर्म्मिष्ठोगुणव
त्सलः ॥ तस्यभार्य्यासुशीलाचमृद्वंगीचारुलोचना ॥ ३६६॥ एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥ तस्मिन्ग्रामेऽवसत्त्वेकोवैश्यः
परमधार्मिकः ॥ ३६७ ॥ तस्यपुत्रोपिभव्यश्चकुमारःपंचवार्षिकः ॥ स्वर्णाऽलंकृतसर्वांगोब्राह्मणस्यगृहंगतः ॥ ३६८ ॥ दृष्ट्वातंब्राह्मणंस
्यग्गृहदेशंप्रणीयवै ॥ सर्वमाभरणंतस्यबालकस्यहृतंतया॥३६९ ॥खड्गेनहत्वातंपश्चाद्भूमिंखात्वाधृतस्तदा ॥ तयेत्थंगोपितंविप्रपापमुग्र
मुपार्जितम् ॥३७०॥ साध्वीपुत्रःपतिश्चवव्ययंकृत्वादिनेदिने ॥ यमलोकेगताःसर्वेनानानरकयातनाः ॥३७१॥ नानाजन्मानिभुक्त्वाऽथ

पुनरागत्यभूतले ॥ २ । ६ । ९ । १४ । २१ । २९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ६१ ॥ अथेश्वरयोगः ॥ योगईश्वरकेजातः पूर्वज न्मनिबाहुजः॥अतुलःपरमोदारःसहसैन्येनराजते॥३७२॥पंचवट्याश्चनिकटेविश्वनाथेतिविश्रुतः॥देवतागुरुभक्तश्चधनाढ्योवेदपारगः ॥ ॥ ३७३ ॥ दंडकारण्यनिकटेतपश्चर्य्यामथाऽकरोत् ॥ देव्याश्चपूजनंभक्त्याकृत्वाजाप्यंनिरंतरम् ॥ ३७४ ॥ आविर्बभूवसहसादेवीसिंहो परिस्थिता ॥ वरंवरयहेविप्रप्रसन्नाहंनसंशयः ॥ ३७५ ॥ पुत्रंमेदेहिगिरिजेसर्वलक्षणसंयुतम् ॥ पुत्रस्तेभवितविप्रसुंदरःप्रियवाङ्मयः ॥ ॥३७६॥एवंब्रुवाणासादेवीह्यंतर्धानंतदागता ॥ किंचित्कालांतरेचैवतनयःसुन्दरोऽभवत्॥३७७॥सविप्रःपंचतांप्राप्यशिवलोकेगतस्तदा ॥ अशीत्यब्दसहस्रांतेचागतोधरणीतले॥३७८॥२।४।८।१२।१८।२०।२६।वर्षेषुकष्टम्॥परमायुर्वर्षाणि७७॥अथअंदोलीयोगः॥ कर्णाटनग रेपूर्वंचंद्रभागानदीतटे ॥ शिवरामइतिख्यातःसपत्नीकःसपुत्रकः ॥३७९॥ तीर्थावगाहनंकृत्वागयाश्राद्धमथाऽकरोत्॥गाश्चप्राधानिकास्त त्रदत्त्वाबहुविधानतः ॥ ६८० ॥ स्वगृहेपुनरागत्यहर्षगद्गदमानसः॥मन्त्रवेत्ताह्यथोभूत्वाभूपस्याऽग्रेतदाऽनघ ॥ ३८१ ॥ द्रव्यलोभेनसततं प्रजानांलुंठनेरतः ॥ तत्सकाशाद्बहुद्रव्यंनृपेणलुंठितंद्विज ॥ ३८२॥ द्रव्यशोकेनविकलोमृत्युमापससत्वरम् ॥ तिर्य्यग्योनिंगतःसोऽथबि डालोपिबभूवह ॥३८३॥ भल्लूकोऽथसृगालश्चनानायोनीःपुनःपुनः ॥ गत्वाऽऽगत्यचमेदिन्यांमानुष्यत्वमुपागतः ॥३८४॥३ ।८।१० । १५ । १८ । २० । २७ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९०॥ अथइन्द्रवज्राख्ययोगः॥इन्द्रवज्रेचयोजातःसपुमान्रोगसंकुलः ॥ कश्चिद्वै श्यकुलेपूर्वंकर्मनाशानदीतटे ॥३८५॥ भोजराजइतिख्यातःपत्नीतस्यकलेवरी॥गीतेनृत्येसदानिष्ठाधर्मेकर्मणिनैवच ॥३८६॥ वेश्यायाः प्रीतिवशतःकुटुम्बघ्नीबभूवह॥ आयुषस्तुसमाप्तत्वात्सागत्वायमशासनम् ॥ ३८७॥ कुंभीपाकेमहाघोरेयमदूतायमाज्ञया ॥ तांहिवर्षसह

सापिविश्वातत्रद्विजोत्तम ॥ ३८८ ॥ तिर्य्यग्योनिशतंगत्वामनुजत्वमिहागतः ॥ बह्वाहारोह्यनर्थीचपशुहिंसापरायणः॥३८९॥ ४।८। १२
१८।२२।वर्षेषुकष्टम्॥परमायुर्वर्षाणि१००अथआंडम्बरयोगः।पूर्वजन्मनिभोविप्ररंडाऽऽदेशेऽवसन्मुदा॥धैर्य्यदासइतिख्यातःकिंचिद्भूमिप
तिस्तदा ॥ ३९० ॥ महाऽभिमाननिरतस्तृणवन्मन्यतेजगत्॥एकस्मिन्समयेविप्रकृतंकर्माऽतिदारुणम् ॥३९१॥ गुप्तस्थलेसद्रोहेणनृपघा
तंतथाऽकरोत् ॥ तेनपापानुसारेणकुष्ठरोगीबभूवह ॥ ३९२ ॥ मृतेतुयमदूतैर्हिनानाकष्टैःप्रपीडितः ॥ असिपत्रवनेघोरेकुकलासोबभूवह ॥
॥ ३९३ ॥ दिव्यवर्षसहस्रांतेमानुषोभवतिध्रुवम् ॥ ३।५।७॥१२।१८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि६३ ॥ अथअनर्थकयोगः॥कर्णधारोऽ
भवत्पूर्वंनौकायांवंगदेशके ॥ कर्कशः कटुवादीचनिर्दयःपापसंचयी ॥ ३९४ ॥ कस्मिंश्चित्समयेविप्रब्राह्मणोऽतिबुभुक्षितः ॥ आगतस्तस्य
निकटेदृष्ट्वातंक्षुधयायुतः॥३९५॥भोजनाच्छादनेदत्त्वातथाचद्विजशंबलम् ॥ तेनपुण्यप्रभावेणस्वर्गंगत्वाचकेवटः॥३९६ ॥ पुनरागत्यमे
दिन्यांपादजस्यकुलेऽधुना॥१।४।८।१०।१३।१५ वर्षेषुकष्टम्॥परमायुर्वर्षाणि६१॥अथआजन्मयोगः॥आसीज्जन्मांतरेनद्याः कौशिक्या
श्चतटेतदा॥विक्रमोनामशूद्रस्तुकृषिकर्मरतश्चसः॥३९७॥पत्नीत्यागंततःकृत्वाजगामगिरिगह्वरे॥तपश्चर्य्यांतुकृतवान्बहुवर्षंतथाऽनघ ॥
॥ ३९८ ॥ एकदाविपिनेरम्येमहाभीतिमुपागतः ॥ उन्मत्तोपिबभूवाऽथपर्य्यटंश्चचतुर्दिशम् ॥ ३९९ ॥ आयुषस्तुसमाप्तत्वान्ममारपथि
पादजः॥ जन्ममृत्युशतंभुक्त्वापुनरागत्यभूतले ॥ गोधूमाऽऽकारवद्देहोऽतीवक्रोधीविचक्षणः ॥ ४०० ॥ २।३।५।८।९।१७।२२।३१ वर्षेषु
कष्टम्॥परमायुर्वर्षाणि ७२॥ अथांऽजनाधारीयोगः ॥ कश्चिद्विप्रकुलेपूर्वमांध्रदेशेवसन्नसौ ॥ नारदेतिप्रसिद्धश्चविद्यावेदविवर्जितः ॥४०१॥
असत्कर्मानुरक्तश्चनाटकेचेटकेरतः ॥ लोकानांवंचनेव्यग्रोद्रव्यस्योत्पादनेरतः ॥ ४०२ ॥ परस्त्रीरमणेधूर्तःकापटयाचरणेरतः ॥

एवंगतेषुवर्षेषुतस्यमृत्युर्बभूवह ॥ ४०३ ॥ प्रक्षिप्तोयमदूतैर्हिप्रतप्ताङ्गारनारके ॥ गर्दभःसूकरोभूत्वागृध्रयोनिशतंगतः ॥ ४०४ ॥ हंसः सरसिभूत्वाऽथमानुषत्वमुपागतः॥१।३।१६।२८।३३।३७वर्षेषुकष्टम्॥परमायुर्वर्षाणि६९॥अथअसत्ययोगः ॥ पूर्वजन्मनिविप्रोसौसर्वविद्याविशारदः ॥ खंडदेवेतिविख्यातःपत्नीपुत्रसमन्वितः ॥ ४०५ ॥ सरस्वत्याश्चनिकटेपरिवारेणसंयुतः ॥ तस्यगेहेसमाऽऽयातोब्राह्मणोद्रव्यसंयुतः ॥ ४०६ ॥ आदरंकृतवान्सम्यक्स्वगृहेस्थापितःपुरा ॥ तस्यद्रव्यंहिसर्वंतुचोरितंद्विजसत्तम ॥ ४०७॥ सविप्रोद्रव्यशोकेनस्वशरीरंजहौतदा॥एवंस्वल्पेगतेकालेतस्यमृत्युरभूत्पुरा॥४०८॥सआत्महापिशाचोऽभूत्तमसायास्तटेद्विज ॥ मानुषोह्यधुनाजातोमिथ्यावादेसदारतः ॥ ४०९ ॥ १।३।९।१२।२५ वर्षेषुकष्टम्॥महामृत्युः ८१ ॥ अथआतुरिकयोगः ॥ योगआतुरिकेजातः पूर्वजन्मनितैलिकः ॥ धनाढ्यश्चातिशूरश्चदानधर्मपरायणः ॥४१०॥ जलोत्सर्गंवनोत्सर्गंकृत्वासतुविधानतः॥ सत्पात्रेहिद्विजेदत्त्वास्वर्णमुद्रासहस्रकम्॥४११॥ गोशतंचान्नमेरुश्चदत्तस्तेनविधानतः ॥ एवंनिवसतातत्रबहुवर्षगताऽऽगतैः ॥ ४१२ ॥ दैवयोगेनमरणंबभूवहिद्विजसत्तम॥देवलोकंतुसंप्राप्यनंदनेचवनेगतः ॥ ४१३ ॥ ततःपुण्यक्षयेजातेमर्त्यलोकंसमागतः ॥ ३।४।९।१३। १८।२५। २९। ३५। ४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६४ ॥ अथाऽर्जकयोगः ॥ अर्जकेचनरोजातःपूर्वजन्मनिचोत्कले ॥ इंद्रसेनइतिख्यातःपत्नीतस्यपतिव्रता ॥ ४१४ ॥ कन्यापुत्रविहीनश्चधनधान्येनसंयुतः ॥ तीर्थाऽवगाहनंकृत्वादम्पतीचतदानघ ॥ ४१५ ॥ हरिद्वारेतथागत्वागंगास्नानमथाऽकरोत्॥ वैद्यनाथार्चनंकृत्वामार्गेमृत्युमुपागतः ॥ ४१६ ॥ पत्नीतस्यसतीजातास्वर्गलोकमुभौगतौ । बहुवर्षसहस्रांतेपुनरागत्यभूतले ॥ ४१७ ॥ ३।९। १६।२२वर्षेषुकष्टम्॥परमायुर्वर्षाणि६७॥ अथान्धकारयोगः॥अन्धकारेनरोजातः पूर्वंवैहस्तिनापुरे॥ जन्मांधोपिवभूवाऽथविष्णुभक्तोनिरामयः

॥ ४१८॥ गीतवाद्यरतःसोपिभक्तश्चैवांतरात्मनि ॥प्राप्तेवार्द्धक्यएवासौनैमिषारण्यमागतः॥४१९॥ समृतःकालसर्पेणदष्टोहिद्विजसत्तम ॥
आगतोहिपुनर्भूम्यांपूर्वपुण्यप्रभावतः ॥ ४२०॥ ३ । ४।७।८।१०।१६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७६॥अथेंद्रियाययोगः ॥ इंद्रियाये
समुत्पन्नाकुलटापूर्वजन्मनि ॥ परपुंसिरताभ्रष्टास्वैरिणीद्रव्यकांक्षिणी ॥४२१॥ नानाद्रव्यंसमुत्पाद्यकृत्वाऽऽरामंचशोभनम्॥ पथिकूपांश्च
निर्माप्यह्यन्नदानंददौभृशम्॥४२२॥सामृतागदंसंसक्तापापात्पापफलंभृशम्॥साजाताऽत्रवणिग्गेहेसर्वसम्पद्युतातथा॥४२३॥ सर्वाऽभरणसं
पन्नासर्वसौख्यसमन्विता॥सुन्दरीचातिशोभाढ्यादानभक्तिपरायणा ॥४२४॥१।४।६।९।१२ । १९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७९ ॥
( पुनरपीन्द्रियाययोगः ) आसीज्जन्मांतरेचैवब्रह्मचारीजितेंद्रियः॥विंध्याद्रिनिकटेचैवतपश्चर्य्यापरायणः॥४२५॥सत्यवार्तानुरक्तश्चभव्य
कांतिर्गुणाकरः ॥ एकस्मिन्समयेविप्रकृतंकर्मातिदारुणम्॥४२६॥ब्राह्मणीचागतात्वेकासुंदरीनवयौवना ॥ बलादाकर्षितातस्याःकृत्वातु
रतिसंगमम्॥४२७॥सगर्भासाबभूवाथतस्मिन्नहनिवत्सल॥मृत्वातुब्रह्मचारीसदारुणंनरकंगतः॥ षष्टिवर्षसहस्रांतेह्यागतोभूमिमंडले ४२८
॥३॥५ । ८ । ११ । १७ । २३ । २६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८३। अथइमाद्रियोगः ॥इमाद्रियोगेयोजातःयोषित्सापूर्वजन्मनि॥
बाहुजस्यसुताशुभ्राचार्वंगीचशुभानना ॥ ४२९॥ परमोदारतायुक्तापुण्यमार्गेसदारता॥सपत्नीभावदोषेणकृतंकर्माऽतिदारुणम्॥४३०॥
सपत्न्यैचविषंदत्त्वासामृताद्विजसत्तम॥पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन॥४३१॥मेदिन्यामागतापश्चात्पूर्वपुण्यप्रभावतः ॥१।१०।
२१।२८वर्षेषुकष्टम्॥परमायुर्वर्षाणि८४अथोष्टहायोगः॥पर्वतारण्यनिकटेतपस्वीपूर्वजन्मनि॥शिवरामइतिख्यातःशिवस्यस्मरणेरतः४३२
पंचवर्षाणितेनैवमम्बुपर्णाशनंकृतम् ॥ त्यक्त्वातदपिपश्चात्तुनिराहारोबभूवह ॥ ४३३ ॥ आयुषस्तुसमाप्तत्वात्समृतोगिरिगह्वरे ॥ इन्द्र

लोकेतथागत्वाचंद्रलोकेततःपरम् ॥ बहुवर्षसहस्रांतेचागतोभूमिमंडले॥३।८।१३।१८।२३।३१।३७वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७९ ॥ संहि.
अथांडपालयोगः ॥ अंडपालेनरोजातःकायस्थःकीकटेवसन् ॥ कंदर्पइतिचाख्यातःशाक्तधर्मेसदारतः ॥४३४॥चतुरोदानशीलश्चपितृभ
क्तिपरायणः ॥ मुद्रश्चसर्वशास्त्रेषुकाव्याऽलंकारबोधकः ॥४३५॥ पोष्टाचनिजवर्णानांब्राह्मणानांविशेषतः ॥ आयुषस्तुसमाप्तत्वात्समृतो
व्याघ्रखादितः ॥ ४३६॥ पुनर्जन्मपुनर्मृत्युर्जन्ममृत्युःपुनःपुनः॥इदंतुदशमंजन्मचागतोधरणीतले॥१।५।८।१३।१९।२५वर्षेषुपीडा ॥
परमायुर्वर्षाणि ७१॥ अथअगोचरीयोगः ॥ आसीज्जन्मांतरेचैवचर्मकारोमहाधमः ॥ देशेमरुस्थलेचैवनिवसन्परिवारयुक् ॥ ४३७॥
एकस्मिन्समयेविप्रकृतंकर्मदृढंबहु ॥ दैवयोगात्साधुजनास्तन्मार्गेहिसमागताः॥४३८॥स्वगेहेतांश्चसंस्थाप्यसत्कारंकृतवान्भृशम्॥उच्छि
ष्टभोजनंभुक्त्वामासमेकंनिरंतरम् ॥ ४३९ ॥ पूर्वाज्ञानंपरित्यक्त्वासत्संगेषुमनःकृतम् ॥ कृत्वास्वदेशत्यागंसतीर्थानांगाहनेरतः ॥४४० ॥
नानातीर्थाटनंकृत्वानानाव्रतपरायणः ॥ तीर्थभूमौमृतःसोस्यपुनर्जन्मबभूवह ॥४४१॥ पादजस्यकुलेजातःसरय्वाउत्तरेतटे॥विष्णुभक्ति
रतोधीमान्सत्यव्रतपरायणः ॥ ४४२॥ धर्ममार्गेचकुशलोविरक्तोपिबभूवह ॥ समृत्वासागरतटेबभूवबाहुजस्तदा ॥४४३॥ इदंजन्मतृती
यंतुशृणुपुत्रयथातथम ॥ सर्वसौख्येचनिरतः शिवभक्तौनिरंतरम् ॥ ४४४ ॥१।३। ४।८।१३।१८।२२वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि७७॥
अथोन्मुनीयोगः ॥ उन्मुनीयोगकेजातःसपुमान्दृढकामुकः ॥ आसीत्पूर्वभवेकश्चिद्विदर्भोनामब्राह्मणः ॥ ४४५ ॥ देशेहिगौडकेजातो
विद्याविनयसंयुतः ॥ ब्रह्मकर्मपरिभ्रष्टोमदयुक्तश्चकामुकः॥४४६॥परस्त्रीःसेवतेनित्यंमिथ्याजल्पतिनित्यशः॥ एवंहिन्यवसत्तत्रबहुवर्षगता ४३
स्ततेः ॥ ४४७ ॥ आयुषस्तुसमाप्तत्वात्समृतःकालचोदितः ॥ पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन ॥ ४४८ ॥ स्वर्गादौसर्वभोगंतुभु

त्वाचाहर्निशंद्विज ॥ षष्टिंवर्षसहस्रांतेचागतोभूमिमंडले ॥ ४४९ ॥ ३ । ६ । ९ । १२ । १५ । १९ । २० । २७ ॥ २९ । ३५ वर्षेषु पीडा विशेषतः । परमायुर्वर्षाणि ॥ ८८ ॥ अथअंपर्वाणयोगः ॥ १ ॥ अपर्वाणेनरोजातःपूर्वजन्मनिभूपतिः ॥ प्रचंडइतिविख्यातः पत्नीतस्यवरांगना ॥ ४५० ॥ कामरूपोऽभवत्सोऽपिचोग्रदण्डःप्रतापवान् ॥ प्रपंचकरणेनिष्ठोलोलुपःकाममोहितः ॥ ४५१॥ नानापापार्जनंकृत्वाह्याजन्मद्विजसत्तम ॥ समरेषुमृतःसोपिसगत्वायमशासनम् ॥ ४५२ ॥ तिर्यग्योनिंसमुत्पन्नोवारंवारंधरातले ॥ मानुषश्चाभवत्पश्चात्किंचित्पुण्यप्रभावतः ॥ ४५३॥३।५।८।११।१५।१८।२३।२८।३३वर्षेषुकष्टम्॥परमायुर्वर्षाणि६७॥अथइनाश्चर्य्ययोगः॥ आसीज्जन्मांतरेचैवगंधर्वःपुरुषोत्तमः ॥ इंद्रस्याऽग्रेप्रविष्टश्चवाद्यविद्यापरायणः ॥ ४५४ ॥ एकस्मिन्समयेविप्रस्वानंदेनसमावृतः ॥ कामकौतूहलेमग्नःस्वस्त्रीरमणलालसः ॥ ४५५ ॥ नायातोहियदाचिन्तामघोनाचकृताभृशम् ॥ चिरंप्रतीक्ष्यचपुनःशापोदत्तःसुदुस्तरः४५६ भोभोधृष्टह्यहंकारिन्यदाज्ञापालितानमे॥राक्षसोथभवभ्रष्टोनान्यथावचनंमम॥४५७॥अतःशापवशात्सोऽपिबभूवराक्षसाऽधमः ॥ दिव्यवर्षसहस्राणिपर्वतारण्यसन्निधौ ॥ पश्चान्मानुष्यमापन्नःसर्वसौऽभाग्यसंयुतः ॥ ४५८ ॥ ३ । ८ । ११ । १७ । २१ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० अथैलायोगः ॥ एलायोगेपियोजातःइलावर्तेऽवसत्पुरा ॥ बाहुजोयुद्धसंसक्तःसहसैन्येनराजते ॥ ४५९ ॥ एकस्मिन्समयेविप्रह्यरातिश्चसमागतः ॥ सहसैन्येनवैसोऽपिकृत्वायुद्धंपरस्परम् ॥ ४६०॥घातितःसोपिबहुभिःप्रहारैरतिदारुणैः॥ ससवासरपर्य्यंतंजित्वाशत्रुबलंबलात् ॥ ४६१ ॥ नृपेणह्यादरंकृत्वाबहुग्रामाइहार्पिताः॥तथापुण्यार्जनंकृत्वातीर्थेतीर्थेविशेषतः ॥४६२॥ जीर्णोद्धारःकृतस्तेनब्राह्मणाश्चापितोषिताः॥ एवंनिवसतिस्माऽसौबहुवर्षगतागतैः॥४६३॥ मृत्वाहित्रिदिवंगत्वारमणंनंदनेऽकरोत् ॥ ततःपुण्य

क्षयेजातेपुनरागत्यभूतले ॥ हृष्टःपुष्टःसविज्ञश्चप्रतापीचजनेश्वरः ॥ ४६४ ॥ १ । ३ । ६ । ८ । ९ । ११ । १४ । १७।२४।२८।३३ । २६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ७५ ॥ अथेष्टयोगः ॥ इष्टयोगेतुयोजातःपूर्वजन्मनिदेववित् ॥ ज्योतिर्वेत्तासभामान्यश्चंचलश्चतुरः सुधीः ॥ ४६५ ॥ एकस्मिन्समयेविप्रःपरदेशेतदागतः ॥ देशेहिककुभेचैवस्थितोवर्षचतुष्टयम् ॥ ४६६ ॥ नृपस्याऽग्रेप्रविष्टश्चदेवताऽऽराधनेरतः ॥ एकस्मिन्समयेविप्रोविद्वांश्चात्रसमागतः ॥ ४६७ ॥ विद्याविलासेनतदापराजयमचीकरत् ॥ तेनभूपेनविप्रायद्रव्यंदत्तंचपुष्कलम् ॥ ४६८ ॥ स्वदेशेचलितःसोपिमार्गेचौरेणलुंठितः ॥ द्रव्यशोकेनविकलःपर्य्यटन्गांचतुर्दिशम् ॥ ४६९॥ इतस्ततश्चविचरन्चोन्मत्तइवचाकुलः ॥ आयुषस्तुसमाप्तत्वान्ममारपथिभूसुरः ४७० ॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्यफलंतथा ॥ सप्तवर्षसहस्रांतेचागतोभूमिमंडले ॥ ४७१॥ सर्वसामर्थ्यसंपन्नोविप्रभक्तिसमन्वितः॥कुष्ठेनचिह्नितस्तातमुखेपार्श्वेऽथचोदरे॥४७२॥ तीव्रःक्रोधीप्रवक्ताचतृणवन्मन्यतेजगत् ॥ १ । १७ । २६ । २८ । ३४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९० ॥ अथअदंडयोगः ॥ योगेऽदंडेनरःपूर्वंब्राह्मणोवेदवर्जितः ॥ शुष्कदेवइतिख्यातःसपत्नीकःसपुत्रकः॥४७३॥जीवत्यसौनान्यवृत्त्याप्रतिग्राहंसदाऽग्रहीत् ॥ एकस्मिन्समयेविप्रप्रयागमगमत्तदा ॥ ४७४ ॥ वसतिस्मनृपस्त्वेकःसुज्ञोधर्मपरायणः ॥ तेनदत्ताहिविप्रायसवत्सागौरलंकृता ॥ ४७५ ॥ ततोविप्रोपितांतातगृहीत्वाहर्षतश्चसः॥विक्रीतवान्नाईलोभेनमुद्राणांतुशतेनच॥४७६॥स्वदेशेपुनरागत्यहर्षगद्गदमानसः॥ वेश्यायामनयद्द्रव्यमसन्मार्गेव्ययःकृतः ॥४७७॥एवंस्वल्पेगतेकालेविप्रःपंचत्वमागतः॥रौरवेनरकेनीत्वायमदूतैस्सुताडितः॥ बहुवर्षसहस्रांतेपुनरागत्यभूतले ४७८॥७।११।१४। १७।२०।२८ ।२९ एषुवर्षेषुकष्टम्॥परमायुर्वर्षाणि ७७ ॥ अथअंसकयोगः ॥ योगेंसकेनरः पूर्वंमौनवृत्तौसदारतः॥ माहिष्मत्यांनगर्यावै

न्यवसत्पूर्वजन्मनि ॥४७९॥ कोलाहलइतिख्यातोविश्वनाथार्चनेरतः ॥ एकस्मिन्समयेविप्रकृतंकर्मसुदारुणम्॥४८०॥परस्त्रीगमनंकृत्वा परद्रव्यंहृतंपुनः ॥ एवंस्वल्पेगतेकालेसविप्रःपंचतांगतः ॥ ४८१ ॥ सतेनकर्मणायुक्तःप्राप्तस्तुयमसादनम् ॥ कीटोभृंगोविहंगश्चबभूवच पुनःपुनः ॥ समृतोगोमतीतीरेतेनाऽसौभुविब्राह्मणः ॥४८२॥ ३।५।८।१२।२२।२८।३२ वर्षेषुकष्टम्॥परमायुर्वर्षाणि८५॥ अथ असद्भावीयोगः ॥आसीज्जन्मांतरेचैवमर्कटोनामपादजः ॥ मथुरानिकटेचैवन्यवसद्द्विजसत्तम ॥ ४८३ ॥ महिषीगोधनेश्चैवसंकुलंतस्यवे श्मवे॥एकदाविपिनेरम्येगोवर्द्धनगिरेस्तटे॥४८४ भव्यांमुनिकुटींनूत्नांदृष्ट्वाचन्दनचर्चिताम्॥तेनदुष्टेनमुक्तासौगौरुत्खातवतीबलात्४८५ मुनिःक्रोधपरोभूत्वाशापंचेमंहिदत्तवान् ॥ भोभोदुष्टमनोधृष्टद्यावंशंपतितोभव॥४८६॥गच्छगच्छत्वितोदूरेपलायनपरायणः ॥ एवंस्वल्प तिथेकालेगतोऽसौयमलोककम् ॥ ४८७ ॥ मानुष्यमागतः पश्चान्मर्त्यलोकेद्विजोत्तम ॥ पुत्रकन्याविहीनश्चसर्वदापीडितस्ततः ॥ ॥ २।४।६।८।१२।२५ वर्षेषुकष्टम् ॥ भाद्रेमासिसितेपक्षेपंचम्यांमरणंध्रुवम् ॥ ४। ६।७।१२।१६।२२।२७। वर्षेषुकष्टम्॥ परमायुर्वर्षाणि ५८ ॥ अथअचंभाख्ययोगः ॥ कश्चिद्वैश्यकुलेपूर्वंकृष्णानद्याश्चसन्निधौ॥प्रसेनइतिविख्यातोव्यापारेचसदारतः ॥४८८॥ द्रव्यस्यसंग्रहंकृत्वारजतंस्वर्णमौक्तिकम् ॥ कार्पण्यान्मधुरालापीह्यदातापापभागसौ ॥४८९॥ तस्मिन्ग्रामेऽवसत्त्वेकोवैश्यःपरमधार्मिकः॥ तेनस्वेनैवन्यासार्थंस्थापितंपुष्कलंधनम् ॥ ४९० ॥ घटेताम्रमयेस्थाप्यबहुकालगताऽऽगतेः ॥ नदत्तंयाचितेतेनलोभोपहतचेतसा ॥ ॥ ४९१ ॥ परस्परंकृतंयुद्धं पापमाचरितंत्विदम् ॥ समृतःपापराशींश्चभुक्त्वाभोगांश्चशाश्वतान्॥४९२॥ दशजन्मोत्तरेविप्रमानुषस्त्वभवत्पु नः ॥ १।४।८।१३।१७।२२।२४।२८।३५।३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि९३ ॥ अथ अंशुपानयोगः ॥ अंशुपानेनरो

जातःसत्कर्मीपूर्वजन्मनि॥ देशेचोलेचन्यवसत्सर्वसौख्येनसंयुतः॥४९३॥बाहुजःपरमोदारोमधुराऽमृतभाषकः ॥ पर्वस्वपिचतेनैवब्राह्मणा
भोजिताःशतम् ॥४९४॥ गोभूम्यश्वहिरण्यानिसत्पात्रेभ्योमुदाददौ ॥ जीर्णोद्धारःकृतस्तीर्थेदेवालयमथाऽकरोत् ॥४९५॥ समृतोगंडकी
तीरेगांधर्वेनगरेगतः ॥ चन्द्रलोकेततोगत्वाबहुवर्षाणिसंस्थितः ॥ ४९६॥ पुनरागत्यमेदिन्यांपूर्वपुण्यप्रभावतः ॥ सुशीलश्चाऽतिभक्तश्चप्र
तापीचजनेश्वरः ॥ ४९७ ॥ प्रथमेपंचमेवर्षेतथाषष्ठाऽष्टमेऽपिवा ॥ द्वादशेपंचदशकेपीडाचोक्ताविशेषतः ॥ ४९८ ॥ परमायुर्वर्षाणि
८१ ॥ अथअमोघरयोगः ॥ अमोघरेयदाजन्मह्यात्मज्ञानीविचक्षणः ॥ परोपकर्तासुज्ञश्चधनपुत्रसमन्वितः ॥ ४९९ ॥ देशेहिरण्यकेचै
व निवसन्पूर्वजन्मनि ॥ सर्वेश्वरइतिख्यातःसपत्नीकःसपुत्रकः ॥ ५००॥ सर्वकलाऽनुरक्तश्चसर्वदादेवचिंतकः ॥ एकस्मिन्समयेविप्रसाधू
नांचप्रसंगतः ॥५०१॥ अन्नदानंतथाकृत्वाभिक्षुकेभ्योददौतदा ॥ प्राप्तेवार्द्धक्यसमयेसमृतोजाह्नवीतटे ॥५०२॥ पुनरागत्यमेदिन्यांपूर्वपु
ण्यप्रभावतः॥१।१०।१५।१८।२६।३१।३६।३९।४०।४४ वर्षेषुकष्टम ॥ परमायुषःशतसमाःकथिताःपूर्वसूरिभिः ॥ ५०३ ॥
अथअष्टसिद्धियोगः ॥ अष्टसिद्धौनरोजातः पूर्वजन्मनिसद्द्विजः ॥ शिवरामइतिख्यातःसपत्नीकः सपुत्रकः ॥५०४॥ दारिद्र्येणसदाऽऽकृष्टः
पीड्यमानोमनोरथैः ॥ तस्यभार्य्यामहाशीलापातिव्रत्यपरायणा ॥ ५०५ ॥ तयाचोक्तंप्रभोस्वामिन्कष्टंसोढुन्नशक्यते ॥ श्रुत्वावचःस्व
प्रियायाजगामगिरिगह्वरे ॥ ५०६ ॥ तत्रपातञ्जलिर्नामब्राह्मणस्तपसाऽऽहृतः॥आगतोदैवयोगेनपतित्वाऽसौननामतम् ॥५०७॥ स्वगाथाः
कथितास्तेनश्रुत्वाविप्रस्तुवैतदा ॥ लक्ष्मीमंत्रंददौतस्यस्वगेहंपुनरागतः ॥ ५०८॥ पुनर्गत्वाऽद्रिनिकटेतपश्चर्य्यामथाऽकरोत् ॥ आयु
षस्तुसमाप्तित्वात्सविप्रःपंचतांगतः ॥ ५०९॥ पुनर्वैमानुषींयोनिंचाऽऽगतोधरणीतले ॥ सर्वसम्पद्युतोधीमान्स्वेच्छयाफलमाप्नुयात् ॥

॥ ५१० ॥ १।८।१२।१६।१९। वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०५ ॥ अथअनाश्रीयोगः ॥ अनाश्रीयोगेनरः पूर्वंविष्णुकांचींवसन्पुरा ॥ जनेश्वरइतिख्यातोब्रह्मचर्य्यरतःसदा ॥ ५११ ॥ विकुंडलइतिख्यातोब्राह्मणोविधृतव्रतः॥वेदवेदांगपाठीचह्यग्निहोत्रपरायणः॥५१२॥कामातुरोयौवनेचवेश्यासंगमथाऽकरोत्॥समृतःकालवशतः पुनरागत्यभूतले ॥५१३॥ १।३।८।१७।२७ ॥ वर्षेषुकष्टम्॥परमायुर्वर्षाणि ८३ ॥ अथअर्बुकयोगः ॥ कश्चिद्वैश्यकुलेपूर्वंविंध्यपर्वतसन्निधौ ॥ विजयेतिसमाख्यातोव्यापारेषुसदारतः ॥५१४॥ द्रव्यस्यसंग्रहंकृत्वापुण्यमार्गेव्ययःकृतः ॥ तस्मिन्ग्रामेशुभामेकांपादजांचशुभाननाम् ॥५१५॥ दृष्ट्वापरस्परंचित्तेकामबाणेनमोहिते ॥ बलादाकृष्यतांविप्रकृतवात्रतिसंगमम् ॥ ५१६ ॥ ज्येष्ठांत्यक्त्वासुशीलांच सुंदरींधर्मपालिनीम् ॥ गत्वाऽसौयमलोकेचनानानरकसंस्थितः ॥ पश्चान्मानुष्यमापन्नःकिंचिद्धनसमन्वितः ॥ ५१७ ॥ ३।५।८।११।१४।२०।२८।३२। ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ अथअनामयीयोगः ॥ पूर्वंब्रह्मकुलेश्रेष्ठोयवनोपिबभूवह॥म्लेच्छासनेसमासीनोऽकरोन्म्लेच्छान्नभक्षणम्॥५१८॥अकर्मनिरतःसोपिदुष्टबुद्धिरसत्क्रियः॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्यफलंतथा ॥५१९॥ पुनर्जन्मपुनर्मृत्युर्जन्ममृत्युःपुनःपुनः॥इदंतुदशमंजन्मार्किंचिद्वित्तसमन्वितम् ॥५२०॥२।४।७।११।१९।२०।२५।२८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८४ ॥ अथईश्वरयोगः ॥ ईश्वरेयोगेयोजातःसतुपूर्वंधनाधिपः ॥ बहुयज्ञव्रतंकृत्वानानातीर्थाटनेरतः ॥ ५२१ ॥ एकस्मिन्समयेविप्रकृतंकर्मसुदारुणम् ॥ ब्राह्मणस्यहृताकन्यासुंदरीनवयौवना ॥ ५२२ ॥ तस्याःपतिर्मृतःशोकेपापमाऽऽचरितंत्विदम् ॥अस्यांजनोधनाढ्यश्चसर्वसौख्यसमन्वितः ॥५२३॥ पुत्रकन्याविहीनश्चचिंतयामासनित्यशः ॥ ३।८।१२।१८।२२।२७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५१ ॥ अथ इज्यसेवायोगः ॥इज्ययोगेचयोजातः सराजापूर्वंजन्मनि ॥

सुज्ञश्वसर्वशास्त्रेषुबहुस्त्रीपरिवेष्टितः ॥ ५२४ ॥ एकस्मिन्समयेविप्रक्षिप्रानद्याश्वसन्निधौ॥स्त्रीसमूहोहतस्तेनाऽदःपापंदारुणंकृतम् ॥५२५॥
तेनपापानुसारेणपीड्यमानोमुहुर्मुहुः ॥ भ्रमदोषैश्वविकलोवातव्याधिप्रकोपवान् ॥ १ । ४ । ८ । १२ । १९ । २५ । २७ । ३१ । ३८
३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०६ ॥ अथअसन्मार्गीयोगः आसीज्जन्मांतरेचैवब्राह्मणःशाक्तधार्मिकः ॥ देव्याश्वपूजने
निष्ठःपरमोदारमानसः ॥ ५२६ ॥ एकस्मिन्समयेविप्रकृतंकर्मतुदारुणम् ॥ ब्राह्मणस्यसुतःश्रेष्ठोगौरांगोभव्यलोचनः ॥५२७॥ देव्यैतस्य
बलिंदत्त्वाकृत्वातुविविधांश्छलान् ॥ तस्यतुमातापितरौपुत्रशोकेनवैमृतौ ॥ २२८॥ तेनपापानुसारेणयमलोकंह्यसौगतः ॥ नानानरके
षुसस्थित्वापुनर्वैमानुषोभवत्॥५२९॥दुर्दशःसर्वरोगार्तःपुत्रकन्याविवार्जितः । ३ । ४।८।१७।२२।२९। वर्षेषुकष्टम्॥परमायुर्वर्षाणि ६७॥
॥ १०८ । इतिअवर्गोदयः॥इति श्रीयोगसागरेसभार्चितदेशेशुक्रभृगुसंवादेअवर्गोद्यष्टोत्तरशतयोगकथनंनामतृतीयंप्रकरणंसमाप्तम् ॥३॥
अथकवर्गयोगः॥बभूवबाहुजःकश्चित्कवर्गेचविराटके।दत्तानितेनदानानिगोभूम्यश्वादिकानिच॥१॥ ब्राह्मणेषुगृहस्थेषुसत्पात्रेषुविशेषतः ॥
अथान्यग्रामवास्तव्यक्षत्रियस्यमहात्मनः ॥ २ ॥ एकपुत्रस्यपुत्रोवैभुजमूलेपुरानघ ॥ घातितस्तेनखड्गेननिशायांचौरकर्मणि॥३॥समृत
स्तेनदुःखेनभाविनोर्थस्यगौरवात् ॥ तन्मातापुत्रदुःखेनमृतादुःखप्रपीडिता ॥ ४ ॥ वैरभावरतेनैवकृतंकर्मातिदारुणम्॥ एवंबहुतिथेकाले
गतेसौयमसादनम् ॥ ५ ॥ गत्वाभुक्त्वाचनरकंपुण्यात्स्वर्गफलंतथा॥पूर्वपुण्यप्रभावेणसजातोब्राह्मणोऽधुना ॥६॥ शतद्रुनिकटेदेशेमेषकेशे
तिविश्रुतः ॥ पितृमातृसुखैर्हीनोभृत्यस्त्रीबंधुसंयुतः॥७॥ पूर्वंबालवधात्पापादिहजन्मनिभार्गव॥ द्विवेदमितवर्षांतेजातःपुत्रविनाशकः ॥८॥
[illegible]बाहुजवधाद्वामबाहुविवर्जितः ॥ लक्षणैर्लक्षयेदंगेपृच्छकश्चात्रजन्मनि॥९॥निष्कृतिंतस्यवक्ष्यामिपूर्वपापविशोधिनीम् ॥ पुत्रवृद्धि

करीषन्यांसर्वारिष्टनिषूदिनीम् ॥ १० ॥ पलपंचमितंकुर्य्यात्सुवर्णस्यतुबाहुजम् ॥ पूर्वोक्तेनविधानेनसंकल्प्यब्राह्मणार्पणम् ॥ ११ ॥
ततः श्रेयोभवेत्तस्यपुत्रोजीवतिनिश्चितम् ॥ धनार्थीलभतेद्रव्यंछिन्नायुर्म्रियतेनच ॥ १२ ॥ एकाशीतिमितायुःस्याच्चैत्रादौघटभेमृतिः ॥
अथकर्तृयोगः ॥ कीटदेशेसमुत्पन्नःकश्चित्क्षात्रकुलेसुधीः ॥ १३ ॥ विप्रसंगगतस्तत्रप्रयागेमकरेवसन् ॥ कृतवान्विधिवत्स्नानं
दानंस्वल्पविधानतः ॥ १४ ॥ दैवयोगाद्गृहंप्राप्यकृतवान्कर्मदारुणम् ॥ कामलोभेनसततंशूद्रागमनकार्य्यसौ ॥ १५ ॥ स्त्रीहाव
भावयुक्तेनपापमाऽऽचरितंतथा ॥ विविधैरौषधैस्तस्यागर्भपातःकृतःपुरा ॥ १६ ॥ एवंसर्वंमिलित्वातुपातकंबहुधाकृतम् ॥ ततो
बहुतिथेकालेप्राप्तस्तुयमसादनम् ॥ १७ ॥ भुक्त्वापापफलंपापात्पुण्यात्पुण्यफलंतथा ॥ तीर्थराजप्रभावेणसजातोब्राह्मणोऽधुना ॥
॥ १८ ॥ परदाराऽभिगमनात्पूर्वपापस्यसंचयात् ॥ भूत्वापिम्रियतेबालःसर्वकालेप्रपीडितः ॥ १९ ॥ द्वि २ षष्टि ६० मितवर्षाणि
कथितंप्राणधारणम् ॥ २ ॥ अथकर्तारयोगः ॥ भृगुरुवाच ॥ आसीद्राजकुलोत्पन्नःपूर्वजन्मनियामुने ॥ २० ॥ धनधान्यसमायुक्तो
रुद्रभक्तिपरायणः ॥ दत्तानितत्रदानानिपर्वस्वपिचशक्तितः ॥ २१ ॥ अथभाविबलात्पुत्रब्राह्मणेनतपस्विना ॥ तद्गृहेस्थापितंद्रव्यं
पुनर्दत्तंनतेनच ॥ २२ ॥ साहसेनचतेनाऽथब्रह्मस्वंभक्षितंपुरा ॥ सचकालवशंप्राप्यभुक्त्वापापफलंतथा ॥ २३ ॥ पापेपुण्येसमेजा
तेमानुषत्वमिहाऽऽगतः ॥ ब्रह्मस्वहरणात्पापात्पुत्रकन्याविवर्जितः ॥ २४ ॥ प्रायस्तुतन्मृतेविप्रदेशवृद्धिर्भविष्यति ॥ चतुःषष्टिमिताब्दां
तकथितंप्राणधारणम् ॥ २५ ॥ ३ ॥ अथकरंकयोगः॥आसीत्पूर्वंविदर्भेषुमुखजोवेदपाठकः ॥ कालिंजरस्यनिकटेनिवसन्परिवारयुक् ॥
॥ २६ ॥ कंदर्पइतिविख्यातःपत्नीतस्यपतिव्रता॥पठनेपाठनेमग्नोनृपद्वारेप्रतिष्ठितः॥२७॥नानाद्रव्याण्युपार्जित्वापापमार्गेव्ययःकृतः ॥

॥ २८ ॥ एकस्मिन्समयेविप्रकृतंकर्मसुदारुणम् ॥ ब्राह्मणस्यहृतावृत्तिःपापमाऽऽचरितंत्विदम् ॥२९॥ आयुषस्तुसमाप्तित्वात्सविप्रःपंच
तांगतः ॥ पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन ॥ ३० ॥ पुनरागत्यमेदिन्यांपूर्वपुण्यप्रभावतः ॥ बाल्येदुःखेनपीडास्याद्यौवनेहृष्टमा
नसः ॥ ३१ ॥ चतुःषष्टिमिताब्दांतंकथितंप्राणधारणम् ॥ ४ ॥ अथकर्णधारयोगः ॥ पूर्वजन्मनिकावेर्यांन्यवसत्परिवारयुक् ॥ ३२ ॥
वासुदेवःसमाख्यातोबाहुजोबलविक्रमी ॥ परिचर्य्याकृतातेनशिवस्यबहुकालतः ॥ ३३ ॥ नृपानुकम्पयातत्रग्रामःप्राप्तस्तथाधनम् ॥ एक
दाचंद्रमोग्रस्तेकुरुक्षेत्रेतदाऽनघ ॥ ३४ ॥ ब्राह्मणोऽतिदरिद्रश्चतत्रप्राप्तःसुव्याकुलः ॥ अनादरःकृतस्तस्यकटुवाक्यंचश्रावितम् ॥ ३५ ॥
विमुखोऽसौगतोविप्रःपापमाचरितंत्विदम् ॥ पापाच्चनरकेगत्वापुण्यात्पुण्यफलंभृशम् ॥ ३६ ॥ ततःपुण्यक्षयेजातेपुनरागत्यभूतले ॥
ईषद्गौरोप्युदारश्चव्रणांकितकलेवरः॥३७॥१।४।८।१७।२८। ३३ वर्षेषुकष्टम् ॥ परमायुःशताब्दांतंकथितंदेहधारणम् ॥ १०० ॥ ३८ ॥
॥ ५ ॥ अथकर्पटीयोगः ॥ कश्चिद्वैश्यकुलेपूर्वंकांचीनगरेऽप्यथ॥संतदासइतिख्यातोधनधान्येनसंयुतः॥३९॥अतुलःपरमोदारोदानधर्म
परायणः ॥ एकस्मिन्समयेविप्रभ्रात्रासहकृतश्छलः॥४०॥नदत्तस्तस्यवैभागःकृत्वायुद्धंपरस्परम्॥ तेनपापानुसारेणप्राप्तोऽसौयमसादनम्
॥ ४१ ॥ गुप्तपापरतोधूर्तआत्मकार्य्यस्यसाधकः ॥ प्रथमेषष्ठाष्टमेवर्षेपीड्यमानकलेवरः॥४२॥ आविंशतिवर्षातेहिचाल्पमृत्युर्भविष्यति॥
द्विषष्टितमवर्षेहिमृत्युस्तस्यतथाध्रुवः॥४३॥६॥अथकरुणागारः ॥ कश्चिद्वैश्यकुलेपूर्वंनदीचर्मण्वतीतटे॥किशोरइतिविख्यातःसर्वसम्पद्युतो
धनी ॥ ४४ ॥ पुत्रकन्याविहीनश्चक्रंदितःसर्वदावसः ॥ एकदाहिकृतंकर्मदुष्टंतेनचदारुणम् ॥ अज्ञेननिहतस्तेनमार्जारस्यसुतश्चवै ॥ १७
तेनपापानुसारेणकन्यापुत्रविवर्जितः ॥ ४६ ॥ पुत्रार्थेचिंतितंतेनसवैश्यःपंचतांगतः ॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्यफलंतथा ॥ इदं

जन्मद्वितीयंतुषिद्धितंकरपृष्ठके॥४७॥१। ३ ।.६ । ९ । १५ । २१ । २६ । वर्षेषुकष्टम्॥परमायुर्वर्षाणि॥८१।७अथकस्तूरीयोगः॥कस्तू
रीकेजातयोगेपूर्वजन्मनिब्राह्मणः ॥नैपालेनगरेचैवनिवसन्पूर्वजन्मनि॥४८॥धनीदेवइतिख्यातोमहोद्यमउपार्जकः ॥ साधुसेवारतस्तत्रपर्व
स्वपिचशक्तितः ॥४९ ॥ सत्पात्रेचद्विजेदत्त्वास्वर्णधातुकदम्बकम्॥तीर्थेतीर्थेकृतासेवाब्राह्मणानांविशेषतः ॥५०॥ पुनरागत्यमेदिन्यांचंद्र
लोकाद्विजोत्तमः ॥ गौरोऽरुणोदीर्घदेहोविद्याविनयसंयुतः॥ ५१॥१।४।८।१२।१७।२७। वर्षेषुकष्टम्॥परमायुर्वर्षाणि७१।८॥ अथकेशपा
शयोगः॥केशपाशेनरोजातःपूर्वजन्मनिमहाधमः॥कौटिल्योभीषणाऽऽकारोजीवहिंसापरायणः॥५२॥लोलुपःपरदारेषुचौरकर्मरतःसदा ॥
आजन्मसर्वकालेहिकृत्वापापंनिरंतरम्॥५३॥एकस्मिन्समयेविप्रब्राह्मणस्यप्रसंगतः॥ प्रयागमगमत्सोपितत्रस्थित्वाद्विवार्षिकम् ॥ ५४ ॥
वेण्यामस्यपादजस्यमृत्युःप्राप्तश्चकालतः ॥ गतोऽतइंद्रलोकेऽसौस्थित्वावर्षसहस्रकम् ॥ ततःपुण्यक्षयेजातेचागतोभूमिमंडले ॥५५॥३।६।
१७।२२।२९।४६॥वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि॥७५।९॥अथकेवलीयोगः॥केवलीयोगेयोजातःपूर्वजन्मनिब्राह्मणी॥ कर्कशाकटुजल्पाच
प्रत्यहंद्वंद्वकारिणी ॥ ५६ ॥ पतिंमत्वातुतृणवच्छ्वशुरद्रोहकारिणी ॥ महाभिमाननिरताद्वितीयाराक्षसीवच ॥५७॥ पतिंत्यक्त्वागताविप्र
बद्रिकारण्यसन्निधौ॥तत्रभाविबलात्पुत्रहिमदोषान्मृतातदा५८॥शिवलोकेगतासातुतत्रस्थित्वाविशेषतः॥ जन्मन्यस्मिंस्तृतीयेचसैवजातः
पुमांस्त्वसौ ॥५९॥३।९।१३।१७।२३।वर्षेषुकष्टम्॥परमायुर्वर्षाणि ६८॥१०॥अथकलिकायोगः॥ कलिकायोगेयोजातःपूर्वजन्मनिबाहु
जः ॥हिडम्बदेशेवसत्सोपिकिंचिद्भूमिपतिस्तदा ॥६०॥ युद्धाकांक्षीमहोत्साहीकुटुम्बस्यतुपालकः॥ एकदासमरेविप्रजित्वाशत्रुबलंबलात
॥६१॥स्वगेहेपुनरागत्यहर्षगद्गदमानसः ॥ यौवनस्यमदेनाऽथकृतंकर्मजुगुप्सितम् ॥६२॥ नृपघातःकृतस्तेननिशायांचौरकर्मणि॥ सम्मृतः

शिवलिंगस्थोभैरवलोकंसमागतः॥ पुनरागत्यमेदिन्यांकिंचित्पुण्यप्रभावतः ॥ ६३ ॥ १ । ४ ॥ ७ । १२ । १७।२१।२८वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि १०० ॥११॥ अथकामयोगः ॥ कामयोगेनरोजातःपूर्वजन्मनिब्राह्मणः ॥ विद्याभ्यासंनकृतवान्देवंकंचनमन्यते६४ ॥
नानापापेषुनिरतोवनेदावाग्निकारकः ॥ चौरवृत्तिश्चचपलोऽसत्कर्मणिसदारतः ॥ ६५ ॥ एकदाविपिनेरम्येमार्गावरोधनेरतः ॥ तत्रभा
विबलात्पुत्रब्राह्मणःपंडितःसुधीः ॥ ६६ ॥ तन्मार्गेहिसमायातोदृष्ट्वातंचातिहर्षितः ॥ परस्परंब्रूचतुर्द्वौवाक्यानांरचनांचतौ ॥ ६७ ॥
दुष्टस्यहृदयेलग्नंरामनामनिरामयम् ॥ चौरकर्मपरित्यक्त्वातीर्थयात्रांव्रजत्यसौ ॥ ६८ ॥ आयुषस्तुसमाप्तित्वात्समृतःकुरुजांगले ॥
भुक्त्वापापफलंपापात्पुण्यात्पुण्यफलंतथा ॥ ६९ ॥ मर्त्यलोकेसमागत्यलोहितांगः शुभाननः ॥ प्रथमेद्वितीयेवर्षेचदशमैकादशेपिवा ॥
कष्टेनाऽतिप्रपीडचश्चतथाद्वाविंशतातथा ॥ ७० ॥ १२ ॥ अथकर्णसूत्रयोगः ॥ कर्णसूत्रेनरोजातोबुद्धिमांश्चतुरोघृणी ॥ धनधान्ययुतः
सम्यक्पुत्रस्त्रीपरिवारयुक् ॥७१॥कश्चित्तुबाहुजःपूर्वंचाङ्गदेशेवसत्यसौ॥प्रसेनइतिविख्यातःशिवस्याऽऽराधनेरतः ॥७२ ॥ एकस्मिन्समये
विप्रशिवप्रसादमिच्छता ॥ आरूपब्राह्मणाःसर्वेह्याहृताबहुशोमुदा ॥७३॥ भोजनाच्छादनेदत्त्वादक्षिणांचततोद्विज ॥एवंनिवसतस्तस्यबहुव
र्षगताऽऽगतैः ॥ ७४ ॥ आयुषस्तुसमाप्तित्वात्समृतःसरयूतटे ॥ पुनराऽऽगत्यमेदिन्यांपूर्वपुण्यप्रभावतः ॥ गौरोऽरुणःसुभव्यश्चदक्षिणांगे
प्रचिह्नितः॥७५॥३ । ८ । १३ । १९ । २२ । २७ वर्षेषुकष्टम्॥परमायुर्वर्षाणि८९॥१३॥अथकपालिकयोगः॥ काश्मीरेनगरेपूर्वंब्राह्मणः
[illegible]र्जितः ॥ मयविचारतोनित्यंशौचकर्मविवर्जितः॥ ७६ ॥ अभक्ष्यंभक्षितंतेनाऽपेयंपीतंद्विजोत्तम॥अगम्यागमनंकृत्वाब हुवर्षगता
[illegible]॥७७॥आयुषस्तुसमाप्तित्वात्कीटयो[illegible]गतः ॥ पश्चान्मानुष्यमापन्नःकिंचित्पुण्यप्रभावतः॥७८॥ गौराङ्गश्चंचलश्चैवसव्ययीच

पराक्रमी ॥ १ ।१०।१७।२३।२९ । ३९ वर्षेषुकष्टम्॥परमायुर्वर्षाणि६६ ॥ १४ ॥ अथकौमोदकीयोगः ॥ आसीज्जन्मांतरेचैवनापितः शुभकर्मणि ॥ सुबुद्धिःसभामान्योनृपसेवारतःसदा ॥ ७९ ॥ केशवेतिसमाख्यातोद्रव्यस्योत्पादनेरतः ॥ नानामनोरथैस्तेनशिवस्य स्थापनंकृतम् ॥ ८० ॥ आरामान्विविधान्कृत्वापथिकूपाश्चनिर्मिताः ॥ एवंकालेगतेविप्रपुण्यानांसंग्रहःकृतः ॥ ८१ ॥ पत्नीतस्यसती जातास्वर्गलोकमुभौगतौ॥बभूवबाहुजःसोपिमध्यदेशेतदाऽनघ॥८२॥किंचिद्भूमिपतिस्तत्रचोग्रदंडःप्रतापवान् ॥धर्ममार्गेचकुशलःपरोप करणेरतः॥८३॥कृतंपापार्जनंतेन दुष्टसंगात्तदाऽनघ॥तेनपापानुसारेणनाशोजातश्चसंततेः ॥८४॥ इदंजन्मतृतीयंवैचैषद्वौरोगुणान्वितः ॥ ॥ ८५ ॥ ३ । ६ । ११ । १७ । २५ । २८ । ३३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ६३ ॥ १५ अथकीटसंज्ञयोगः ॥ कीटसंज्ञेच योजातः पूर्वजन्मनिभूमिपः ॥ उज्जयिन्यांनगर्य्यांवैनिवसन्पूर्वजन्मनि ॥ ८६ ॥ उग्रदंडःप्रतापीचसदसज्ज्ञोविवेकवान् ॥ बहुस्त्रीभि रन्वितश्चपुत्रकन्याविवर्जितः ॥ ८७ ॥ एकस्मिन्समयेविप्रभगवदाराधनंकृतम् ॥ आहूयब्राह्मणाः सर्वेपूजिताश्चविशेषतः ॥८८॥ तोषि ताब्राह्मणाःसर्वे दानंदत्त्वाचहर्षितः ॥ बभूवपुत्रोभव्यश्चसर्वलक्षणसंयुतः ॥८९॥ राज्यंदत्त्वास्वपुत्रायजगामगिरिकाननम् ॥ तपश्चर्य्यां तथाकृत्वाविपिनेगह्वरेशुभे ॥ मृतोऽसौकालेसंप्राप्तेपुनर्यातोहिभूतले ॥९०॥ ११ । ९ । १७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ।७७। १६ अथकेशरीयोगः ॥ आसीज्जन्मनिवानारीब्रह्मपुत्रस्यसन्निधौ ॥ रूपदेवीतिविख्यातासुंदरीचोर्वशीयथा ॥ ९१ ॥ लावण्यामधुरालापा चारुकिंजल्कशोभना ॥ पतिप्रीतिरताचोग्रव्रततिथ्यनुपालिका ॥ ९२ ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यगौरवात् ॥ एकस्तुपुरुषोभव्यो यथाकामःस्वरूपधृक् ॥९३॥ लग्नंपरस्परंचित्तंकामबाणैर्विमोहितम् ॥ पतित्यागाद्धिपापात्साऽगताहिनरकेभृशम् ॥ ९४ ॥ नानाजन्म

वतीजातामर्त्यंलोकेपुनःपुनः ॥ पश्चान्मानुष्यमापन्नासुंदरीक्रोधतत्परा ॥ ९५ ॥ ३ । ८ । १३ । १७ । २५वर्षेषुकष्टम्॥परमायुर्वर्षाणि
७३ ॥ १७ ॥ अथकोलयोगः ॥ कोलयोगेनरःपूर्वमांध्रदेशेतदावसत् ॥ चित्रसेनइतिख्यातोबाहुजःपुण्यवानपि ॥ ९६ ॥ पत्नीपुत्र
समायुक्तआखेटकरतःसदा ॥ मृगयायांगतोदैवाच्चंपकारण्यसन्निधौ ॥९७॥ वनेहिगह्वरेगत्वाहत्वाबहुविधान्मृगान् ॥ एकातुहरिणीविप्र
सगर्भापिप्रताडिता ॥९८॥ तेनपापानुसारेणजातःपुत्रोविनश्यति ॥ गर्भस्यपातनाज्जातंपीडयमानंकलेवरम् ॥ पुत्रार्थेचिंतितंसम्यक्सर्वं
कालंद्विजोत्तम ॥ ९९ ॥ १ । ३ । ८ । १२ । २३ । २९ । ३१ । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥१८॥ अथकामिनीयोगः॥
आसीज्जन्मांतरेचैववंगदेशेतदावसन्॥शूद्रोनामप्रभुःसोऽयंद्रव्यवान्धर्मवानपि ॥१००॥ तीर्थेतीर्थेव्रतंकृत्वातथादेवाश्चतर्पिताः॥गंगासागर
केगत्वातत्रमृत्युर्बभूवह ॥१०१॥ स्वर्गापवर्गभोगश्चबभूवबहुवार्षिकः ॥ ततःपुण्यक्षयेजातेमानुष्यंचगतोऽधुना ॥१०२॥ गौरसरूणोऽतिह्र
स्वश्चतिलंमाषश्चलांछनम्॥सुशीलश्चातिभक्तश्चधनधान्यसमन्वितः॥१०३॥३।५।१२।१७।२०।२४ वर्षेषुकष्टम्॥परमायुर्वर्षाणि६५॥१९
अथकमलायोगः॥कमलायांनरोजातःपूर्वजन्मनिभूमिपः॥ सिंहकेतुरितिख्यातः पत्नीगुणवतीशुभा ॥१०४॥ यज्ञधर्मरतःसोसावग्निहोत्र
स्यसाधकः॥पर्वस्वपिचतेनैवब्राह्मणाःसत्कृताःशतम्॥१०५॥एकस्मिन्समयेविप्रकृतंकर्माऽतिदारुणम् ॥ ब्राह्मणस्यकृतानिंदासाध्वीचस्त्री
कलंकिता ॥१०६॥ तेनपापानुसारेणश्रियस्तस्यक्षयंगताः ॥ यदारातिःसमाऽऽयातस्तदाराजापलायितः ॥ १०७ ॥ अटन्वनेवनेसोऽपि
दुर्बलश्चबभूवह ॥ समृतोदंडकारण्येदेवलोकेतथागतः ॥ १०८॥ बहुवर्षसहस्रांतेपुनरागत्यभूतले ॥ अतसीपुष्पवद्देहःसर्वांगेषुसचिह्नितः॥
॥१०९॥२।९।१३।१५।२०।२५।२८।३३।३६।४०। वर्षेषुकष्टम ॥ परमायुषश्च [illegible] ांचपरिकीर्तिताः॥१००॥२०॥अथकमलिनीयो

गः ॥अमूद्वैश्यकुलोत्पन्नोधनधान्यसमन्वितः॥सरस्वत्यांश्चनिकटेविष्णुधर्मरतःक्वचित्॥ ११०॥ दत्तानितेन्नदानानिपर्वस्वापचशक्तितः ॥
सर्वेष्वपिचतेनैवश्रद्धाहीनेनचेतसा ॥ १११ ॥ दैवाद्विजंस्यवैकस्यचित्प्राप्तांगर्भसंयुताम्॥ वैरभावात्प्राक्तनाच्चहत्वाऽऽनृण्यमवापसः ११२
तद्गर्भगामृताकन्यापापमाऽऽचरितंत्विदम् ॥ धर्माऽधर्मफलंभुक्तंगत्वातत्रयमालयम् ॥ ११३ ॥ पूर्वपुण्यवशाद्विप्रसजातःपादजोऽधुना ॥
सरक्तकृष्णच्छिन्नांगोविष्णुभक्तिसमन्वितः ॥ ११४ ॥ चिंताऽधिकःस्वल्पधनीस्त्रीभ्रातृसुखसंयुतः ॥ पुण्यादिदंतथापापाज्जातःपुत्रविव
र्जितः ॥ ११५ ॥ ॥ ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५७ ॥ २१ ॥ अथकांतियोगः ॥ कश्चिद्विप्रोऽभवत्पूर्वंवंगदेशेचग्रामपः ॥ धर्म
शास्त्रक्रियाहीनःपितृमातृसुखाऽन्वितः ॥ ११६ ॥ दत्तानितेनदानानिब्राह्मणेषुचशक्तितः ॥ सत्पात्रेषुसहस्रेषुश्रद्धायुक्तेनचेतसा ॥
॥ ११७ ॥ मृगयायांगतोविप्रकदाचिद्दैवयोगतः ॥ घोरंकर्मकृतंतेनह्यारंभेयौवनस्यच ॥ ११८ ॥ लुंठितोब्राह्मणस्तत्रप्रहारैर्दुःखि
तोभृशम् ॥ हतोप्याशुबलेनैवसमृत्योश्चवशंगतः ॥ ११९ ॥ ब्रह्मस्वंतदितिज्ञात्वानभुक्तंकेनचिद्गृहे ॥ तेनैवभक्षितंविप्रयेनविप्रः
प्रपीडितः ॥ १२० ॥ सगत्वायमलोकेतुभुक्त्वातुयमशासनम् ॥ सगौरोदर्शनीयश्चमृतवत्सोभविष्यति ॥ १२१ ॥१।४।९।१४ ।२५।२९
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ७१ ॥ २२ ॥ अथकायेरायोगः ॥ कायेरायोगेयोजातःकश्चिद्द्विजकुलेतदा॥ दामोदरइतिख्यातःपत्नीत
स्यप्रभावती ॥ १२२ ॥ कामरूपोऽवसत्सोपिसर्वसम्पद्युतोधनी ॥ धर्माधर्मविवेकीचनृपद्वारेप्रतिष्ठितः ॥ १२३ ॥ एकस्मिन्समयेवि
प्रद्रव्यलोभेनब्राह्मणः ॥ अयोग्यंकृतवान्सोपिब्राह्मणस्यहृतंधनम् ॥ १२४ ॥ एवंगतेस्वल्पकालेतस्यमृत्युरभूत्पुरा ॥ नानानरकेषुसस्थि
त्वाजन्मृत्युशतैरपि ॥ १२५॥१।१३।२१।२७। ३५। ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ५३ ॥ २३ ॥ अथकम्बलयोगः ॥ कम्ब

लेचनरःपूर्ववैजनाथस्थलेऽवसत् ॥ अच्युताऽऽनंदनामाख्यःपरसंतापदायकः ॥ १२६ ॥ क्रोधातुरःसदाभ्रष्टःपरद्रव्याऽपहारकः ॥ प्रपंच
निरतःसोपिपर्य्यटंश्चचतुर्दिशः ॥ १२७ ॥ विपाशानिकटेमृत्युर्बभूवद्विजसत्तम ॥ पापाच्चनरकान्भुक्त्वापुण्यैर्भोगांश्चशाश्वतान् ॥ १२८॥
नानाजन्मान्यभूवन्वैततोजन्मधरातले॥महाभिमाननिरतःस्वल्पवित्तसमन्वितः॥१२९॥पूर्वपापाऽनुसारेणपुत्रस्त्रीसुखवर्जितः॥ गोविश्वन
खवर्षेषुकष्टेनातिप्रपीडितः॥१३०॥९।१३।२०।परमायुर्वर्षाणि॥६४।२४अथकेयूरयोगः॥योगेकेयूरकेजातःपूर्वजन्मनिभिक्षुकः॥ पंपाख्ये
नगरेचैवन्यवसत्पूर्वजन्मनि ॥१३१॥क्षुत्तृड्भ्यांचातिविकलोभ्रमन्देशेप्रदेशके॥एकदाकोकिलाऽरण्येदैवयोगात्समागतः॥१३२॥तत्रविप्रा
ऽऽश्रमंभव्यंदृष्ट्वातत्रतुचेष्टितम् ॥ ब्राह्मणेनविलोक्याथजलंदत्त्वासुशीतलम्॥१३३॥गव्याऽन्नंभोजयामासमासमेकंतदाऽऽस्थितः॥ज्ञानोपदे
शोमंत्रश्चदत्तस्तेनदयालुना ॥ १३४॥ किंचित्कालेगतेतातभिक्षुकःसतदामृतः ॥ ततश्चमानुषींयोनिंचाऽऽगतोधरणीतले ॥ १३५ ॥धन
धान्यसमृद्धस्तुसर्वसौख्यसमन्वितः। ४।१२।१८।२४ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ७० ॥ १३६। २५ अथकारनाटीयोगः ॥
आसीत्पूर्वंहिवैश्योसौमगधेचाऽवसत्पुरा ॥ धनमैश्वर्य्यमतुलंकृपणोऽतिदुरासदः ॥ १३७ ॥ एकस्मिन्समयेविप्रकृतंकर्मसुदारुणम् ॥
निवारिताऽतितृषितागौर्मृतादुःखपीडिता ॥ १३८ ॥ गोपितंघस्मरंतेनकष्टमाचरितंत्विदम् ॥ पापाच्चनरकंगत्वादिव्यवर्षशतैरपि ॥
॥ १३९ ॥ आगतश्चपुनर्भूम्यांकिंचित्पुण्यप्रभावतः॥धनमैश्वर्य्यमतुलंपुत्रदारविवर्जितः ॥ १४०॥ १ । ३ । ६ । ७ । ९ । १४ । २५ ।
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ १०७इति ॥ २६ ॥ अथकपर्दियोगः ॥ आसीत्पूर्वभवेकश्चि[illegible]ऽवेषधारकः॥ताम्रपर्ण्याश्चनिकटेन्य
वसत्पूर्वजन्मनि ॥ १४१ ॥ इन्द्रजालीचभूत्वापिचेटकेनाटकेरतः ॥ परभार्य्याविघातार्थसंधानंचक्रु[illegible]तदा ॥१४२ ॥ परद्रव्यापहरणंकृतं

तेनतदाऽनघ ॥ एवंनिवसतस्तत्रबहुवर्षगतागतेः ॥ १४३ ॥ आयुषस्तुसमाप्तित्वान्मृतोहिपापंभागसौ ॥ प्रक्षितोनरकेदूतैर्बहुकालंयमा ऽज्ञया ॥ १४४ ॥ षष्टिवर्षसहस्रांतेभूतलंपुनरप्यगात् ॥ ३ । ५ । ९ । १५ । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ १२० ॥ २७ अथकं चुकीयोगः॥वैश्यःपूर्वभवेविप्रव्यापारकुशलःसदा ॥ दानयज्ञरतोनित्यंब्राह्मणाऽतिथिपूजकः ॥ १४५ ॥ तद्गृहेधान्यराशिंतुह्यभक्षयत्क्षुधा र्दिता ॥ आसन्नप्रसवाविप्रसुरभिःकालमोहिता ॥१४६ ॥ भृशंतेनहताकुक्षौलोभोपहतचेतसा॥बालोवत्सोमृतस्तत्रगर्भस्थश्चातिताडनात् ॥१४७॥ तद्दुःखेनमृतासातुबहुचाक्रंदितंपुरा॥एवंनिवसतातत्रमृतःसयमशासनम्॥१४८॥प्राप्यस्वर्गंतथाभोगान्भुक्त्वापापफलंतथा॥ पुन रागत्यमेदिन्यांकिंचित्पुण्यप्रभावतः ॥१४९॥ कुलाग्रणीःकार्य्यकरोगुणीपित्तकफान्वितः ॥ मध्यरूपयुतःश्रीमान्द्विभार्य्योज्ञातिसंयुतः ॥१५०॥गोबालवत्सकवधःकृतोऽनेनचपुत्रक ॥ प्रायश्चित्तेकृतेतत्रकनिष्ठायाःसुतोभवत् ॥१५१॥ एकहीनेथपंचाशन्मृत्युरब्देज्वरेणवे ॥ प्रायश्चित्तेकृतेह्यायुःषष्टिकाब्दसमन्वितम्॥कन्यागतेरवौचंद्रेमीनस्थेमरणंध्रुवम्॥१५२॥२८॥अथकीरयोगः॥ आसीत्पूर्वभवेविप्रोगिरिवा सीजितेंद्रियः॥विद्याभ्यासरतोनित्यंसत्यधर्मपरायणः॥१५३॥दत्तानितत्रदानानिब्राह्मणेभ्यःस्वशक्तितः ॥ पर्वस्वपिचतेनैवाऽध्यापिताब्रा ह्मणाद्विज॥१५४॥अथभाविबलात्पुत्रब्राह्मणेनतपस्विना॥स्थापितंतद्गृहेस्वर्णंलोभेननहिदत्तवान् ॥१५५॥ ततोबहुगतेकालेकालधर्ममुपे यिवान्॥ स्वर्णाऽपहारीसततंगतोऽसौयमसादनम् ॥ १५६ ॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्यफलंतथा ॥ पूर्वपुण्यप्रभावेणजातोऽयंब्राह्म णोधुना ॥ १५७ ॥ धर्मकर्मक्रियायुक्तोलोभदुःखसमन्वितः ॥ यौवनेस्त्रीसुखंत्वत्रद्विपंचाशन्मितेब्दके ॥१५८॥ भृशंपुत्रसुखंप्राप्तंपूर्वब्राह्म णपूजनात् ॥ सुवर्णहरणाद्दोषात्पूर्वजन्मनिमानद ॥ १५९ ॥ कुनखीह्यत्रविज्ञेयःशरीरेलक्षणैरिह ॥ सप्तसप्ततिवर्षाणिसपुत्रोजीवतिध्रु

भृगु- वम् ॥ १६० ॥ कार्त्तिकेकृष्णपंचम्यांशशिनिद्यागतेद्विज ॥ वृषलग्नेचनिधनंभविष्यतिनसंशयः ॥ १६१ ॥ इति ॥ २९ अथकामियोगः॥ संहि
पूर्वजन्मन्यभूत्कश्चिद्वैश्योधर्मपरायणः ॥ मथुरायांमहाभागन्यवसत्पूर्वजन्मनि ॥ १६२ ॥ भिक्षाटनंकृतंनित्यंप्रतिग्राहेणजीवति ॥ दत्ता
५१ नितत्रदानानिपर्वस्वपिचशक्तितः ॥ १६३ ॥ पापमाचरितंतेनकामलुब्धेनचेतसा ॥ स्वजातिवनितायांवैव्यभिचारंचकारसः ॥ १६४ ॥
तस्यास्तत्राभवद्गर्भःपातनंकृतवानसौ ॥ महौषधैश्छेदनकैःपरिवादात्तथाद्विज ॥ १६५ ॥ साम्प्रतंतेनदुःखेनगर्भपातेननिश्चितम् ॥ ततो
यमपुरंप्राप्तःससहायोद्विजोत्तम ॥ १६६ ॥ पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन ॥ नात्युच्चःश्यामलोभव्यःस्वल्पवित्तसमन्वितः ॥
॥ १६७ ॥ व्यापारनिरतःक्रोधीबलबुद्धियुतश्चलः ॥ भ्रातृयुक्तःपितृसुखाद्धीनःस्त्रीप्रियसंयुतः ॥१६८॥ गर्भपातनकात्पापात्प्रागत्रसुतव
र्जितः॥पंचसप्तत्यायुःस्यात्तीर्थभूमौचपंचता॥१६९॥३०॥अथकावेरीयोगः ॥ राजपुत्रोऽभवत्पूर्वंक्रूरकर्माप्रतापवान् ॥ धनधान्यसमृद्धो
पिवंगदेशेऽवसत्तदा ॥ १७० ॥ वाचकेभ्यःप्रदत्तानिगोभूम्यश्वहिरण्यकम् ॥ अथभाविबलाद्विप्रलोभोपहतचेतसा ॥ १७१ ॥ सीमावादे
हृतंद्रव्यंब्राह्मणानामधर्मतः ॥ १७२ ॥ द्विजैकेनसहायेनकृतंकर्मातिदारुणम् ॥ भूमिवादेमृतस्तत्रसंग्रामेकालनोदितः ॥१७३॥भूमिपालो
बभूवाग्रेमध्यदेशेशुभस्थले ॥ गौरःसूरिर्महोग्रस्तुबहुकन्यःकृतीशुभः ॥ १७४ ॥ ददातिशक्तितोधीमानत्युच्चोबंधुसंयुतः ॥ बहुन्यायरतो
धीमान्पैत्तिकःप्रियवाग्घृणी ॥ १७५ ॥ बहुभार्य्योयशस्वीचभृत्यवाहनसंयुतः ॥ अष्टाविंशमितेवर्षेस्वल्पपुत्रसुखान्वितः ॥१७६॥ ब्रह्म
स्वहरणात्पापात्पुत्रहीनःप्रदृश्यते ॥ खवेदाब्दगतेविप्रस्वल्पमृत्युर्भविष्यति ॥ १७७ ॥ प्रायश्चित्तेकृतेविप्रजीवेद्वर्षाऽष्टसप्ततिम् ॥ ५
॥ १७८ ॥३१॥ अथकश्यपयोगः ॥ पृच्छकोयमयोध्यायामभूच्छूद्रश्चधार्मिकः ॥ धनधान्यसमृद्धस्तुयशस्वीपितृवल्लभः ॥ १७९ ॥

गयायांद्वादशेवर्षेयातोमातृसहायकः ॥ सानुजश्वसपत्नीकःसहायत्रयसंयुतः ॥ १८० ॥ कृतवांश्वगयाश्राद्धंनानाविभवविस्तरैः ॥
काम्यश्राद्धानितत्रैवकृत्वाचंद्विजसत्तम ॥ १८१ ॥ पितरस्तस्यवैदत्त्वाधनंधान्यंदिवंगताः ॥ अथाऽऽगत्यगृहंवर्षेचत्वारिंशन्मितेसच ॥
प्रायश्चित्तेकृतेविप्रअशीत्यब्दान्प्रजीवितः ॥१८२॥३२ अथकौशिकीयोगः॥आसीज्जन्मांतरेचैवबाहुजोगिरिसन्निधौ॥ सभार्यांचतुरोदक्षो
बहुबंधुसमन्वितः ॥ १८३ ॥ सहोदरविहीनस्तुबहुपुत्रोबहुप्रियः ॥ बहुभार्य्योयशस्वीचक्षयवृद्धिधनान्वितः ॥ १८४ ॥ पादजस्यवधा
त्पूर्वंपापाऽदत्रचपृच्छक ॥ ऊरूदरव्यथायुक्तोयौवनेजायतेध्रुवम् ॥ १८५ ॥ ३३ अथकपिलायोगः ॥ आसीत्पूर्वभवेकश्चिद्ब्राह्मणःशास्त्रव
र्जितः । विद्याभ्यासविहीनश्चकृषिकर्मरतः सदा ॥ १८६ ॥ स्वल्पवित्तयुतस्त्यागीबंधुमान्योतिमानसः ॥ स्ववर्णधर्मरहितोऽतिथीनांपू
जनेरतः ॥ १८७ ॥ अथतस्यगृहेकश्चिद्द्विजःस्थापितवान्धनम्॥तस्मैद्विजायलोभाद्वैपुनर्दत्तंनतद्धनम्॥१८८॥दम्पतिभ्यांमिलित्वातुब्रह्म
स्वंभक्षितंपुरा॥गत्वाधर्मपुरंदैवाच्छुभंवायदिवाशुभम्॥१८९॥फलंभुक्त्वाऽधुनाजातोमातृकुक्षौर्द्विजोत्तमः ॥ मध्यमोरक्तगौरश्चपूर्वपापसहो
दरैः॥१९०॥७२वर्षेमृत्युः॥इति॥३४अथकंदयोगः॥कंदयोगेचयोजातःपूर्वजन्मनिपादजः॥ धनधान्यसमृद्धस्तुवाममार्गेपरायणः १९१
एकस्मिन्समयेविप्रतीर्थाऽवगाहनंकृतम् ॥ संप्राप्यभवनेपश्चात्कृतवान्कर्मदारुणम् ॥ १९२ ॥ ददाहभवनंगोत्रिणश्चसोऽयंतदाद्विज ॥
तन्मध्येवत्सरीत्वेकाभस्मीभूताचदारुवत् ॥१९३॥ तेनपापानुसारेणधनपुत्रविवर्जितः ॥ शिवस्याऽऽराधनात्पुण्यात्पुत्रवृद्धिर्भविष्यति ॥
॥१९४॥विंशतिप्रमितेवर्षेचाऽल्पमृत्युर्भविष्यति ॥ प्रायश्चित्तेकृतेविप्रजीवेद्वर्षाऽष्टषष्टिकम् ॥१९५॥६८॥ ३५ अथकंदादियोगः ॥ कंदा
दियोगेयोजातःपूर्वजन्मनिब्राह्मणः ॥ सर्वसिद्धांतवेत्ताचपरभार्य्यारतःसदा ॥ परदाररतात्पापात्सुतवित्तविवर्जितः॥बाहुजोऽयं चभोविप्र

 

मध्यदेशेससमुद्भवः ॥ १९६ ॥ परापवादनिरतो यौवनेदुःखसंयुतः ॥ पुत्रहीनस्तथादीनोदारिद्र्येणप्रपीडितः ॥ १९७ ॥ १ । ४ । ७ । ९
१३ । १६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ९० ॥ ३६ अथकोपरयोगः॥कोपरेचनरःपूर्वंकेदारेहितदाऽवसत्॥भीमसेनइतिख्यातःपत्नी
तस्यवरांगना ॥ १९८ ॥ सुंदरीचाऽतिलावण्यंमुखंपद्मदलाकृति ॥ एकस्मिन्समयेविप्रसाबालाचनदीतटे ॥ १९९ ॥ स्नानार्थे
पिगतातत्रसखीभिःपरिवेष्टिता ॥ तत्रभाविबलात्पुत्रनृपस्तत्रसमागतः ॥ २०० ॥ दृष्ट्वाकामातुरोभूत्वाहृत्वातांचबलाद्बलात् ॥
आनीतास्वगृहेनूनंरमणंचतथाऽकरोत् ॥ २०१ ॥ तस्याःपतिर्मृतःशोकेह्यात्मघातेनपुत्रक ॥ आत्मघाताच्चसततंव्रजन्तियममं
दिरे ॥ २०२ ॥ तिर्य्यग्योनिसमुत्पन्नःशतधाचमहीतले ॥ पुनर्वैमानुषींयोनिंमध्यदेशेप्यजायत ॥ सरक्तगौरोमति
मान्द्वादशाब्देप्रपीडितः ॥ १२ । २० । २७ । ३२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ८१ ॥ २०३ ॥ ३७ अथकृ
ष्णायोगः ॥ पूर्वजन्मनिसानारीकुरुदेशेऽवसद्द्विज ॥ नृपस्यदुहिताशुभ्रामदगर्वेणगर्विता ॥ २०४ ॥ तस्याश्चमातापितरौदिवंयातौ
तदाऽनघ ॥ जामात्रेचददूराज्यंसर्वेहिपुरवासिनः ॥२०५॥ सानारीचाऽतिगर्वेणमन्यतेतृणवत्पतिम् ॥ एकस्मिन्समयेविप्रकटुवाक्यंचसाऽ
वदत् ॥२०६॥ तस्याःपतिस्तुक्रोधेनाविषंपीत्वामृतस्तदा ॥ एवंस्वल्पतिथेकालेगतेस्त्रीपंचतांगता ॥२०७॥ सानानानरकान्भुक्त्वाकीट
योनिशतेरपि ॥ पुनरागत्यमेदिन्यांसर्वसौख्यसमन्विता ॥ २०८ ॥ षोडशाऽब्दंतुविधवासाजाताऽत्रद्विजोत्तम ॥ त्रिंशद्वर्षांतरेकष्टंह्यायु
[illegible]षिकम् ॥ २०९ ॥ माघेमासेभवेन्मृत्युःपंचम्यांधवलेजले ॥२१० ॥ ३८अथकालीयोगः॥कालीयोगेचयोजातःपूर्वजन्मनिवैष्ण
[illegible] ॥ [illegible]मणस्मथुरे[illegible]न्यवसत्पूर्वजन्मनि ॥ २११ ॥ विरक्तः सोपिभक्तश्चसहशिष्येणराजते ॥ एकस्मिन्समयेविप्रकुतंकर्मजय

सितम्॥२१२॥ब्राह्मणस्यकृतानिंदातथावेदस्यवतदा॥तेनदोषेणमेविप्रकुष्ठरोग्यधुनाभवेत् ॥ २१३ ॥ २।८।१।१३।२३।२७।२९।३१
[illegible]कष्टम्॥परमायुर्वर्षाणि १०९॥३९अथकुलीरयोगः॥कश्चिद्द्विजकुलेपूर्वंशोणभद्रस्यपश्चिमे ॥ जयाजयइतिख्यातःपत्नीपुत्रविवर्जितः ॥
॥२१४॥नानाकलाऽभिनिरतः पशुहिंसापरायणः॥नृपाऽनुकंपयाविप्रद्रव्यंलब्धंसुपुष्कलम् ॥ २१५ ॥ एकस्मिन्समयेविप्रब्राह्मणस्यप्र
संगतः ॥ तीर्थाऽवगाहनंकृत्वातथापुण्याऽर्जनंकृतम् ॥२१६॥आयुषस्तुसमाप्तित्वात्सविप्रः पंचतांगतः॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्य
फलंतथा ॥ २१७ ॥ बहुवर्षसहस्रांतेपुनरागत्यभूतले ॥ ईषद्गौरोमध्यमश्चदक्षिणांगेहिचिह्नितः ॥ २१८ ॥ १। ४।८।११।१७
२०।२७।३०।३६ वर्षेषुकष्टम्॥परमायुर्वर्षाणि ७४॥ ४० अथकालयोगः ॥ आसीत्पूर्वभवेकश्चिद्वैश्यःपरमधार्मिकः ॥ देशेपांचाल
केचैवन्यवसत्पूर्वजन्मनि॥ २१९ ॥ धनमैश्वर्य्यमतुलंपरकार्य्यस्यसाधकः ॥ कृपणस्यदारिद्रस्ययथेच्छन्तुददौपुरा॥ २२० ॥ एकस्मिन्स
मयेविप्रसमर्थेषुतदाऽनघ ॥ अन्नमेरुंददौप्रातःप्रत्यहंचद्विजोत्तम ॥२२१॥ तेनपुण्यप्रभावेणस्वर्गंगत्वासभार्यकः॥अधुनाऽगत्यमेदिन्यांसर्व
सौख्येनसंयुतः॥२२२॥१।३।५।९।१७।२१।३२वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि६६॥४१अथकुमारयोगः॥कुमारयोगेसंजातःपूर्व
जन्मनिपादजः ॥ देशेकारूषकेचैवन्यवसत्पूर्वजन्मनि ॥ २२३ ॥ हरिदासइतिख्यातः सर्वसम्पद्युतोधनी ॥ राजमान्यश्चचतुरःसुज्ञोद्रव्य
समन्वितः ॥ २२४ ॥ दत्तानितेनदानानिपर्वस्वपिचशक्तितः ॥ अध्यापिताब्राह्मणाश्च गोदानंचतथाकरोत् ॥ २२५ ॥ एकस्मिन्समये
विप्रश्चनृतौचविमोहितः ॥ विनापराधंसाध्वीवैस्वभार्य्याहिप्रताडिता ॥२२६॥ साम्प्रतातेनदुःखेनपापमाऽऽचरितंत्विदम्॥गतोसौपादजः
शीघ्रंयमलोकंततःपरम् ॥ २०७ ॥ षष्टिवर्षसहस्रांतेपुनरागत्यभूतले ॥ खवेदाब्दगतेचैवह्यल्पमृत्युर्भविष्यति ॥२२८॥ चतुःपंचाशदब्दां

भृगु- ५३

तंकथितंप्राणधारणम् ॥ २२९ ॥ ४२ अथकरपीटयोगः ॥ करपीटेनरोजातःपूर्वजन्मनिब्राह्मणः ॥ गौडदेशेऽवसत्सोपिधनीमानीजने श्वरः ॥ २३० ॥ दत्तानितेनदानानिब्राह्मणेभ्यःस्वशक्तितः ॥ सूर्य्यग्रस्तेतथाकाश्यांतुलादानंतथाऽकरोत् ॥ २३१ ॥ प्रयागेचत्रिवेण्या हिमावेस्नातोमृगेरवौ ॥ संप्राप्यभवनंशीघ्रंहर्षगद्गदमानसः ॥ २३२ ॥ बभूवाऽचिरतःसोपिनृपस्याऽग्रेप्रतिष्ठितः ॥ नानाविलासविभवे र्भोगसंपूर्णतांगतः ॥ २३३ ॥एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥ याचकेभ्यःप्रदत्तश्चग्रामस्त्वेकस्तदाऽनघ ॥२३४ ॥ पुनर्गृहीत्वा मोहेनपापमाचरितंत्विदम् ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गेतथाभृशम् ॥ २३५ ॥ पुनर्वैमानुषीयोनौमातृकुक्षेःसमुद्भवः ॥ ३ ॥ ८ । १२ । १७ । २३ । २७ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७६ ॥ २३६ ॥ ४३ अथकमंधयोगः ॥ कश्चित्क्षात्रकुलेपूर्वंनैमिषारण्य सन्निधौ ॥ उग्रदंडःप्रतापीचकुशलःसर्वकर्मणि ॥ २३७ ॥ किंचिद्धर्मार्जनेनिष्ठः शिवभक्तिपरायणः ॥ एकस्मिन्समयेविप्रसहसैन्येन बाहुजः ॥ २३८ ॥ गतस्त्वरिपुरंतेनकृतंयुद्धंपरस्परम् ॥ समरेषुमृतःशूरोगतश्चेंद्रपुरंप्रति ॥२३९॥ बहुवर्षसहस्राणिभुक्त्वास्वर्गभवंफलम् ॥ ततः पुण्यक्षयेजातेपुनरागत्यभूतले ॥ २४० ॥ १ ॥ २ । ३ । ८ । १२ । १५ । २० । २९ । ३३ । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६८॥४४ अथकल्पयोगः ॥ कल्पयोगेचयोजातोगंधर्वः पूर्वजन्मनि ॥ प्रसेनइतिविख्यातइन्द्रस्याऽग्रेप्रतिष्ठितः ॥ २४१॥ एकस्मिन्समयेविप्रह्याज्ञाकारीमरुत्वतः ॥ महाकोपेनतेनैवशापोदत्तःसुदुष्करः ॥ २४२ ॥ विडौजाश्चोक्तवान्कोपाद्भोभवतुराक्षसः ॥ बभूवराक्षसः सोपितथावर्षसहस्रकम् ॥ २४३ ॥ पुनर्जन्मपुनर्मृत्युर्जन्ममृत्युः पुनःपुनः ॥ पुनः प्राप्यमनुष्यत्वंगौरांगः प्रियदर्शनः ॥ ॥ २४४ ॥ प्रथमेद्वितीयेवर्षेज्वरविस्फोटकादयः ॥ सप्ताऽष्टमेचविकलोद्वादशेषोडशेतथा ॥ २४५ ॥ विंशवर्षान्तरेकष्टंसौख्यंतस्यतत

संहि ५१

परम् ॥ सप्तसप्ततिवर्षांतंह्यायुस्तस्यद्विजोत्तम ॥ २४६ ॥ ४५ अथकारेडयोगः ॥ कारेडेचनरःपूर्वंचेंद्रप्रस्थेवसन्नसौ ॥ सर्वेश्वरइति
ख्यातोब्राह्मणः शास्त्रकोविदः ॥२४७ ॥ विद्याविभवसंयुक्तःकापट्याऽऽचरणेरतः ॥ तस्यमित्रंद्विजस्त्वेकस्तस्मिन्ग्रामेऽवसत्तदा ॥२४८॥
तस्यद्रव्याणिसर्वाणिगृहीत्वाविविधैश्छलैः ॥ नदत्तंतेनतत्तस्मैलोभोपहतचेतसा ॥ २४९ ॥ किंचित्कालांतरेचैवसविप्रःपंचतांगतः॥तेन
कर्मानुसारेणप्राप्तस्तुयमसादनम् ॥ २५०॥ तिर्य्यग्योनौसमुत्पत्यपश्चाज्जातोऽधुनानरः ॥ गोधूमाकारवद्देहोदक्षिणांगेप्रचिह्नितः॥२५१॥
१ । ३ । ९ । १३ । २४ । ३५ । ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९२ ॥ ४६ अथकणकयोगः ॥ आसीज्जन्मांतरेचैवस्वर्णकारःसु
शोभनः ॥ देशेहिकीकटेचैवभार्गवोनामविश्रुतः ॥ २५२ ॥ तस्मिन्ग्रामेऽवसत्त्वेकोब्राह्मणःशास्त्रकोविदः ॥ तेनविप्रेणहर्षेणस्वर्णंदत्त्वा
चपुष्कलम् ॥ २५३ ॥ मालार्थेंहिददौतंचस्वर्णकारोगृहीतवान्॥पित्तलस्यददौमालांकिंचित्स्वर्णाऽऽवृतांकृताम्॥२५४ ॥ किंचित्कालांतरे
चैवस्वर्णकारोमृतःपुरा॥कृतांतनरकंगत्वायमदूतैःसपापकृत् ॥२५५॥ बहुवर्षसहस्रांतेमर्कटोपिबभूवह ॥ समृतःकौशिकीतीरेतेनजातोहि
मानुषः ॥ श्यामाऽरुणोदीर्घदेहश्चंचलश्चप्रतापवान् ॥ २५६॥ १ । ३ । ५ । ९ । १३ । २८ वर्षेषुकष्टम्॥परमायुर्वर्षाणि ५७ ॥
४७ अथकिरीटयोगः ॥ किरीटयोगेयोजातःपूर्वजन्मनिबाहुजः ॥ वागडेसचसंजातोनिष्ठुरःकृपणःशठः ॥ २५७ ॥ नृपस्याग्रेप्रतिष्ठश्च
शूरकर्मचमत्कृतिः ॥ एकस्मिन्समयेविप्रनृपकन्यावरांगना ॥ २५८ ॥ यास्तितांप्रतिकृतामैत्रीकौटिल्याच्चतदानघ॥ राजकन्याऽऽहृता
त्पापान्नरकेदारुणेचिरम् ॥ २५९ ॥ स्थित्वावर्षसहस्रंचमृत्युजन्मशतैरपि ॥पश्चाच्चमानुषीयोनौमातृकुक्षेःसमुद्भवः ॥ दंतुरः परमोदारो
वेश्यायांप्रीतिमुद्वहन् ॥ २६० ॥ १ । ४ । ७ । १५ । २२ । २८ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ७९ ॥ ४८ अथकर्द

मयोगः ॥ कर्दमेयोगेयोजातःपूर्वजन्मनिपादजः ॥ कीटदेशेऽवसत्सोपिगौरवेणसमन्वितः॥२६१॥ मनोहरइतिख्यातोनृपसेवापरायणः॥
दत्तानितेनदानानिश्रद्धायुक्तेनचेतसा ॥ २६२ ॥ पर्वस्वपिचतेनैवाऽध्यापिताब्राह्मणाद्विज ॥ यौवनेमृत्युवशगोबभूवपादजस्तदा
॥ २६३ ॥ तत्रदानार्चनंकृत्वाकथांश्रुत्वाविशेषतः ॥ इदंजन्मतृतीयंतुधनधान्यसमन्वितम्॥२६४॥ १ । ३॥ ८ । १४ । २० ।
२६ । २९ । ३६ । ३७ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ४९ अथकलापयोगः ॥ पूर्वजन्मनिचाभीरोमथुरायांवसन्नसौ ॥ हरि
कल्लइतिख्यातःपत्नीपुत्रसमन्वितः ॥ २६५ ॥ गोमहिष्यादिभिस्तस्यसंकुलंतत्रवेश्मच ॥ एकस्मिन्समयेविप्रसाधवःपरमार्थिनः २६६
आगतास्तत्प्रसंगेनवैष्णवोऽभूद्द्विजोत्तम ॥ तैरेवसाकमाभीरोगंगायांगतवांस्तदा ॥ २६७ ॥ गंगामध्येपुरामृत्युर्बभूवद्विजसत्तम ॥
तेनपुण्याऽवशेषेणस्वर्गेगत्वातदाऽनघ ॥ षष्टिवर्षसहस्रांतेपुनरागत्यभूतले ॥ २६८॥ ७ । ९ । २३ । २४ । ३४ ।३८वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ॥ ६१ ॥ ५० अथकनायोगः ॥ कश्चिद्द्विजकुलेपूर्वंबर्बरेदेशकेवसन् ॥ भवानाइतिविख्यातोधर्मशास्त्रविनोदकः ॥२६९॥
पत्नीतस्यमहाभ्रष्टापरपुरुषरताऽधमा ॥ एकस्मिन्समयेविप्रदृष्ट्वास्वीयांसकोपतः ॥ २७० ॥ स्थूलेनलकुटेनैवताडयामासतांद्विज ॥
सानारीतुविषंपीत्वामृताऽसौलौकिकाद्भयात् ॥ २७१ ॥ ब्राह्मणःपंचतांप्राप्तोगतश्चयमशासनम् ॥ पुनःप्राप्तोमनुष्यत्वंगौरांगोदीर्घलोचनः
॥ २७२ ॥ १ । ३ । ८ । १२ । २५ । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १२० ॥ ५१ अथकुंडलयोगः ॥कुंडलेचनरोजातोबाहुजः सुख
संयुतः॥कावेरीनिकटेपूर्वमवसत्परिवारयुक् ॥ २७३ ॥ हरिवंशेतिविख्यातःशिवस्याऽऽराधनेरतः॥ एकदाविपिनेघोरेहत्वापिचमृगान्बहून्
॥ २७४ ॥ न्यवसत्तापसस्तत्रबाणोलग्नस्तुतद्धृदि ॥ तेनपापाऽनुसारेणबाहुजोनरकंगतः ॥ पुनर्जन्मधरापृष्ठेपुत्रदारविवर्जितः ॥ २७५॥

१।१६।२२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि॥६३॥९२॥अथकुंतलयोगः ॥ कुंतलेनगरेपूर्वेकुंतदासोपिपादजः ॥ पत्नीपुत्रभ्रातृयुक्तःसेवकेश्च समन्वितः ॥२७६॥ कृषिवाणिज्यनिरतोधान्यंचविविधंकृतम् ॥ दानंदत्त्वाद्विजानांवैमासिमासिचह्ययने ॥२७७॥ तस्यस्त्रियाकृतंपापं द्रव्यार्थंमारिताऽङ्गना॥तस्याद्रव्याणिसर्वाणिव्ययंकृत्वादिनेदिने ॥ सर्वैर्मिलित्वातद्भुक्तंपापमाचरितंत्विदम् ॥२७८॥ देवान्मृत्युवशंप्राप्तः सगत्वायमशासनम् । कतिवर्षसहस्रांतेपुनरागंत्यभूतले ॥२७९॥ २।६।९।१६।२१।३१। ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ९३ । ९३अथकचारियोगः ॥ पूर्वजन्मनिमनुजोमालवेनगरेवसन् ॥ मान्धाताइतिसंज्ञश्चप्रतापीचजनेश्वरः ॥ २८० ॥ निर्विघ्नंतत्रराज्यं हिकृतंतेनतदाऽनघ ॥ एकस्मिन्समयेविप्रसोमयज्ञंतथाऽकरोत् ॥ २८१ ॥ आहूयब्राह्मणानामाऽऽदरंचकृतवान्भृशम् ॥ एकस्तुस्थविरो विप्रःसभामध्येसमागतः ॥२८२॥ याचितंपुष्कलंद्रव्यंनदत्तंलोभकारणात् ॥ ब्राह्मणश्चातिक्रोधेनह्यग्निकुंडंसमाऽऽविशत् ॥ २८३ ॥ हा हाकारःकृतःसर्वैर्भस्मीभूतश्चतत्क्षणात् ॥ तेनपापेनसहसाश्रियस्तस्यक्षयंगताः ॥२८४ ॥ राज्यभ्रष्टोबभूवाऽसौदारिद्र्येणप्रपीडितः ॥ एवं हियातेवयसिदम्पतीविपिनेमृतौ ॥ इदानींपुत्ररहितोरोगार्त्तोजायतेसदा ॥ २८५ ॥ १।३।६।८।१३।२१।२९।३२।३९। वर्षेषु कष्टम् ॥ परमायुर्वर्षाणि ॥ ६६ ॥ ९४ ॥ अथकचमाख्ययोगः ॥ कचमाख्येसमुत्पत्तिः पूर्वजन्मनिब्राह्मणी ॥ उज्जयिन्यांनगर्य्यांवैक्षि प्रानद्याश्चसन्निधौ ॥ २८६ ॥ पतिपुत्रविहीनासातपश्चर्य्यारतासदा ॥ एकादशांव्रतेरक्ताज्वरशीतेनकंपिता ॥ २८७ ॥ विनष्टासानदी तीरेगताइन्द्रपुरंप्रति ॥ ततःपुण्यक्षयेजातेचागताधरणीतले ॥ २८८ ॥ भव्यकांतिःसुखासीनानानाद्रव्यसमन्विता ॥ १।४।८।१४ १७।२१। वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ २८९ ॥ ७३। ९९ अथकच्छपयोगः ॥ कच्छपेयोगेयोजातः पूर्वजन्मनिभूपतिः ॥ संतो

षइतिविख्यातोबहुस्त्रीपुत्रसंयुतः ॥ २९० ॥ कृत्वादानार्चनंसम्यक्ततस्तीर्थाटनंकृतम ॥ तीर्थेषुचददौदानंसत्पात्रायद्विजायच ॥२९१॥
एकस्मिन्समयेविप्रब्राह्मणस्यहृतंधनम् ॥ दत्त्वाराज्यंस्वपुत्रायजगामगिरिगह्वरे ॥२९२॥ तत्रभाविबलात्पुत्रदृष्टाऽरण्येचशोभना ॥ मृद्वंगी
चारुशोभाढ्यायथेंद्रस्योर्वशीद्विज ॥२९३॥ बलादाकृष्यतांतस्यांकृत्वाशुरतिसंगमम् ॥ स्वराज्येपुनरागत्यपुत्रायद्रुह्यतिस्मसः॥२९४॥
परस्परंकृतंयुद्धंपुत्रश्चैवविपादितः॥ सराजामरणंप्राप्तोगतोऽसौयमशासनम् ॥२९५॥ नानानरकेषुसस्थित्वाबहुवर्षसहस्रकम् ॥ पुनर्वैमा
नुर्षीयोनिंप्रायात्पुण्यप्रभावतः ॥२९६॥ १।४।६।१०।१५।२७। वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ६१ ॥ ५६ अथकल्पलोचनयोगः ॥
कश्चिद्वैश्यकुलेपूर्वं रेवानद्याश्चसन्निधौ ॥ दिवाकरइतिख्यातःपत्नीतस्यमनोरमा ॥ २९७ ॥ कार्त्तिकेमाघेवैशाखेसस्नातोविमलेजले ॥
तुलसीवृंदावलिंकृत्वाःदीपावलिंतथाददत् ॥२९८॥ गीतैर्वाद्यैश्चसततंविष्णवीशस्मरणेरतः ॥ आयुषस्तुसमाप्तित्वात्सवैश्यःपंचतांगतः ॥
॥२९९॥ बभूवबाहुजःसोऽथसमस्तक्षितिमंडले ॥ दत्तानितेनदानानिमलमासेचहायने ॥३०० ॥ मध्येपापंभृशंचक्रेकृतंतेनद्विजोत्तम ॥
मरणंगोमतीतीरेबभूवद्विजसत्तमः ॥ गोधूमाकारवद्देहोदक्षिणांगेप्रचिह्नितः ॥३०१॥ ४ । ८ । १३ । २१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
८१ ॥५७ अथकंदर्पयोगः ॥ कंदर्पयोगेयोजातःपूर्वजन्मनिबाहुजः ॥ द्वारकायांसमुत्पन्नःप्रद्युम्नोनामविश्रुतः ॥३०२ ॥ महाशोभाधि
काराढ्योगम्भीरःशूरविक्रमी ॥ कृत्वापुण्यार्जनंसम्यग्ब्रह्मज्ञानरतःसदा ॥ ३०३ ॥ एवंनिवसतातत्रबह्वब्दाआगतागताः ॥ आयुषस्तुस
माप्तित्वात्समृतःकालचोदितः ॥३०४॥ स्वर्गोऽपवर्गभोगश्चबभूवबहुवार्षिकः ॥ ततोजातेक्षीणपुण्येपुनरागत्यभूतले ॥३०५॥ गौरोरुणो ५५
मध्यदेहःकामवत्कांतिसुन्दरः ॥ अस्मिञ्जन्मनिभवेत्कष्टमेषुवर्षेषुपुत्रक ॥ ३०६ ॥ १ । १२ । १८ । २५ । ३१ । ३७ वर्षेषुकष्टम्॥ परमा

युर्वर्षाणि ९७ ॥ ९८ अथकंतयोगः ॥ कंतयोगेसमुत्पन्नः पूर्वजन्मनिसंकरः ॥ कूर्मवंशेपुराविप्रग्रामक्षेत्रस्यसन्निधौ ॥ ३०७ ॥ रघुदेवः
समाख्यातोराज्यकार्य्यपरायणः ॥ कृत्वादानार्चनंतेनब्राह्मणाश्चप्रतोषिताः ॥ ३०८ ॥ प्रजानांलुंठनंकृत्वाह्यदंड्यादंडिताभृशम् ॥ एकस्मिन्स
मयेविप्रप्रजानांदंडनेरतः ॥ ३०९ ॥ सर्वाःप्रजाश्चविमुखाबभूवुर्द्विजसत्तम ॥ नृपंचघातयामाससंकरोनरकंगतः ॥ ३१० ॥ पुनरागत्यमेदि
दिन्यांपूर्वपुण्यप्रभावतः १।४।८।१३।२४।२९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०३ ॥ ३११ ॥ ९९ अथकांतिघ्नयोगः ॥ आसीज्जन्मनियाना
रीपुष्करेदेशकेतदा ॥ सुंदरीचाऽतिशोभाढ्याचारुकिंजल्कशोभना ॥ ३१२ ॥ श्यामापद्ममुखीभव्यापरपूरुषरतासदा ॥ प्रत्यहंपापभागीच
पतिवंचनतत्परा ॥ ३१३ ॥ एकस्मिन्समयेविप्रस्वपतिंचविषंददौ ॥ समृतस्तेनदुःखेनपापमाचरितंत्विदम् ॥ ३१४ ॥ साम्रतासर्पदंशेन
गतासानरकंतदा ॥ असिपत्रवनंघोरंकृमियोनिशतैरपि ॥ ३१५ ॥ इमांतुमानुषींयोनिंचागत्यभूमिमंडले ॥ १।३।८।२८ वर्षेषुकष्टम् ॥ पर
मायुर्वर्षाणि ७० ॥ ३१६ ॥ ६० अथकंजाननयोगः ॥ कंजाननेपूर्वजनौमोरभंजेतदावसन् ॥ कृष्णदासइतिख्यातः पत्नीतस्यशुभानना
॥ ३१७ ॥ पातिव्रत्यरताचोग्रादानपुण्यपरायणा ॥ पतिस्तस्यामहालोभीकामग्रस्तोपिचंचलः ॥ ३१८ ॥ परापवादनिरतोवेश्यायांप्री
तिमुद्वहन् ॥ समृतःकालसंदष्टःपत्नीजातासतीतदा ॥ पुनर्जन्मपुनर्मृत्युर्जन्ममृत्युःपुनःपुनः ॥ ३१९ ॥ १ । ६ । १० । १३ । १७ । २२
२९ ॥ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७ ॥ ६१ अथकामारियोगः ॥ पूर्वजन्मनिगयाक्षेत्रेब्राह्मणोग्रामयाचकः ॥ भिक्षाटनेसदामग्नःपरिवार
स्यपोषणे ॥ ३२० ॥ एकस्मिन्समयेविप्रस्वगेहेह्यागतोद्विजः ॥ परदेशात्समानीयद्रव्याणिविविधानिच ॥ ३२१ ॥ तेनविप्रगृहस्थेच
द्रव्यंदत्तंसुपुष्कलम् ॥ तस्यद्रव्याणिसर्वाणिव्ययंकृत्वादिनेदिने ॥ ३२२ ॥ आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ नानानरकेषु

स्थित्वानानाजन्मानिचाभवन् ॥ किंचित्पुण्यवशात्पुत्रपुनरागत्यभूतले ॥ ३२३ ॥ १० । २२ । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
६५।६२ अथमर्गयोगः ॥ कश्चिद्वैश्यकुलेपूर्वगोमत्याश्चशुभेतटे ॥ देवराजइतिख्यातोभार्य्यातस्यपतिव्रता ॥३२४ ॥ सुरसेनेतिविख्याता
नानाद्रव्यसमन्विता॥व्यापारेकुशलःसोपिपरदेशेसदारतः॥३२५॥एकस्मिन्समयेविप्रक्रीत्वावस्त्राणिभूरिशः॥ नौकायांस्थाप्यसम्यक्सदे
शेहिककुभेगतः॥३२६॥विक्रीयद्विगुणंकृत्वाहर्षगद्गदमानसः॥ आगत्यकृतवान्पापंदारुणंहिद्विजोत्तम॥३२७॥ तस्मिन्ग्रामेऽवसत्त्वेकोवै
श्यःपरमधार्मिकः ॥ तस्यकन्यामहाशुभ्राबलादाऽऽकार्षितातदा॥३२८॥भयभीतश्चवैश्योऽसौपलायनपरायणः॥ ज्येष्ठांत्यक्त्वाऋतुप्राप्तांक
निष्ठांचरतिंददौ ॥ ३२९ ॥ एवंस्वल्पेगतेवर्षेसवैश्यःपंचतांगतः ॥ पापाच्चनरकंभुक्त्वापुण्यात्पुण्यफलंतथा॥३३०॥ बहुवर्षसहस्रांतेपुनरा
गत्यभूतले ॥ ईषद्गौरोदीर्घदेहश्चिह्नंदक्षिणवामयोः ॥ ३३१ ॥ ४ । ६ । ७ । १२ । १७ । २२ । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
७४ ॥ ६३ अथकेदलीयोगः ॥ आसीज्जन्मांतरेचैवकाकुत्स्थेनगरेवसन् ॥ ब्राह्मणःशास्त्रविज्ञश्चशिवस्यस्मरणेरतः ॥३३२॥ पाखंडाचर
णेधूर्तश्चात्मार्थेविनियोगिकः ॥ दत्तानितेनदानानिगोभूम्यश्वहिरण्यकम् ॥३३३॥ एकस्मिन्समयेविप्रमिथ्यावादंतथाऽकरोत्॥ चातुर्य्ये
णतदाविप्रजितंतस्यधनंबलात् ॥ ३३४ ॥ धूर्तविप्रहृतंद्रव्यंबहुवर्षगतागतैः ॥ पापाच्चनरकेगत्वातिर्यग्योनिंतथोत्तरे ॥ पश्चाच्चमानुषीयो
नौमातृकुलेःसमुद्भवः ॥ ३३५ ॥ २ ।५ । ७। १२ । १७ । २३ । २९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि॥६९॥६४अथकमनीययोगः॥
कश्चिद्राजकुलेपूर्वसागरस्याऽतिसन्निधौ ॥ सर्वसौंदर्य्ययुक्तस्तुलावण्योऽमृतभाषकः ॥३३६॥ यौवनेचतदाविप्रदानंदत्त्वाद्विजायच॥प्रजा
[illegible] ॥३३७॥ कालसर्पेणनिहतोनृपपुत्रोमृतस्तदा ॥ गतोऽसौभास्करंलोकंभुक्त्वाभोगांश्चशाश्वतान्॥३३८॥

पुनरागत्यमेदिन्यांकिंचित्पुण्यप्रभावतः ॥ ३ । ६ । ७ । १५ । २१ । २८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९९ ॥ ६५ अथकांचीयोगः ॥ कांचीयोगेनरोजातोविष्णुकांचींवसन्पुरा ॥ शिवरामइतिख्यातोबाहुजःकृषिकर्मकृत ॥३३९॥ एकस्मिन्समयेक्षिप्सीमावादस्तदा ॥ घातितोनोत्रपुत्रश्चकुंतलेपादघाततः ॥ समृतस्तेनदुःखेनदैवात्सोपिमृतस्तदा ॥३४०॥ पुनरागत्यमेदिन्यांबहुकष्टसमन्वितः ॥ १ । ४ । १२ । १७ । २५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ १०० ॥ ६६ अथकांतियोगः ॥ कश्चित्तुबाहुजश्चाथमैथिलेनगरेवसन् ॥ किंचिद्भूमिपतिस्तत्रचोग्रदंडःप्रतापवान् ॥ ३४१ ॥ विमोहेनतदाविप्रकृतंकर्मजुगुप्सितम् ॥ मार्गाऽवरोधनंकृत्वाचौरकर्मणितत्परः ॥ परनिंदाऽपवादश्चपरहिंसारतःसदा ॥ ३४२ ॥ एकस्मिन्समयेविप्रसाधवस्तत्रचागताः ॥ साधूनांचप्रसंगेनकथांश्रुत्वाविशेषतः ॥ पूर्वकर्मपरित्यक्त्वासत्कर्मसुतथारतः ॥ ३४३ ॥ गंगामध्येमृतःसोपिगंधर्वेनगरेगतः ॥ कतिवर्षसहस्रांतेपुनरागत्यभूतले ॥ (२४३)॥ १ । ३ । ९ । १३ । १८ । २१ । २७ । २६ ॥ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ६७ अथकुमारिकायोगः ॥ पूर्वजन्मनिशूद्रस्तु विप्रभक्तिपरोदृढः ॥ देशेहिकौंकणेचैवनिवसन्परिवारयुक् ॥ ३४४ ॥ महोद्यमीकार्य्यकर्तासत्यव्रतपरायणः ॥ तीर्थाऽवगाहनंकृत्वाशिवस्योद्यापनंतथा॥ ३४५ ॥एकस्मिन्समयेविप्रसर्वस्वंविधिनाऽददात् ॥ सत्पात्रायगृहस्थायब्राह्मणायकुटुम्बिने ॥ ३४६ ॥ तेनपुण्यप्रभावेण स्वर्गंगत्वाचपादजः ॥ दिव्यवर्षसहस्रांतेपुनरागत्यभूतले ॥ प्रशस्तमधुराऽऽलापीधनधान्यसमृद्धिमान् ॥ ३४७ ॥ १।४।९।१६।२१।२८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९७॥ ६८ अथकल्लोलयोगः ॥ कल्लोलयोगेयोजातोबंदीचपूर्वजन्मनि ॥ काव्यकर्ताचमत्कारीयाचनाःकृतवान्भृशम् ॥३४८॥ देशेगुर्जरकेचैवन्यवसत्पूर्वजन्मनि॥तत्कन्यायौवनवतीवरयोग्याबभूवह ॥३४९॥ उद्वाहश्चकृतस्तस्यामहितेनविमो

हतः ॥कालाचैवविषंपीत्वामृतासाकामपीडिता ॥ सबंदीनरकंगत्वाबहुजन्मानिचाऽभवात् ॥ २५० ॥ ३ । ८ । १२ । १७ । २७ वर्षेषुकष्टम्
परमायुर्वर्षाणि ६५ ॥ ६९ अथकामाख्ययोगः ॥ आसीज्जन्मांतरेचैवब्राह्मणःशास्त्रनिंदकः ॥ वेदानांब्राह्मणानांचाभक्तःस्त्रीष्वतिलम्पटः ॥
॥ २५१ ॥ असत्कर्मसमर्थःस्यात्कुमार्गीपापराशिकृत् ॥ एकस्मिन्समयेविप्रब्राह्मणस्यप्रसंगतः ॥ २५२ ॥ एकादशीव्रतंकृत्वादैवयोगेन
वैमृतः ॥ तेनपुण्यप्रभावेणस्वर्गंगत्वाचब्राह्मणः ॥ २५३ ॥ चंद्रलोकेनंदनेचवनेस्थित्वाविशेषतः ॥ ततःपुण्यक्षयेजातेपुनरागत्यभूतले
॥ २५४ ॥ ७ । १२ । २१ । २७ । वर्षेषुअल्पमृत्युः ॥ परमायुर्वर्षाणि ६२ ॥ ७० अथकामरूपयोगः ॥ आसीज्जन्मांतरेचैवबाहुजोद्रा
विडेऽवसत् ॥ केवलेतिसमाख्यातोधनधान्यसमृद्धिमान् ॥ २५५ ॥ कृत्वापुण्यार्जनंदानंतीर्थयात्रांतथानघ ॥ एकस्मिन्समयेविप्रकृतं
कर्माऽतिदारुणम् ॥ २५६ ॥ अण्डंदत्तवतीचटिकातस्यहर्म्येद्विजोत्तम ॥ उद्घाटितंहठात्तेनविलयंचतथाकरोत् ॥ २५७ ॥ आयुषस्तुस
मास्तित्वाद्बाहुजःपंचतांगतः ॥ पुनरागत्यमेदिन्यांपुत्रसंततिवर्जितः ॥ २५८ ॥ १ । २ । ४ । ७ । ९ । १९ । २५ वर्षेषुकष्टम् ॥ परमा
युर्वर्षाणि ६८ ॥ ७१ अथकोमलायोगः ॥ चोलदेशेवसत्येकःशूद्रःपरमधार्मिकः ॥ शिवालयोविप्रगेहास्तथाशालागवामपि ॥२५९ ॥
आरामाश्चसरःकूपाःकारिताःस्वर्गहेतवे ॥ तेनपुण्यप्रभावेणस्वर्गंगत्वाचपादजः ॥ २६० ॥ षष्टिवर्षसहस्राणिभुक्त्वास्वर्गभवंफलम् ॥ ततः
पुण्यक्षयेजातेमर्त्यलोकेसमागतः ॥ २६१ ॥ सुन्दरःकमनीयश्चभव्यमूर्तिर्दयार्द्रकः ॥ सर्वसम्पद्युतोमानीशास्त्राऽभ्यासीकृपापरः॥२६२॥
[illegible]मेवर्षेचतुर्थेह्यष्टमेपिवा ॥ द्वादशेषोडशेवर्षेपीडाभवतिदारुणा ॥ चतुःषष्टिश्चवर्षाणिकथितंप्राणधारणम् ॥ २६३ ॥ ७२
[illegible]यनीयोगः ॥ कात्यायन्यांनरोजातःपूर्वजन्मनिबाहुजः ॥ विपाशानिकटेचैवन्यवसत्पूर्वजन्मनि ॥२६४॥ साहसीशूरकर्माच ५

त्ततोभवभवानपि ॥ सभामान्योगुणग्राहीसंतोषेणसदावृतः ॥ ३६५ ॥ एकस्मिन्समयेविप्रह्यरण्येचतदागतः ॥ मृगोचरतिसंसक्तोबा
नेनचताडितो ॥ ३६६ ॥ द्वौमृतौतत्रभोविप्रपापंमाचरितंत्विदम् ॥ समृत्वाबाहुजोविप्रगतोऽसौयमशासनम् ॥ कतिवर्षसहस्रांतेचा
गतोवरणीतले ॥ ३६७ ॥ १ । २ । ४ । ६ । ९ । ११ । १७ । २२।२७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६३॥७२ अथकर्कटाख्ययोगः ॥
कर्कटाख्येनरोजातःपूर्वजन्मनिगुर्जरः ॥ शतद्रूनिकटेचैवपरिवारेणसंयुतः॥३६८॥ पितातस्यमहाराजशूद्रकर्मक्रियान्वितः॥दत्तानितेनदा
नानिपर्वस्वपिचशक्तितः ॥३६९॥ एकस्मिन्समयेविप्राराज्यलुब्धेनतेनच ॥ खड्गेननिहतोविप्रजनकश्चतदाऽनघ ॥३७०॥ बहुवर्षेष्वतीते
भुक्त्वाराज्यंनिरंतरम् ॥ मृतोनरकमापन्नःशतजन्मविहंगमः ॥ पश्चान्मानुष्यमापन्नःकन्यापुत्रविवर्जितः॥ ३७१॥१ । ४।८।१० । १२ ।
१७ । २० । २५ । २९ । ३२ । ३६ वर्षेषुकष्टम् ॥ ज्वरादिवैमनस्यार्शोरोगाः ॥ परमायुर्वर्षाणि ६९ ॥ ७४॥ अथकोदंडयोगः ॥
कश्चिद्द्विजकुलेपूर्वंभिक्षुकारण्यसन्निधौ ॥ आश्रयेतिसमाख्यातःपत्नीपुत्रविवर्जितः ॥ ३७२ ॥ तपश्चर्य्यारतोनित्यंब्रह्मचर्य्यरतःसदा ॥
परब्रह्मसमभ्यर्च्ययोगाभ्यासेचतत्परः ॥ ३७३ ॥ एकदाविपिनेरम्येकौतुकीचविचेष्टितः ॥ एकातुस्वैरिणीभव्यायथाकामंतुचागता
॥ ३७४ ॥ शोषणोन्मादनंकृत्वाकटाक्षैश्चप्रताडिता ॥ निशम्यब्राह्मणस्तस्यांकामलोभेननिश्चितः ॥ ३७५ ॥ तपश्चर्य्यांपरित्यज्यभ
क्तश्चैर्व्यसनेरतः ॥ समृत्वातत्रभोविप्रबभूवमर्कटस्तदा ॥ हंसोभूत्वामानसेचमानुषत्वमिहागतः॥३७६॥२ । ६ । ९।१७ । २७ । ३७ ॥
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५८॥ ७५ अथकुलपाशकयोगः ॥ कुलपाशकेनरोजातःपर्वतेपूर्वजन्मनि ॥ दयाकरःसमाख्यातःपत्नीपुत्रस
मन्वितः ॥ ३७७ ॥ कृषिवाणिज्यनिरतःपशुहिंसापरायणः॥ एकदामकरेमाघेसस्नातोहिद्विजोत्तमः॥३७८॥तेनपुण्यप्रभावेणस्वर्गंगत्वा

तवानच ॥ पुनरागत्यमेदिन्यांपूर्वपुण्यप्रभावतः ॥ ३७९ ॥ १ । ३ । ६।१०।१३।१६।२०।२५।२७।३०।३५।३९॥वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७७ ॥ ७६ अथकदम्बयोगः ॥ पूर्वजन्मनिविप्रोसौजालंधरेवसन्नपि ॥ चिंतदेवइतिख्यातःसर्वविद्याविशारदः ॥ ३८० ॥ दंभद्वेषेणवैतेनच्छात्राअध्यापिताश्चिरम् ॥ सुतर्काणामास्वादीचतर्कशास्त्रपरायणः ॥३८१ ॥ एकस्मिन्समयेविप्रकृतंकर्मजुगुप्सितम् ॥ चंद्रग्रस्तेमहादानंगृहीतंलोभहेतुना ॥ ३८२ ॥ तेनपापानुसारेणनरकंभुक्त्वासुदारुणम्॥अशीतिवर्षसहस्रांतेचागतोधरणीतले ॥३८३॥ ४ । १५ ।२० । २७ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ । ७७ अथकोकनादयोगः ॥कोकनादेनरःकश्चिदांध्रदेशेवसन्नपि ॥ जनेश्वरइतिख्यातोबाहुजोबलविक्रमी ॥३८४॥ कपालिकात्कृताप्रीतिर्बहुवर्षगतागतेः ॥ नानाविलासविभवैःसुखानंदेनसंयुतः॥३८५॥ अगम्यागमनंकृत्वाह्यभक्ष्यंभक्षितंतदा ॥ अमेध्यंस्वीकृतंविप्रापेयंपीतंतथाभृशम् ॥३८६॥ एवंनिवसतस्तत्रबहुवर्षगतागतेः॥ आयुषस्तुसमाप्तित्वात्संप्राप्तवानयममंदिरम् ॥ पुनरागत्यमेदिन्यांकिंचित्पुण्यप्रभावतः ॥ ३८७ ॥ १ । २ । ४ । ६ । ११ । १५।२१।२७वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०७ ॥ ७८ अथकृपायोगः ॥ आसीत्पूर्वमहाभागविदर्भेषुतदावसन् ॥ माधवेतिसमाख्यातःपत्नीतस्यवरांगना ॥ ३८८ ॥ राजकार्य्यात्ययंकृत्वास्वभार्य्यावशगःसदा ॥ दैवयोगेनभोविप्रपत्नीतस्यमृतापुरा ॥३८९॥ तस्याःशोकेनविकलःसर्वस्वंब्राह्मणेददौ ॥ राज्यंत्यक्त्वाश्रियंत्यक्त्वागतोऽसौगहनेवने ॥ ३९० ॥ हाप्रियेइतिमंत्रेणजप्त्वाहुत्वादिवानिशम् ॥ समृत्वाचातिशोकेनगतश्चेंद्रपुरंतदा॥ तत्र[illegible]जातेपुनरागत्यभूतले ॥ ३९१ ॥ १ । ३ । ८ । ११ । १७ । २२ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ७९ अथकेशयोगः ॥ कालिंजरेगिरौख्यातपस्वीपूर्वजन्मनि ॥ निर्धूतःसत्यवादीचयशस्वीचजितेंद्रियः ॥ ३९२ ॥ एकस्मिन्समये

विप्रमयागेमकरेगतः ॥ संस्नातोनियतोभान्त्रौमाससेकंनिरंतरम् ॥ ३९३ ॥ तत्रभाविबलात्पुत्रहष्टातेनवरांगना ॥ बलात्ताऽऽकार्षिता
तस्याःकृत्वासुरतिसंगमम् ॥ ३९४ ॥ तस्याःपतिर्ददौतस्मैतापसायसुहर्षितः ॥ एवंस्वल्पेगतेवर्षेतापसोमरणंगतः ॥३९५॥ पतन्नघोषः
पातालंसर्पयोनिर्बभूवह ॥ पुनरागत्यमेदिन्यांमानुषींयोनिमागतः ॥ ३९६ ॥ १ । १० । १६ । २२ । २६ । वर्षेषुकष्टम् ॥ परमायुर्व
र्षाणि ॥ ७७ ॥ ८० अथकुमंत्रयोगः ॥कश्चिद्द्विजकुलेपूर्वंवाराणस्याश्चदक्षिणे ॥ शिवनेतिसमाख्यातःपत्नीतस्यगुणाऽऽकरी ॥३९७॥
समंत्रविदऽथोभूत्वाकुमंत्रोपदेशनेरतः ॥ पर्वस्वपिचतेनैवाऽध्यापिताब्राह्मणाःशुभाः ॥३९८॥ पितृश्राद्धाऽनुरक्तश्चमासिमासिचहायने ॥
एवंहिनिवसंस्तत्रबहुकालगतागतैः ॥ ३९९ ॥ आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्यफलंतथा॥
पुनरागत्यमेदिन्यांसर्वांगेव्रणपीडितः ॥ ४०० ॥ १ । ४ । ८ । १२ । १८ । २३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०९ ॥ ८१ अथकट
कयोगः ॥ आसीज्जन्मांतरेचैवपादजस्यकुलेतदा ॥ आरोहणःसमाख्यातःपत्नीपुत्रसमन्वितः ॥ ४०१ ॥ देशेकारूषकेचैवन्यवसत्सर्व
सेवकः ॥ एकस्मिन्समयेविप्रतत्रभाविबलादपि ॥ ४०२ ॥ समागतानांसाधूनांपरिचर्य्यांतथाकरोत् ॥ साधूनांचप्रसंगेनतीर्थावगाहने
रतः ॥ ४०३ ॥ हरिद्वारेमृतःसोपिगन्धर्वनगरेगतः ॥ पुनरागत्यमेदिन्यांपूर्वपुण्यप्रभावतः ॥४०४ ॥ शुक्लांगश्चशुक्लमनाविष्णुभक्तिपरा
यणः ॥ ४०५ ॥ १ । ४ । ६ । १७ । २७ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८३ ॥ ८२ अथकर्बूरयोगः ॥ कर्बूरयोगेनरःकश्चिद्वंग
देशेवसन्सुधीः ॥ पार्वत्याःपूजनेनिष्ठोगुरुदेवार्चनेतथा ॥ ४०६ ॥ तीर्थाटनंकृतंसम्यक्छ्राद्धदानमथाऽकरोत् ॥ एकस्मिन्समयेविप्रकृत
स्तेनमहोत्सवः ॥ ४०७ ॥ ब्राह्मणाःपूजिताःसम्यग्गोदानंचतथाऽकरोत् ॥ पितृसेवांपरित्यज्यभक्ताद्यैर्व्यसनेरतः ॥ ४०८ ॥ तेनपापा

ऽनुसारेणश्रियस्तस्यक्षयंगताः ॥पापाच्चनरकंगत्वापुण्यात्स्वर्गंतथाऽनघ ॥ बहुवर्षसहस्रांतेपुनरागत्यभूतले ॥४०९॥ १ । २ । ८ । ११
२० । २८ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ६९ ॥ ८३ अथकोटयोगः ॥ कोटयोगेनरोजातःपूर्वंचन्मनिपादजः ॥ वनाद्रिनि
कटेवासोमृगमांसेनजीवति ॥ ४१० ॥ प्ररोहणःसमाख्यातःपशुहिंसनतत्परः ॥ एकदाविपिनेरम्येदावाग्निर्ज्वलितोह्यभूत् ॥ ४११ ॥
ऋषीणांभव्यगेहाश्चभस्मीभूतास्तदानघ ॥ आयुषस्तुसमाप्तित्वान्ममारपादजोवने ॥४१२॥ महाघोरेचनरकेयमदूतायमाऽऽज्ञया ॥ क्षिप्त
वन्तोबहूनब्दांस्ततोजातःसमर्कटः ॥ ४१३ ॥ पशुयोनिशतंभुक्त्वामानुषत्वंगतोधुना ॥ वंशवृद्धिर्नजायेतपूर्वपापानुसारतः ॥ ४१४ ॥
१ । २० । ३१ वर्षेषुमहाकष्टम् ॥ परमायुर्वर्षाणि ॥ ९१ ॥ ८४ अथकंसयोगः ॥ कंसयोगेचयोजातःपूर्वजन्मनिदशारणे ॥ धन
धान्यसमृद्धस्तुपापकर्मपरायणः ॥४१५॥ भ्रातृपत्नीसुशीलाचसुन्दरीचाऽतिशोभना ॥ बलादाकर्षितातस्याःकृतःसुरतिसंगमः ४१६॥
पापमाचरितंतेनबहुवर्षगतागतैः ॥ आयुषस्तुसमाप्तित्वात्समृतःकालनोदितः ॥ ४१७ ॥ सतेनकर्मणायुक्तःप्राप्तस्तुयमशासनम् ॥ ना
नायोनिषुचोत्पत्यभूतलंपुनरागतः ॥ ४१८ ॥ १ । ३ । ५ । ८ । १२ । १६ । २० । २३ । २७ । ३२ । ३७ वर्षेषुकष्टम् ॥ परमा
युर्वर्षाणि ७१ ॥ ८५ अथकलापिकयोगः ॥ योगेकलापिकेजातोनरःपूर्वंहिब्राह्मणः ॥ देशेकलिंगेन्यवसद्धनधान्यसमन्वितः ॥ ४१९ ॥
विद्याभ्यासस्तथाऽथदेवतानांचपूजकः ॥ लुब्धेनत्वेकदाविप्रकृतंकर्माऽतिदारुणम् ॥ ४२० ॥ देवद्रव्यंहृतंतेनतथाचभूषणानिवै ॥
कालेनकालेगतेविप्रोमृत्वायातोयमालयम् ॥ ४२१ ॥ तत्रभुक्त्वापुण्यफलंतथाहिदुष्कृतस्यवै ॥ यातोऽधुनामर्त्यलोकंपुत्रदारादि
संयुतः ॥ ४२२ ॥ ६ । ९ । ११ । १५ । २५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ७५ ॥ ८६ ॥ अथकोपरीयोगः ॥ कोपरीयोगे

जातोयोगौडदेशेऽवसत्पुरा ॥ बाहुजोभीमसेनश्चविख्यातःसर्वदाभुवि ॥ ४२३ ॥ एकस्मिन्समयेराजामृगयार्थंवनंगतः ॥ हतातत्रसगर्भा
हरिणीनिर्दयालुना ॥ ४२४ ॥ महतातेनपापेनशीघ्रंयातोमृतिंततः ॥ यमालयेतुतत्पापंभुक्त्वाजातोऽधुनाभुवि ॥ ४२५ ॥ तत्पापेन
मृतातस्ययोषाचापिसगर्भिणी ॥ हाटकस्यमृगींदत्त्वासुखंचापिभविष्यति ॥ ४२६ ॥ १० । २० । २५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
८० ॥ ८७ अथकुण्डनयोगः ॥ कुंडनयोगेचंयोजातः पूर्वजन्मनिकिरातकः ॥ कौशलेशइतिख्यातःपत्नीतस्यसुधाकरी ॥४२७॥ पिता
तस्यमहाराजश्चक्रवर्तीदयाकरः ॥ कौशलेशोभ्रष्टमतिःपरस्त्रीरतिलम्पटः ॥ ४२८ ॥ प्रजाश्चव्याकुलीकृत्वाददौदंडंदिनेदिने ॥ महाराजे
नपुत्रःसभवनान्निष्कासितोझटिति ॥ ४२९ ॥ वनाऽद्रिनिकटेविप्रसमृतःपापभाक्खलः ॥ यमलोकेऽभवत्प्राप्तस्ततश्चनरकेगतः ॥ पश्चा
न्मानुष्यमापन्नःकुत्सितःपुत्रवर्जितः ॥ ४३० ॥ १ । ८ । १४ । २० । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ ६१ ॥ ८८ अथकंसारि
योगः ॥ कंसारियोगेजातोयोवङ्गदेशेऽवसत्पुरा ॥ कृष्णदत्तइतिख्यातोदयालुः शास्त्रकोविदः ॥ काव्यकर्ताधनीमानीचंचलश्चतुरः
सुधीः ॥ शिवस्यस्थापनंकृत्वातथारामस्यकारितम् ॥ ४३१ ॥ वृषोत्सर्गंजलोत्सर्गंकृत्वासचविधनतः ॥ एवंहिन्यवसत्तत्रबहुवर्षगता
गतेः ॥ ४३२ ॥ आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ पत्नीतस्यसतीजातास्वर्गलोकमुभौगतौ ॥ ततःपुण्यक्षयेजातेपुनरागत्य
भूतले ॥ ४३३ ॥ १ । ३ । ७ । ९ । १३ । १७ । २० । २३ । २८ । ३२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥८९॥ अथकैरातयोगः॥
कैरातयोगेयोजातःपूर्वजन्मनिपादजः ॥ प्रभुदासइतिख्यातःपत्नीतस्यमहेश्वरी ॥४३४॥ कृषिकर्मोद्यमेमभ्रोधान्यंचबहुसंचितम् ॥ एक
स्मिन्समयेविप्रसाधवस्तत्रचागताः ॥ ४३५ ॥ प्रावृट्कालेचतेनैवबहुशोह्याहृताश्चते ॥ स्वगृहेस्थापयित्वाचपरिचर्य्यामथाकरोत् ॥

॥ ४३६ ॥ आमतायांचशरदिदत्त्वातेनप्रहर्षिताः ॥ वस्त्राणिचाथपात्राणिपुस्तकानिबहून्यपि ॥ ४३७ ॥ एवंहिन्यवसत्तत्रबहुवर्षगता
गतैः ॥ आयुषस्तुसमाप्तित्वात्सम्मृतः कालचोदितः ॥ ४३८ ॥ पुण्यात्स्वर्गेंगतःसोथपुनरागत्यभूतले ॥ सर्वसौख्ययुतोनित्यंत्रिंशद्वर्षे
तिकष्टितः ॥ सप्तत्यब्दोत्तरेविप्रजीवनंतस्यदुर्लभम् ॥ ४३९ ॥ ९० अथकरजाम्बुकयोगः ॥ कश्चित्तुबाहुजःपूर्वकर्मनाशानदीतटे॥धन
धान्यसमृद्धस्तुबहुग्रामाधिपस्तदा ॥ ४४० ॥ नानापुण्यार्जनंकृत्वादेवीचपूजिताभृशम् ॥ एकस्मिन्समयेविप्रमदालीढोबभूवह॥४४१॥
भ्रातृकन्याकिशोरीचसुन्दरीचाऽतिशोभना ॥ बलादाकर्षितातेनपुनश्चरमणंकृतम् ॥४४२ ॥ साचहालाहलंपीत्वामृताचलोकशंकया ॥
एवंकालेव्यतीतेतुबाहुजः पंचतांगतः ॥४४३॥ सतेनकर्मणायुक्तः प्राप्तस्तुयमशासनम् ॥ तिर्य्यग्योनिशतंभुक्त्वामानुषत्वंगतोऽधुना ॥
॥४४४॥३।८।१५।२१।३१।३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०५ ॥९१ अथकमालयोगः ॥ आसीज्जन्मांतरेचैवपैठनेनगरेवसन् ॥
गांभीर्य्येतिसमाख्यातःपत्नीपुत्रविवर्जितः ॥४४५॥ शूरत्वेचसदामग्नोगीतवाद्यपरायणः ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥
॥४४६॥नृपानुकम्पयाविप्रगतस्त्वारिपुरांतिके ॥ कृत्वायुद्धंविशेषेणसंग्रामेचतदामृतः॥४४७॥ इंद्रलोकंतदागत्वानंदनेचवनेशुभे ॥ षष्टि
वर्षसहस्रांतेपुनरागत्यभूतले ॥ सर्वसम्पद्युतोमानीपत्नीपुत्रसमन्वितः ॥४४८ ॥ १।४।८।१३।१९।२५।३०। ३७ वर्षेषुकष्टम् ॥ परमायु
र्वर्षाणि ॥ ९२ ॥ ९२ अथकालयोगः ॥ कालयोगेनरोजातः कर्णाटेपूर्वजन्मनि ॥ गंधर्वेतिसमाख्यातोब्राह्मणः शास्त्रवर्जितः ॥४४९॥
श्रद्धाद्यानार्चनंकृत्वागयाश्राद्धमथाऽकरोत ॥ काम्यश्राद्धंचकृतवांस्तत्रैवाल्पविधानतः ॥ ४५० ॥ संप्राप्यभवनंस्वीयंकृतवान्कर्म
दारुणम ॥ [illegible]ब्राह्मणस्यच ॥ ४५१ ॥ वैरभावेनभोविप्रकृतंकर्मजुगुप्सितम् ॥ एवंचन्यवसत्तत्रबहुवर्षगता

गतेः ॥ ४५२ ॥ आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ सतेनकर्मणायुक्तःप्राप्तस्तुयमशासनम् ॥ बहुवर्षसहस्रांतेपुनराग
त्यभूतले ॥ ४५३ ॥ १ । ४ । ६ । १२ । १७ । २२ । २६ । ३६ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ । ९३ अथकंकयोगः ॥ कंक
योगेनरोजातःसर्वपूज्योधनाधिपः ॥ ब्राह्मणःकौंकणेदेशोशिवभक्तिपरायणः ॥ ४५४ ॥ एकस्मिन्समयेविप्रगुरुस्तस्यसमागतः ॥ कृतवा
न्नाऽऽदरंतस्यपापिष्ठःपशुबुद्धिकः ॥ ४५५ ॥ गुरुश्चविमुखोयातःशापंदत्त्वासुदारुणम् ॥ आसप्तजन्मत्वंदुष्टस्ववंशपतितोभव ॥४५६॥ एवं
हिन्यवसत्तत्रबहुवर्षगतागतेः ॥ पुनःसपंचतांप्राप्तोगतोहियमशासनम् ॥४५७॥ पुनर्जन्मपुनर्मृत्युर्जन्ममृत्युःपुनःपुनः ॥ इदंतुसप्तमंजन्म
पुत्रदारविवार्जितम् ॥ ४५८ ॥ द्वितीयेसप्तमेवर्षेदशमेकादशेतथा ॥ षोडशेसप्तविंशेचवर्षेकष्टेनकष्टितः ॥ चतुःषष्टिस्तुवर्षाणिजीवनंप्रा
णिनस्त्विह ॥ ४५९ ॥ ९४ अथकादम्नयोगः ॥ क्षात्रेकुलेसमुत्पन्नःपूर्वजन्मनिमानद ॥ धनधान्यसमृद्धोऽपिदेशेस्त्रीराजकेद्विज ॥४६०॥
मेहादिपीडितोऽत्यंतंकृशांगःपांडुरद्युतिः ॥ ऊर्द्धवातादिजापीडाबाल्येस्याद्ग्रहणीगदः ॥४६१॥ तस्यभार्यासदाचारासुस्नेहाभर्तृभक्तितः ॥
रक्तस्रावादिनापीडाजायतेचोदराऽनिलः ॥ ४६२ ॥ तस्याश्चोदरतोगर्भपातंकुर्य्याच्चवैतदा ॥ द्वितीये तुर्येमासेचपंचमेसप्तमेतथा ॥४६३॥
केनकर्मविपाकेनगर्भोनस्थिरतांव्रजेत् ॥ भृगुरुवाच ॥ शृणुशुक्रप्रवक्ष्यामिपूर्वजन्मनियत्कृतम् ॥४६४॥ व्यभिचारभयाद्दापितयागर्भश्चपा
तितः ॥ अपरंचकृतंकर्मव्यभिचारोयतस्ततः ॥४६५॥ नानाद्रव्याऽपहर्त्रीचकुलेवाक्यप्रलंघनात् ॥ भर्तुश्चचौर्यवृत्तिःस्यात्सत्संगस्यतुवर्ज
नात् ॥ ४६६ ॥ तेनदिष्टेनयद्द्रव्यंहृतंतस्करबुद्धिना ॥ भुक्तंताभ्यांद्विजश्रेष्ठब्राह्मणस्यहृतंधनम् ॥ ४६७ ॥ कालेनतद्धनंभुक्त्वापीडितोद्दा
रुणग्रहैः ॥ याचनाबहुधाप्राप्तापश्चान्मानुष्यमाप्नुयात् ॥ ४६८ ॥ किंचित्पुण्यप्रभावेणचाऽत्रेदंजन्मवैभुवि ॥ अस्मिञ्जन्मनितृतीयेचगर्भे

पातोऽभिजायते ॥ उभाभ्यांचकृतंकर्मभुज्यतेजन्मजन्मनि॥४६९॥१।५।११।१८।२२।२७।३५वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९२ ॥
९५ अथकोडनयोगः ॥ शुक्रउवाच ॥ भगवन्देवदेवेशश्रुतमेतन्महाद्भुतम् ॥ सहानुगामिन्यानार्य्यागतिंमेब्रूहिचेश्वर॥४७०॥भृगुरुवाच॥
मृतंयदाहिभर्त्तारंयाविशेच्चहुताशनम् ॥ तेनसार्द्धंतुसानारीमुख्यत्वेसहगामिनी॥४७१॥धर्मात्पतिव्रतापूर्वंभवेन्मोक्षगतिर्द्वयोः ॥ अथैषाभू
न्महासाध्वीजाताब्रह्मकुलेधुना ॥ ४७२ ॥ ब्राह्मणीतपसायुक्तासदाभक्तिपरायणा ॥ दानशीलरताचापिपुण्यकर्मान्वितासती॥ ४७३ ॥
दृष्टापत्यौमृतेयातुदिव्याभरणभूषिता ॥ प्राप्ताऽग्नौविधिनाविप्रकृत्वापूजांहरेर्भृशम् ॥ ४७४ ॥ सागतायमराजस्यस्कंधेदत्त्वापदाम्बुजे ॥
वैकुंठेयोगतःश्रेष्ठभूयोऽसौननिवर्तते ॥ ४७५ ॥ १ । ८ । १० । २० । २५ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७७ ॥९६अथकर्कन्धुयोगः॥
कर्कंधुयोगेयोजातोयशस्वीपूर्वजन्मनि॥काश्याहिचोत्तरेभागेब्राह्मणस्यकुलेतदा॥४७६ ॥कृषिकर्मानुरक्तश्चभव्यकांतिर्दयापरः ॥ पत्नी
तस्यमहाभ्रष्टापापकर्मरतासदा ॥ ४७७ ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥ सविप्रस्तीर्थकेगत्वापरिवारेणसंयुतः ॥ ४७८ ॥
व्यभिचारःकृतस्तत्रप्रयागेद्विजसत्तम ॥ एवंनिवसतस्तत्रबहुवर्षगतागतैः ॥ ४७९ ॥ पत्नीत्यागस्तुनकृतोगोपितंघस्मरंद्विज ॥ सविप्रः
पंचतांप्राप्तोभुक्त्वाभोगांश्चशाश्वतान् ॥ मर्त्यलोकेसमागत्यनानादुःखसमन्वितः ॥ ४८० ॥ १ । ३ । ८ । १३ । १६ ॥ २० ॥
२७ । ३० । ३४ । ४० । वर्षेषुकष्टम् । परमायुर्वर्षाणि ॥ ६९ । ९७ अथकंजकारूषयोगः॥ दशार्णवेबाहुजःपूर्वजन्मनृसिंहदेवाख्यइतिप्र
सिद्धः ॥ सत्साहसीधर्मकृपाविवेकीप्रपंचत्यागीगुणिनांगुणज्ञः ॥ ४८१ ॥ परोपकर्त्ताप्रचुरंधनाढ्योनिर्द्वेषविद्यापरमःपवित्रः॥४८२ ॥
[illegible]पंचतांप्राप्तो[illegible]तदाऽनघ ॥ ४८३ ॥ दिव्यवर्षसहस्राणिस्वर्गभोगीबभूवह ॥ संजातोब्राह्मणःसोऽपिअंतर्वेद्योद्विजालये ॥

॥४८५॥१।३।८।१२।१५।२०।२७।३१।३२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०५ ॥ ९८ अथकोपयोगः ॥ कश्चिद्वैश्यकुलेपूर्वदेशोहिकु
कुटेऽपिच ॥ गोपतिश्चेतिविख्यातोवैश्यवृत्तिपरायणः ॥ ४८५ ॥ एकस्मिन्समयेविप्रकृतंपापार्जनंभृशम् ॥ ब्राह्मणस्यहृतंद्रव्यंनदत्तंलो
भहेतुना ॥ ४८६ ॥ ततोयमपुरंगत्वाससहायोद्विजोत्तम ॥ भुक्त्वानानाविधान्भोगान्बहुवर्षसहस्रकम् ॥ ४८७ ॥ पुनर्जन्मपुनर्मृत्युर्जे
न्ममृत्यूधरातले ॥ गर्भपातःप्रजायेतपुत्रहीनंस्तथानघ ॥ ४८८ ॥ १।४।१०।१५।२०।२५।२९। ३५ ॥ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
९८ ॥ ९९ अथकलिसंज्ञकयोगः ॥ सीमावादरतःकश्चिद्ब्राह्मणःपूर्वजन्मनि ॥ तेनतत्रद्विजःकश्चिद्घातितोभूमिलोभतः ॥ ४८९ ॥
सहायपंचयुक्तेनकृतंकर्माऽतिदारुणम् ॥ तत्पापजान्महाघोरान्नरकान्प्राप्यदारुणान् ॥ ४९० ॥ बहुकालांतरेचैवमातृकुक्षेःपुनर्भवः ॥
कापट्याचरणोभ्रष्टःपुत्रसंततिवर्जितः ॥ ४९१ ॥ रोगेणमहताग्रस्तश्चोद्वेगोमानसीव्यथा ॥ प्रथमेद्वितीयेकष्टंचतुर्थेसप्तमेपिच ॥४९२ ॥
द्वादशेविंशकेवर्षेपीडाभवतिदारुणा ॥ परमायुषोऽब्दाश्चशतं१०० कथिताःप्राणधारणे ॥ ४९३ ॥ अथकुलेखायोगः ॥ राजपुत्रोऽभवत्क
श्चिद्धर्मशास्त्रार्थकोविदः ॥ गत्वाशत्रुपुरंविप्रकदाचिन्मदसंयुतः ॥ ४९४ ॥ ददाहतत्पुरंशत्रोस्तत्क्षणेपंडितःपुनः ॥ तत्रैकोब्राह्मणोदग्धो
वृद्धोविद्याविशारदः ॥ ४९५ ॥ पापमाचरितंतेनचाऽज्ञानाद्ब्रह्मघातनम् ॥ अथोयमाज्ञयासर्वान्भुक्त्वानरकांश्चशाश्वतान् ॥ ४९६ ॥आसी
ज्जन्मनियानारीचम्पकारण्यसन्निधौ ॥ रूपमञ्जरीनाम्नावैधनधान्यसमन्विता ॥ ४९७ ॥ भ्रातृपत्नींप्रतिद्वेषंकृतवत्यतिदारुणम् ॥ पतिं
प्रतिचविद्वेषाद्बहुकालगतागतैः ॥ ४९८ ॥ रूपमंजरीपापात्मापरपुरुषरताऽधमा ॥ साभृतानरकंभुक्त्वाह्यपिवर्षसहस्रकम ॥४९९॥ पुनरा
गत्यमेदिन्यांजातायाताचयौवनम् ॥ पूर्वपापानुसारेणपतिर्लब्धोनयाधुना ॥५००॥३।६।९।१५।२०।२६।२९।३१वर्षेषुकष्टम्॥परमायुर्व

र्षाणि ७१।१०१ अथकर्पल्लशयोगः ॥ कलिंगदेशेप्राग्विप्रदासश्चधनसंयुतः ॥ स्वगृहेब्राह्मणेदत्त्वाश्रद्धावित्तसमन्वितः ॥ ५०१ ॥ जगा
मनैमिषारण्येतत्रजाप्यमथाकरोत ॥ तत्रभाविबलात्पुत्रनृपश्चैकःसमागतः ॥ ५०२॥ दृष्ट्वाशूद्रंतपश्चर्य्यांकुर्वंतंद्विजसत्तम ॥ खड्गेनघातितो
राज्ञागतोऽसौचेंद्रलोककम् ॥ ५०३ ॥ बहुवर्षसहस्रांतेचागतोधरणीतले ॥ सर्वसम्पद्युतोमानीयुवभावेगदार्तिकः ॥५०४ ॥ १ । ४ । ८ ।
१२ । २२ । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८० ॥ १०२ अथकज्जराननयोगः ॥ बभूवबाहुजःकश्चिद्देशेपंचनदेपुरा ॥ धनधान्यस
मायुक्तःपापकर्मामहोद्यमी ॥ ५०५॥ विप्रसंगगतः सोपिप्रयागेचतदानघ॥स्नातश्चमृगगेभानौधूर्तःकर्मक्रियोज्झितः॥५०६॥संप्राप्यस्व
गृहंशीघ्रंकृतवान्कर्मदारुणम् ॥ ग्रामेनिवसतस्तस्यक्षत्रियस्यद्विजोत्तम ॥ ५०७ ॥ ददाहभवनंरम्यंवैरभावात्पुराऽनघ ॥ तत्रैकावत्सरीद
ग्धाजीवाश्चापिविशेषतः ॥ ५०८ ॥ कालयोगेनमृत्वावैसंगत्वायमशासनम्॥ कीटयोनिर्विहंगश्चकुक्कुटोवृकतांगतः॥५०९॥पश्चाच्चमानु
षीयोनिंचागतोधरणीतले ॥ मुखेपार्श्वेतथापृष्ठेलक्षणैर्लक्षितोऽधुना ॥५१०॥१ । ३ । ८ । १२ । १७ । २३ । २७ । २९ वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ४९॥ १०३ अथकीलकयोगः ॥ कश्चिद्विप्रकुलेयश्चधर्मिष्ठोवित्तसंयुतः ॥ उदरेवातजारोगागुल्माद्याश्चार्द्धहृद्व्यथा५ ११॥
मेहाद्याःस्वल्पवीर्याश्चह्यक्षिपांडूदरामयः ॥ जायतेशीर्षजापीडाबाल्येस्याद्ग्रहणीगदः ॥ ५१२ ॥ शरीरेजायतेवह्निरुपघातोव्रणादिक
म् ॥ वामांगेदक्षिणेभागेलांछनंतिलमाषयोः ॥५१३ ॥ २ । ४ । ६ । १२ । १६ । २० ॥ २७ । ३१ । ३८ वर्षेषुकष्टम् ॥ परमायुर्व
र्षाणि ॥ ७० ॥ १०४ अथकलातीतयोगः ॥ कलातीतयोगेयोजातः सपूर्वंब्राह्मणोह्यभूत् ॥ धनधान्यसमृद्धश्चशास्त्रवेत्ताजितेन्द्रियः ॥
॥५१४॥ गौर्मृतातस्यहस्तेनदैवयोगात्कथंचन॥ तेनपापेनमृत्वासगतश्चयममंदिरम् ॥५१५॥ नरकान्भुक्ताबहूनब्दांश्चागतोधरणीतले ॥

करेचबहुदेहपरिहपापनिर्मुक्तस्त्वते ॥ ५१६ ॥ ८ । १५ । २० । २३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८५ । १०५ अथकमेन्दुयोगः ॥
कमेन्दुयोगेयोजातः पूर्वजन्मनिब्राह्मणः ॥ पौराणिकींगुणातीतांकथांकृत्वातदाऽनघ ॥५१७॥ तस्यस्थलेसमायातासुन्दरीनवयौवना॥
बलादाकर्षितातेनसगर्भाधितदाद्विज ॥ ५१८ ॥ हठाचरतिकरणेनगर्भस्त्रावोबभूवह ॥ तेनपापानुसारेणगतोऽसौयमशासनम् ॥
॥ ५१९ ॥ बहुवर्षसहस्रांतेपुनरागत्यभूतले ॥ विचित्रकाव्यरचनोद्रव्यभारसमन्वितः ॥ ५२० ॥ १ । ७ । १० । १९ । १८ । २१
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ नंदतेवर्द्धतेनित्यंसर्वसौख्येमसंयुतः ॥ ५२१ ॥ १०६ अथकश्यपारुणयोगः ॥ कश्यपारुणके
जातः पूर्वजन्मनिसंकरः ॥ अन्नकर्मरतोनित्यंशौचाऽऽचारसमन्वितः ॥ ५२२ ॥ योगाभ्यासरतोधीमान्सर्वदाधर्मसाधकः ॥ एकस्मि
न्समयेविप्रगौरेकाचसमागता ॥ ५२३ ॥ व्याघ्रेणखेदितातस्यसमीपेधावतीभृशम् ॥ तेनभक्तेनक्रोधेनव्याघ्रोपरिधावनंकृतम् ॥५२४ ॥
व्याघ्रेणत्रोटितश्वासौसंकरःपंचतांगतः ॥ स्वर्गवासीबभूवाऽपिदिव्यवर्षसहस्रकम् ॥ ५२५ ॥ ततःपृथ्व्यांसमागत्यधनधान्यसमन्वितः॥
परमोदारोभक्तश्चप्रतापीचजनेश्वरः ॥५२६॥ १ । २ । ६ । ७ । ९ । १३ । १८ । २४ । २९ । ३३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १००॥
॥१०७ अथकुन्दमर्दकयोगः ॥ कुंदमर्दकयोगेचयोजातोऽत्रद्विजोत्तम ॥ पशुवज्ज्ञानभ्रष्टश्चह्यज्ञातःसुखदुःखयोः ॥५२७॥आसीज्जन्मांत
रेचैवब्राह्मणोवेदपाठकः ॥ विद्यादानंकृतंनैवब्राह्मणाभोजितानहि॥५२८॥१०८अथकुमुदयोगः॥नाऽतिथिभ्योददावन्नंश्राद्धंचापिकदाच
न ॥ तेनपापानुसारेणमूकत्वंजायतेधुना॥५२९॥१।२।४।८।१३।१९।२१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १००॥ इतिकवर्गादियोगाः ॥
इतिश्रीयोगसागरेसभार्चितदेवेशशुक्रभृगुसंवादेककाराद्यष्टोत्तरशतयोगकथनंनामचतुर्थप्रकरणम् ॥ ४ ॥ १ अथचक्रपाणियोगः ॥

भृगु- कश्चिद्विप्रो महासाधुश्चारुवर्णः प्रतापवान् ॥ आचारकुलधर्मज्ञो देवाग्निद्विजवत्सलः ॥ १ ॥ संयुतो वातपित्ताभ्यां किंचिद्वित्तसमन्वितः ॥ संहि-
तस्य भार्य्या सदाऽऽचारा पतिप्रीतिपरायणा ॥ २ ॥ एकस्मिन्समये विप्र ब्राह्मणेन तदा द्विज ॥ ब्राह्मणस्य सुतः श्रेष्ठः सर्वालंकरणैर्युतः ॥ ३ ॥
६३ स्वगृहे चागतः शीघ्रं घातितो निर्दयालुना ॥ गोपितो वस्मरस्तेन पापमुग्रमुपार्जितम् ॥ ४ ॥ एकदा चन्द्रमो ग्रस्ते महापर्वणि शक्तितः ॥
सत्पात्रे च द्विजे दत्ता गौस्तथापि धनं बहु ॥ ५ ॥ तेन पुण्यावशेषेण स जातोऽत्र धनेश्वरः ॥ पुत्रकन्याविहीनश्च भूत्वापि म्रियते खलु ॥ ६ ॥ १ ।
३ । ८ । ११ । १६ । २२ । २७ । ३२ । ३६ । ४० एतद्वर्षे भवेत्पीडा राजरोगस्तथानघ ॥ शतमब्दा आयुषश्च प्रायश्चित्ते कृते सति ॥ ७ ॥
२ अथ चक्रधरयोगः ॥ पूर्वजन्मनि राजेंद्रः प्रतापादधिकस्तदा ॥ शोणभद्रनदीतीरे न्यवसत्पूर्वजन्मनि ॥ ८ ॥ प्रतापलंकनामा च ह्युग्र
दंडः प्रतापवान् ॥ स राजा खेटके गत्वा सहसैन्येन वै तदा ॥ ९ ॥ व्याघ्राद्या घातितास्तेन सूकराः शशका अपि ॥ वने कोलाहलं कृत्वा
निवृत्तः सहसैनिकैः ॥ १० ॥ स्वगृहे पुनरागत्य हर्षगद्गदमानसः ॥ एकस्मिन्समये विप्र क्षुत्तृड्भ्यां व्याकुलश्च सः ॥ ११ ॥ इतस्ततश्च व्यच
रत्पर्यटन्निर्जने वने ॥ कुलाद्रिनिकटे विप्र स राजा पंचतां गतः ॥ १२ ॥ पापात्पापफलं भुक्त्वा योनिं भुक्त्वा कथंचन ॥ अशीतिवर्षसहस्रांते चा
गतो धरणीतले ॥ १३ ॥ न श्यामो नाऽतिगौरश्च दीर्घनेत्रो विशालकः ॥ दक्षिणांगे भवेच्चिह्नं व्यापारकुशलः सुधीः ॥ १४ ॥ जन्मतः प्रथमे मा
से वर्षे पीडा प्रजायते ॥ अष्टमे मनुवर्षे वा षोडशे विंशके पि वा ॥ १५ ॥ कष्टेनाति भवेत्पीडा मासि मासि च हायने ॥ प्राप्ते षष्टितमे वर्षे जीवनं तस्य दु
र्लभम् ॥ १६ ॥ ३ अथ चिंतामणियोगः ॥ भृगुरुवाच ॥ चिंतानणौ च जाताया पूर्वजन्मनि चांगना ॥ ब्राह्मणस्य गृहं प्राप्य न किंचित्सुकृतं कृतम् ॥ ६३
॥ १७ ॥ नाऽन्नं दत्तं चाऽतिथिभ्यः कुक्कुरायापि नैव च ॥ एकदा च कृतं कर्म दारुणं चातिनिंदितम् ॥ १८ ॥ सगर्भा खलु मार्जारी भक्षिता तत

भस्मनि ॥ मृतासातेनपापेनवैधव्यंभजतिद्विज ॥ १९ ॥ तेनैवदुष्कृतेनाऽथपुत्रहीनाद्विजोत्तम ॥ इदंजन्मतृतीयंतुब्रह्मवंशेसमुद्भूतम् ॥
॥ २० ॥ १ । ४ । १० । १३ । २१ । २८ । ३१ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७८ ॥ ४ अथचांद्रिकयोगः ॥ चांद्रिकेच
नरोजातःपूर्वजन्मनिबाहुजः ॥ धनधान्यसमृद्धस्तुभक्तिमान्साहसीक्षमी ॥ २१ ॥ दत्तानितेनदानानिब्राह्मणेषुचभक्तितः ॥ इंद्रप्र
स्थस्यनिकटेतपश्चर्य्यामथाऽकरोत् ॥ २२ ॥ एकस्मिन्समयेविप्रब्राह्मणःशास्त्रकोविदः ॥ आगतस्तस्यनिकटेविवादमकरोदसौ
॥ २३ ॥ परस्परमभूद्युद्धंशास्त्रवादेनवादकृत् ॥ बाहुजेनप्रकोपाद्वैब्राह्मणःसप्रताडितः ॥ २४ ॥ यातेबहुतिथेकालेबाहुजः पंचतां
गतः ॥ सतेनकर्मणायुक्तःप्राप्तस्तुयमशासनम् ॥ २५ ॥ यमलोकात्परिभ्रष्टश्चागतोभूमिमंडले ॥ बाल्येदुःखसमासक्तोयुवत्वेचाथजाय
ते॥२६॥कम्पंतेसर्वगात्राणिब्राह्मणस्यप्रताडनात्॥षट्षष्टितमवर्षेचपंचत्वंचभविष्यति॥२७॥इति॥५अथचेतयोगः॥चेतयोगेचयोजातः
पूर्वजन्मनिपादजः ॥ कौशलेनगरेचैवन्यवसत्पूर्वजन्मनि ॥२८॥ दयालइतिविख्यातःपत्नीपुत्रसमन्वितः ॥ दासकर्मणिसदानिष्ठोब्राह्मण
स्यतदानघ ॥२९॥ कृत्वास्वल्पांतदापूजांपार्थिवस्यद्विजोत्तम ॥ धनंगृहीतंविपुलंदत्तवांस्तच्चपर्वणि ॥३०॥ तीर्थाऽवगाहनंकृत्वास्वगृहे
पुनरागतः ॥ भगिनीपुत्रःसमायातोद्रव्यभारसमन्वितः ॥३१॥ स्वगृहेस्थापयामासमासमेकंतदाऽनघ ॥ तस्यद्रव्याणिसर्वाणिगृहीत्वाछ
लसंयुतः ॥ ३२ ॥ भवनान्निष्कासितःसोऽथपापमाऽऽचरितंत्विदम् ॥ पापात्पापफलंभुक्त्वापुनरागत्यभूतले ॥३३॥ १।३।९।१५।२१
।२७। ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि॥५५॥६ अथचर्पटयोगः ॥ चर्पटेचनरोजातःपूर्वजन्मनियामुने॥ प्रवर्षणइतिख्यातोबाहुजश्चप
राक्रमी ॥ ३४ ॥ धनमैश्वर्य्यमतुलंसहसैन्येनराजते ॥ चौरविद्यासुनिपुणोमार्गावरोधनेरतः ॥ ३५ ॥ द्रव्यलोभेनसततंहिंसाकर्मपरा

यणः ॥ आयुषस्तुसमाप्तित्वाद्द्विजः पंचतांगतः ॥ ३६ ॥ सतेनकर्मणायुक्तः प्राप्तस्तुयमशासनम ॥ षष्टिवर्षसहस्रांतेचागतोधरणीतले ॥ ३७ ॥ १ । ४ । ८ । १६ । २० एतद्वर्षेपीडाकष्टम् ॥ नानाउपद्रवः ॥ परमायुर्वर्षाणि १०२॥७ अथचांडालयोगः ॥ आसीत्पूर्वंमहाभागचर्मकारोगुणाकरः ॥शतद्रुनिकटेचैवन्यवसत्पूर्वजन्मनि॥३८॥द्रव्यंतुविपुलंकृत्वापथिकूपाश्चनिर्मिताः ॥ कासारवाप्यौनिर्माप्यतथातीर्थाटनंकृतम् ॥ ३९ ॥ आयुषस्तुसमाप्तित्वात्समृतोगदपीडितः ॥ बभूवपादजः सोपिपुनर्भूत्वाचवैश्यजः ॥ इदंजन्मतृतीयंचगौरांगोमतिमान्सुधीः ॥ ४० ॥ १।३ । ७ । १२ ।१४।१९।२९ वर्षेषुकष्टम ॥अल्पमृत्युः॥ परमायुर्वर्षाणि ६२ ॥ ८ अथचंचलयोगः ॥ चंचलेचनरोजातःपूर्वजन्मनिब्राह्मणः ॥ शास्त्राभ्यासीगुणज्ञश्चचंचलश्चातिविक्रमी ॥४१॥एकस्मिन्समयेविप्रदेशेचदक्षिणेगतः॥ तत्रविप्राश्चबहवोविद्वांसोधर्मवित्तमाः॥४२॥ विद्याविलासेतेषांहिराजकीयमचीकरत् ॥ तेनभूपेनविप्रायद्रव्यंदत्तंसुपुष्कलम् ॥४३॥ स्वगृहंधनमादायासन्मार्गेचाकरोद्व्ययम्॥वेश्यायाश्चददौ द्रव्यंनृत्यगीतमनोरथः ॥४४॥ एवंचापिगतेकालेतस्यमृत्युरभूत्पुरा ॥ पापात्पापफलंभुक्त्वाबहुवर्षसहस्रकम् ॥ पुनरागत्यमेदिन्यांकिंचित्पुण्यप्रभावतः ॥ ४५ ॥ १।३।६।१०।११।१७।२०।२६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८५॥९अथचपलाचलयोगः॥चपलाचलेनरःपूर्वेगुर्जरेहितदावसत्॥दामोदरइतिख्यातःसपत्नीकःसपुत्रकः॥४६॥ शिवस्याऽऽराधनेनिष्ठोविरक्तःसत्यवागसौ ॥ अहर्निशंजपान्कुर्वन्स्वदेवाग्रेस्थितःसदा॥४७॥एकस्मिन्समयेविप्रपूजांतेह्याखुरागतः॥ फलंपत्रंघृतंमिष्टंखादितंतेनचाखुना ॥ ४८ ॥ क्रोधेनमहताविप्रघातितंश्चमृतःखलु ॥ गतेस्वल्पतिथेकालेसविप्रःपंचतांगतः ॥४९॥ १।८।१६।२४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ४६ ॥ १० अथचित्ररेखायोगः ॥ आसीत्पूर्वंगयाक्षेत्रेब्राह्मणोग्रामयाजकः॥ प्रतिग्रहेणसंततंपरिवारस्यपो

त्रकः ॥ ५० ॥ एकस्मिन्समयेविप्रश्चापिनावैश्यवैबलात् ॥ सचविप्रोतिहर्षेणगयाश्राद्धमथाऽकरोत् ॥५१॥ पत्नीतस्यमहाकुष्टाकृत्वाद्वंद्व
विशेषतः ॥ स्वपतिंव्याकुलंविप्रंनिष्कासितवतीततः ॥ ५२ ॥ वैद्यनाथस्यानिकटेस्थित्वावर्षद्वयंतदा ॥ सम्मृतःस्वर्गकेगत्वापुनरागत्यभूत
लम् ॥ ५३ ॥ राज्याश्चसुखसम्पत्तिःपुत्रपौत्रसमन्वितः ॥ ५४ ॥ १।३।७।१०।१५।२२।२६।३०।३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९६ ॥
११ अथचित्तसंज्ञकयोगः ॥ द्विजःपूर्वभवेकश्चिद्दासकर्मपरायणः॥ सभार्य्योनर्मदातीरेधनसौख्यसमन्वितः ॥५५ ॥ कृतानितेनदानानि
नानापर्वसुशक्तितः ॥ वेदयुक्तेषुविप्रेषुसत्पात्रेषुविधानतः ॥ ५६ ॥ तथापापंभृशंचक्रेव्यभिचारसमुद्भवम् ॥ ज्येष्ठांत्यक्त्वाऋतुप्राप्तांधर्म
शीलयुतांप्रियाम् ॥ ५७ ॥ रतिंददौकनिष्ठायामनृतौचविमोहितः ॥ ततोयमपुरेप्राप्तःससहायोद्विजोत्तम ॥ ५८ ॥ भुक्त्वापापफलंपापात्पु
ण्यात्पुण्यफलंतथा॥श्रद्धादानवशात्सोऽत्रगंगायाःपूर्वभागके॥५९॥जातोऽवन्त्यांशास्त्रवेत्ताद्विजवंशेसुशोभने ॥ सर्वमेतत्फलंदानात्स्त्रीत्या
गान्मृतपुत्रकः ॥ ६० ॥ प्राप्तेपंचाशत्तमेब्देचाल्पमृत्युर्भविष्यति ॥ प्रायश्चित्तेकृतेविप्रवर्षेसप्ततितमेमृतिः ॥ ६१ ॥ भाद्रेमासितुधवलेनव
म्यांविमलेजले ॥ प्रहरार्द्धेगतेरात्रौपंचत्वंचभविष्यति॥दशजन्मोत्तरेविप्रमुक्तिर्भवतिनान्यथा॥६२॥१२अथचंद्रमोयोगः॥देशेपंचनदेजा
ताबाहुजापूर्वजन्मनि ॥ सान्यजन्मनिवैविप्राजाताप्राग्विप्रपूजनात् ॥ ६३ ॥ प्राग्यत्तयाकृतंकर्मशृणुतच्चद्विजोत्तम ॥ ब्राह्मणेनमहद्द्रव्यंत
द्गृहेस्थापितंचयत् ॥ ६४ ॥ नदत्तंतत्पुनस्तस्मैभुक्तंसर्वमशेषतः ॥ मृतोद्विजश्चतद्दुःखाद्बहुकालगतागतैः ॥ ६५ ॥ पंचत्वंचसवैप्राप्तो
भुक्त्वाचयमशासनम् ॥ पुत्रसंततिहीनोत्रपूर्वपापसमन्वितः ॥ ६६ ॥ निष्कृतिंपरमांतस्यवक्ष्येहंपापनाशिनीम् ॥ पलमानेनब्रह्ममूर्तिःका
र्य्यास्वर्णमयीशुभा ॥६७॥ कदलीपत्रसंयुक्तादेयाविप्रायधीमते॥दानेनाऽनेनसुप्रीताब्रह्मविष्णुमहेश्वराः ॥ पापनाशकराःसर्वेभविष्यंत्यत्र

जन्मनि ॥६८॥ इति ॥ १३ अथचारुयोगः ॥ पूर्वंजन्मनिभोविप्रचोच्छिष्टंभक्षितंसदा ॥ रात्र्यंधोजायतेसोऽपिचान्यजन्मनिमानवः ॥
॥ ६९ ॥ भोजयेद्ब्राह्मणाञ्छत्त्यागोमूत्रंप्राशयेत्तथा ॥ मुच्यतेसचरात्र्यंवात्सर्वसौख्यसमन्वितः॥७०॥ इति ॥ १४अथचामिकयोगः ॥
५ भूमिदेवकुलोत्पन्नोधर्मिष्ठोधर्मवत्सलः ॥ सत्यनिष्ठःसदाचारःसाधुसेवकसंयुतः ॥ ७१ ॥ तस्यदेहेभवेच्चिह्नंपापजंचात्रजन्मनि ॥ तस्योदरे
व्यथानित्यंरुधिरंस्रवतिद्विज ॥ निर्धनोधनसंयुक्तःक्षणेवृद्धिःक्षणेक्षयः ॥ ७२ ॥ १ । २ । ५ । ८।११।१६।२०।२७।३८ वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि १०५ ॥ १५ अथचिताधरयोगः ॥ पूर्वजन्मनिक्षात्रस्तुविपाशानिकटेवसन् ॥ सेवदासइतिख्यातःशिवस्याराधनेरतः॥
॥ ७३ ॥ एकस्मिन्समयेविप्रस्वस्त्रीघातमथाऽकरोत्॥तेनपापानुसारेणत्विदानींकष्टसंयुतः॥गणेशायकृतेदानेसर्वाबाधाप्रणश्यति॥७४॥
१६ अथचर्मनीशयोगः ॥ चर्मनीशेचयोजातश्चम्पकारण्यसन्निधौ ॥ भारद्वाजइतिख्यातःपत्नीतस्यपतिव्रता ॥ ७५॥धनमैश्वर्य्यमतुलं
व्यापारेनिरतः सदा ॥ कार्पण्येनविमोहाढ्यःकदन्नंकृतवान्सदा॥७६॥मलिनाम्बरधरश्चैवदेहेरूक्षश्चसर्वदा ॥नविप्रेभ्योददौदानंसुकृतंनक
दाचन ॥ ७७ ॥ प्राप्तेवार्द्धक्यसमयेद्रव्यशोकेनवैमृतः ॥ सर्पयोनिश्चनकुलोबभूवद्विजसत्तम ॥ ७८ ॥ १ । ४ । ७ । ९ । १३ ।
२० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९३. ॥ १६ अथपुनरपिचर्मनीशयोगः॥कश्चित्तुबाहुजोजातोवंगदेशेमहाधनी ॥ नानापु
ण्यार्चनंकृत्वाब्राह्मणायददौकिल ॥ ७९ ॥ द्रव्यस्वर्णाऽश्वमहिषंभूमिदानंतदाभृशम् ॥ एवंहिन्यवसत्तत्रबहुवर्षप्रमाणकम् ॥ ८० ॥ पुन
रागत्यमेदिन्यांसुखसौभाग्यसंयुतः ॥ राजरोगेणविकलोजायतेसचसर्वदा ॥ ८१ ॥ वर्षेद्वादशकेविप्रह्यल्पमृत्युर्भविष्यति ॥ गोशत
स्यतुदानेनचाल्पमृत्युर्नबाधते ॥ ८२ ॥ यदिमृत्युर्निवर्तेततदायुःपंचषष्टिकम् ॥ माधवेधवलेपक्षेह्यष्टम्यांनिधनंभवेत् ॥ ८३ ॥

॥ १७ अथछत्रधारीयोगः ॥ छत्रधारिणिनरःपूर्वंसोरठेनगरेवसत् ॥ नानाविलासविभवैःससम्राट्सहसानकः ॥ ८४ ॥ तस्यभा
र्य्यादुराचाराश्वशुरद्रोहकारिणी ॥ वंचयेत्स्वपतिंनित्यंशौचाचारविवर्जिता ॥ ८५ ॥ एकस्मिन्समयेविप्रप्रयागेमकरेवसन् ॥ कल्पवासं
तदाकृत्वामासमेकंनिरंतरम् ॥ ८६ ॥ तत्रभाविबलात्पुत्रविप्रकन्यांवरांगनाम् ॥ दृष्ट्वाकामातुरोभूत्वाबलादाकर्षितातदा ॥ ८७ ॥
सामृतारतिसमयेपापमाचरितंत्विदम् ॥ भुक्त्वापापफलंपापात्पुण्यात्पुण्यफलंभृशम् ॥ पुनरागत्यमेदिन्यांपुत्रदारविवर्जितः ॥ ८८ ॥
१।८।९।१५।२०।२४।२८। वर्षेषुकष्टम् ॥ व्रणादिज्वरवायुरुधिरजनितपीडा ॥ परमायुर्वर्षाणि १०५ ॥ १८ अथ छमाक
रयोगः ॥ छमाकरेपियोजातस्तपस्वीपूर्वजन्मनि ॥ पत्नीपुत्रविहीनश्चब्रह्मचर्य्यपरायणः ॥ ८९ ॥ एकस्मिन्समयेविप्रलोभाकृष्टेनचेत
सा ॥ परनारीरतंतत्रकृत्वापापंनिरंतरम् ॥ ९० ॥ तदर्थेचोरितंद्रव्यंतदातेनद्विजोत्तमः ॥ समृतोगिरिमध्येचगतोसौयमशासनम् ॥
बहुवर्षसहस्रांतेपुनरागत्यभूतले ॥ ९१ ॥ १।५।११।१७।२१।२६ वर्षेषुकष्टम् विशेषतः । परमायुर्वर्षाणि ८७ ॥ १९
अथजयजीतयोगः ॥ जयजीतेनरोजातः कीकटेह्विसन्पुरा ॥ शक्तिवर्मेतिविख्यातः सर्वसौख्येनसंयुतः ॥ ९२ ॥ ब्राह्मणस्यप्रसंगेनक
थांश्रुत्वाविशेषतः ॥ पर्वस्वपिचतेनैवब्राह्मणाभोजिताभृशम् ॥ ९३ ॥ तीर्थेतीर्थेकृतासेवाऋषीणांचपुनःपुनः ॥ एकस्मिन्समयेविप्रकृ
तंकर्माऽतिदारुणम् ॥ ९४ ॥ दासपुत्रस्ताडितश्चस्थूलेनलकुटेनवा ॥ ९५ तेनपापानुसारेणभुक्त्वानरकयातनाम् ॥ ९६ ॥ नरकाद्विप्रनिः
सृत्यचागतोधरणीतले ॥ उग्रबुद्धिर्विलासीचधनधान्यसमन्वितः ॥ ९६ ॥ १।६।९।१५।२३।२९।३५।४० वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि७४॥२०अथजवापांगीयोगः ॥ उज्जयिन्यांपुरिपूर्वंबाहुजश्चप्रतापवान् ॥ महाशूरोऽतिमतिमान्पुत्रदारसमन्वितः ॥९७ ॥

 एकस्मिन्समयेविप्रपरदेशेतदागतः ॥ नृपस्यपरिचर्य्यांयांकृत्वाप्राप्तिं।नेरंतरम् ॥ ९८ ॥ तेनभूपेनक्षत्रायकन्यादत्ताविधानतः ॥ 
तस्यराज्येप्रधानत्वंबभूवद्विजसत्तम ॥ ९९ ॥ नृपकन्ययाकदाचिद्वैकद्रुःवाक्यंप्रभाषितम् ॥ बाहुजेनातिक्रोधेनभार्य्यांचापिविपादिता ॥
 तेनासौपुत्रहीनश्चक्रंदतेसर्वदाखलः ॥ १०० ॥ १।१०।२०।३१।४०। वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६६ ॥ २१ अथझर्झरी
योगः ॥ आसीज्जन्मांतरेचैवपादजःशरयूतटे ॥ भौमदासइतिख्यातःपुत्रस्त्रीधनसंयुतः ॥ १०१ ॥ तस्यकन्यायौवनेनवरयोग्याबभूवह ॥
कृतवान्विधिनातस्याउद्वाहंचतदानघ ॥ १०२ ॥ धनलोभेनशूद्रःसदत्त्वावृद्धवरायताम् ॥ जामाताचमृतस्तत्रपापमाचरितंत्विदम् ॥
॥ १०३ ॥ तेनपापानुसारेणभुक्त्वानरकजंफलम् ॥ पुनरागत्यमेदिन्यांधनधान्यसमन्वितः ॥ कन्याश्चबहवोजातापुत्रोनैवद्विजोत्तम ॥
॥ १०४ ॥ १।५।८।१३।१८।२४। वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५७ ॥ २२ अथझामरीयोगः ॥ झामरीयोगेयोजातःपूर्वज
न्मनिब्राह्मणः ॥ कन्योद्वाहःकृतस्तेनसम्बन्धीनिहतस्तदा ॥ १०५ ॥ द्रव्यार्थंचभाविबलात्कृत्वायुद्धंविशेषतः ॥ पापाच्चनरकंगत्वाकुंभी
पाकंचभोद्विज ॥ १०६ ॥ षष्टिवर्षसहस्राणिकृमियोनौबभूवह ॥ किंचित्पुण्यवशात्पुत्रपुनर्वैमानुषोऽभवत् ॥ १०७ ॥ १।४।६।
९।१२।१८।२१।२७।३१।३६।४०।४५। वर्षेषुकष्टम् ॥ ज्वरवमनगुल्मवातपित्तशुक्रदोषप्रमेहनेत्रांध्यजातम् ॥ परमायुर्व
र्षाणि ७७ ॥ १०८ । २३ अथचेतायोगः ॥ धर्मसेनिर्नृपस्त्वेकःपूर्वजन्मनिगुर्जरे ॥ पत्नीहारवतीतस्यपातिव्रत्यपरायणा ॥ १०९ ॥
सोपिराजाबलीश्रेष्ठःपापिष्ठश्चदुरासदः ॥ प्रजानांदंडनेरक्तोद्रव्यलोभेनचेतसा ॥ ११० ॥ परदाराभिगमनःपरनिंदापरायणः ॥ विनाऽप 
राधंभोविप्रप्रजाश्चबहुघातिताः ॥ १११ ॥ ददाहनगराण्याहोसमृतोविषदोषतः ॥ सतेनकर्मणायुक्तःप्राप्तस्तुयमशासनम् ॥ षष्टिवर्षसहस्रांते

पुनरागत्यभूतले ॥ ११२॥ १।३।९।१५।२०।२६।२९। वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ १०७ ॥ २४ अथचामीकरयो
गः ॥ पूर्वजन्मनियानारीखशदेशेसदाऽवसत् ॥ चिंतामणिरितिख्यातापतिस्तस्याहताशुभः ॥ ११३ ॥ दम्पतीप्रीतिवशगौतीर्थावगा
हनेगतौ ॥ मार्गेवैश्यसुतोभव्योद्रव्यंदत्त्वाचपुष्कलम् ॥ ११४ ॥ हृतवान्स्त्रींतयाचापिपतिस्त्यक्तोद्विजोत्तम ॥ तस्याःपतिर्मृतःशोकेहाका
तेविलपन्निति ॥ ११५ ॥ सानारीचमृतापश्चात्सागताचयमालयम् ॥ यमलोकात्समागत्यपतिसौख्यविवर्जिता ॥ ११६ ॥ प्रथमेचतुर्थे
नवमेद्वादशेविंशवर्षके ॥ कष्टंतस्यशरीरेचषष्टिवर्षांतरेमृतिः ॥ ११७ ॥ इति ॥ २५अथचारुलोचनयोगः ॥ १ ॥ चारुलोचनकेजातः
पूर्वजन्मनिबाहुजः ॥ कंकदेशेऽवसत्पूर्वेकिंचिद्भूमिपतिस्तदा ॥ ११८॥ भीमसेनिरितिख्यातश्चोग्रदंडःप्रतापवान् ॥ धनार्जनस्यहेतो
र्वैदक्षिणेचतदागतः ॥११९॥ नृपेणसहकृतामैत्रीबहुकालगतागतैः ॥ नृपश्चसादरंदत्त्वाद्रव्याणिविविधानिच ॥ १२०॥ स्वगृहेपुनरागत्य
रत्नभारसमन्वितः ॥ तस्यभ्रात्राकनिष्ठेनभागार्द्धंयाचितंधनम् ॥ १२१ ॥ नदत्तंतस्यवैकिंचित्कृत्वायुद्धंपरस्परम् ॥ कालान्तरेमृतश्चा
ऽथप्राप्तस्तुयमसादनम् ॥ १२२ ॥ तत्रभुक्त्वातुनरकानागत्यधरणीतलम् ॥ भुक्त्वायमपुरेदुःखंबहुवर्षप्रमाणतः ॥ पुत्रकन्याविहीनश्चपीड्य
मानकलेवरः ॥१२३॥ इति ॥ २६अथचामरयोगः ॥ चामरेचनरोजातःपूर्वजन्मनिब्राह्मणः ॥ श्रौतस्मार्तयोर्निरतोयज्ञकर्मपरायणः॥
॥ १२४ ॥ नानायज्ञान्कारयित्वासंचितंविपुलंधनम् ॥ पर्वण्यपिकस्मैचिद्दैनदत्तंभूसुरेषुच ॥ १२५ ॥ अरातिनाकेनचिद्दैतत्पुरंलुंठितं
भृशम् ॥ द्रव्यशोकेनविकलोबभूवद्विजसत्तमः ॥१२६॥ उन्मत्तइवधावंस्सयत्रतत्रद्विजोत्तमः ॥ आयुषस्तुसमाप्तित्वान्ममारपथिभूसुरः ॥
वेदाध्ययनजन्यंतुफलंब्राह्मणवंशगः ॥ १२७ ॥ ४५ ॥ वर्षेषुकष्टम् ॥ यदिजीवतितदायुर्वर्षाणि ६५ ॥ २७ अथचिंतायोगः ॥ आसी

जन्मांतरेचैवब्रह्मदंडीविशारदः ॥ सारस्वतइतिख्यातःसरस्वत्यास्तटेवसन् ॥ १२८ ॥ शिवस्याऽऽराधनेनिष्ठोजपकर्मरतः सदा ॥ कृताः 
शिष्यास्तुबहवस्तेनभूपास्तदानघ ॥ १२९ ॥ द्रव्यसंपादनंकृत्वाभूमौनिक्षिप्तवांस्ततः ॥ आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥
॥ १३० ॥ पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन ॥ पुनरागत्यमेदिन्यांपूर्वपुण्यप्रभावतः ॥ १३१ ॥ १।५।८।१२।१९।२७
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८६ ॥ २८ अथचंचुकयोगः ॥ चिंतापुरइतिख्यातेवसंतिबहवोजनाः ॥ नीलकंठध्वजोनामतत्रराजातु
बाहुजः ॥ १३२ ॥ तस्यपुत्र्यभवत्पद्माचेंद्रस्यैवयथांगना ॥ वरयोग्याबभूवाऽपिनाकरोत्पतिचिंतनम् ॥ १३३ ॥ शालग्रामार्चनेनिष्ठा
अन्यत्कार्यमजानती ॥ चक्रपाणिंरमाकान्तंपतिंस्वीयमचिंतयत् ॥१३४॥ भक्त्यंतरसमाविष्टावैष्णवीदानवत्सला ॥ कुमारीसामृताविप्र
गतिर्लब्धानचस्त्रियाः ॥ १३५ ॥ इदंजन्मांत्रवेद्यंचधर्मकर्मसमन्वितम् ॥ प्रथमेतृतीयेवर्षेषोडशेचैकविंशके ॥ चाल्पमृत्युर्भवेत्तस्याःषष्टि
वर्षाणिचायुषः ॥ १३६ ॥ २९ अथचापाख्ययोगः ॥ कश्चिद्वैश्यकुलेपूर्वंकुकुरेदेशकेतदा ॥ धनधान्ययुतस्तत्रव्यापारकुशलः सदा ॥
॥ १३७॥ तस्मिन्ग्रामेऽवसद्वैश्योधनवान्धर्मसाहसी ॥ आत्मजोद्वाहप्रारम्भमकृत्वाद्विजसत्तम ॥ १३८ ॥ तेनवैश्येनभोविप्रयज्ञविध्वं
सनंकृतम् ॥ तेनपापानुसारेणश्रियस्तस्यक्षयंगताः ॥ १३९ ॥ दरिद्रोपिबभूवाऽथव्याकुलश्चमनोरथैः ॥ विघ्नकारीचसततंगतोहिनरके
द्विज ॥ सप्तसुजन्मसुपशुर्भूत्वायातोमनुष्यताम् ॥ १४० ॥ १।२।१५।२०।२५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ ३० अथ
चंननयोगः ॥ चंननेचनरोजातःपूर्वजन्मनिब्राह्मणः ॥ काव्येषुनिपुणःसोऽपिगुर्जरेहितदाऽवसत् ॥ १४१ ॥ वासुदेवइतिख्यातः 
परस्त्रीरतिलम्पटः ॥ परापवादनिरतोमिथ्याजल्पतिनित्यशः ॥ १४२ ॥ एकस्मिन्समयेविप्रकाश्यांगत्वासहर्षितः ॥ तत्रभाविबला

त्पुत्रब्राह्मण्यांगमनंकृतम् ॥ १४३ ॥ भयभीतश्चभोविप्रपलायनपरायणः ॥ जगामपर्वतारण्येभक्षितोवनगोचरैः ॥ १४४ ॥
...गात्पापफलंभुक्त्वायोनीर्भुक्त्वाकथंचन ॥ शतवर्षसहस्रांतेचागतोभूमिमंडले ॥ १४५ ॥ हीनश्चधनपुत्राभ्यांतथांगैश्चद्विजोत्तम ॥
नानाविघ्नंभवेत्तस्यपूर्वपापफलादपि ॥ १४६ ॥ १ । १० । १६ । २२ । २७ । ३५ ॥ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९५
॥ ३१ अथचोपयोगः ॥ चोपयोगेनरःपूर्वमांत्रवेद्येचबाहुजः ॥ प्रवर्तनइतिख्यातःशास्त्रवेत्तागुणान्वितः ॥ १४७ ॥ तस्यपत्नी
शोभनाऽऽस्यामालिनीनामविश्रुता ॥ पतिप्रीतिरताचोग्रादानपुण्यपरायणा ॥ १४८ ॥ प्रवर्तनश्चभूपालंमित्रंकृत्वाविशेषतः ॥
नृपानुकम्पयाद्रव्यंप्रचुरंलब्धवानसौ ॥ १४९ ॥ एकस्मिन्समयेविप्रह्यरातिस्तत्रचागतः ॥ कृत्वापरस्परंयुद्धंचतुर्वासरतस्तदा ॥ १५० ॥
प्रवर्तनस्तुविमुखःपलायनपरायणः ॥ खड्गेननिधनंप्राप्यगतश्चयमसादनम् ॥ १५१ ॥ भुक्त्वावर्षसहस्राणिनरकेभृशदारुणे ॥ पुनराग
त्यमेदिन्यांकिंचित्पुण्यप्रभावतः ॥ १५२ ॥ ३ । ६ । १२ । १६ । २७ । ३३ । ३५ । ३९ । ४० एतद्वर्षेषुपीडाकष्टम्॥ परमायुर्वर्षाणि
६७ ॥ ३२ अथचोद्धतयोगः ॥ चोद्धतेचनरोजातः पूर्वजन्मनिब्राह्मणः ॥ हरिद्वारस्यनिकटेनिवसन्परिवारयुक् ॥ १५३ ॥ पठनेपाठ
नेमग्नोदयार्द्रःशिवपूजकः ॥ एकस्मिन्समयेविप्रनृपस्त्वेकःसमागतः ॥ १५४ ॥ तेनभूपेनहर्षेणशिवस्याऽऽराधनंकृतम् ॥ ब्राह्मणेनगृहे
लिंगंप्राणवत्पूज्यतेसदा ॥ १५५ ॥ अतस्तुष्टःसभूपालोमुद्रालक्षद्वयंददौ ॥ लोभयुक्तश्चविप्रोऽसौनिर्माल्यंतद्गृहीतवान् ॥ १५६ ॥
एवंहिनिवसंस्तत्रबहुवर्षगतागतैः ॥ आयुषस्तुसमाप्तित्वान्ममारपथिभूसुरः॥१५७॥पुनरागत्यमेदिन्यांधनधान्यसमन्वितः ॥ पुत्रकन्या
विहीनश्चकष्टंतस्ययदाकदा ॥ षोडशेविंशकेवर्षेचतुर्विंशेप्रपीडितः ॥ १५८ ॥ परमायुर्वर्षाणि १०० ॥ ३३ अथचर्माम्बरयोगः ॥

आसीज्जन्मांतरेचैवसंन्यासीविपिनेवसत्॥जटिलोनखभूत्यङ्गश्चर्माम्बरधरोविभुः॥१५९॥ मिथ्याऽपवादनिरतोधूर्तत्वेचसदारतः।परद्रव्या
पहारीचमधुरप्रियभाषकः ॥ १६० ॥ एवंहिनिवसंस्तत्रबहुवर्षगतागतैः ॥ अनृताच्चविमोहेनकृतंकर्मजुगुप्सितम् ॥१६१ ॥वैश्यस्यतुधनं
हृत्वातस्यव्यापादनंकृतम् ॥ तेनपापानुसारेणह्यतिथिः सहशिष्यकः ॥ नरकेरौरवेक्षिप्तोयमदूतैर्यमाज्ञया ॥ १६२ ॥ असिपत्रवनंघोरंभु
क्त्वापश्चाद्द्विजोत्तम॥किंचित्पुण्यवशादत्रपुनरागत्यभूतले ॥ १६३ ॥ १ । ५ । ७ । १३ । २१ । २७ । ३२ ।३७।३९ ॥ एतद्वर्षेषुमृत्यु
प्रायः ॥ परमायुर्वर्षाणि १०३॥३४अथचरायोगः ॥ कश्चिच्छूद्रकुलेपूर्वंज्वालामुख्याश्चसन्निधौ ॥ शेषकेतिसमाख्यातःकन्यापुत्र
विवर्जितः ॥१६४ ॥कृषिवाणिज्यनिरतोविप्रभक्तिपरोरतः॥दत्तानितेनदानानिपर्वस्वपिचशक्तितः॥१६५॥प्राप्यवार्द्धक्यसमयंसर्वस्वंब्रा
ह्मणेददौ ॥ तेनपुण्यावसानेनस्वर्गेंगत्वाचपादजः ॥ अधुनासंततियुक्तःसुखाऽऽनंदेनसंयुतः ॥ १६६ ॥ १ । ४ । ६ । ९ । १२ । १५
२० । २६ । ३७। ४० एतद्वर्षेषुपीडा ॥ परमायुर्वर्षाणि ७४ ॥ ३५ अथचारुयोगः ॥ पूर्वजन्मनिमहाभ्रष्टोब्राह्मणोब्रह्मनिंदकः ॥ परदारा
भिगमनःपरकष्टप्रदायकः ॥ १६७ ॥ मध्यदेशेऽवसत्सोपिसमृतोयमुनातटे ॥ यमुनामृत्युवशात्पुत्रगंधर्वनगरेस्थितः॥पुनरागत्यमेदिन्या
माधिव्याधिसमन्वितः ॥ १६८ ॥ ९। १२। १६ । १७ । २० । २७। ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६८ ॥ ३६अथचूतयोगः ॥
पूर्वजन्मनिकावेरीनिकटेब्राह्मणोवसन्॥शिवदासइतिख्यातःपरिवारेणसंयुतः ॥ १६९ ॥ कृत्वादानार्चनंजाप्यंबहुवर्षगतागतैः ॥ एक
स्मिन्समयेविप्रयजमानगृहेगतः ॥ १७० ॥ यजमानोददौतस्यस्वर्णमुद्रासहस्रकम्॥स्वगृहेचागतःसोथस्वर्णमुद्रासहस्रकम् ॥ १७१ ॥
वेश्यांदत्त्वाधनंसर्वमसत्कर्मव्ययःकृतः ॥ ब्रह्मकर्मपरित्यक्त्वाकामलोभेचनिश्चितः ॥ १७२॥ एवंस्वल्पतिथेकालेसविप्रोनरकंगतः ॥षष्टि

वर्षसहस्रांतेपुनरागत्यभूतले ॥ १७३ ॥ १। ३। ५। ८। ९। १३। २०। २८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ ३७ अथ चम्पाख्ययोगः ॥ पूर्वजन्मनियानारीकीकटेहितदाऽवसत् ॥ द्रव्यलोभेनसाबालापुत्रस्यतुविषंददौ ॥१७४॥ पुत्रस्यतुविषंदत्त्वापूर्वजन्म निमानद ॥ छर्दीरोगेणसात्रैवबाध्यतेपीडयामहत् ॥ १७५ ॥ साचाऽत्रयवनीदेशेशुभेपञ्चनदेद्विज ॥ ·साजातात्रमहापापैर्दुःखितासर्वदा खलु ॥१७६॥ तस्मात्सायवनीजातापुत्रसंततिवर्जिता ॥ नानाधनयुतादानात्कुरुक्षेत्रेपुरानघ ॥ १७७ ॥ शिवभक्तिपरातस्मात्सुखैश्व र्य्यसमन्विता ॥ अत्रजन्मनिसालक्षरुद्रपूजनजाद्व्रतात् ॥ १७८ ॥ पुत्रपौत्रयुतानारीभवत्यत्रनसंशयः ॥ अथवाहरिवंशस्यशतव्रतविधा नतः ॥ श्रवणात्पूर्वजात्पापान्मुच्यतेनाऽत्रसंशयः ॥१७९॥ इति ॥ ३८ अथ चंचुकयोगः ॥ चंचुकेयोगेयोजातःसवैश्यःपूर्वजन्मनि । दानवेंद्रइतिख्यातोबाहुजोधर्मवानपि ॥ १८० ॥ लाटाभिधेपुरेविप्रचोग्रदंडःप्रतापवान् ॥ चंद्रग्रस्तेतथाकाश्यांदानंदत्त्वास्वशक्तितः ॥ ॥ १८१ ॥ पर्वस्वपिचतेनैवब्राह्मणाभोजिताःखलु ॥ पारायणसंहितासुश्रीमद्भागवतंश्रुतम् ॥ १८२ ॥ मध्येपापंकृतंतेनभ्रूणहत्यातदा नघ ॥ पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन ॥ पुनर्वैमानुषींयोनिंचागतोधरणीतले ॥ १८३ ॥ १। ३। ८। १३। १७। २२। २७। ३५। ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६० ॥ ३९अथचमरीयोगः ॥ काचिद्वेश्याकुलेजातापूर्वजन्मनिकीकटे ॥ बहुद्रव्यार्जनं कृत्वापुण्यमार्गेव्ययःकृतः ॥ १८४ ॥ आतिथ्येचद्विजेदत्तंवस्त्रभूषणपात्रकम् ॥ शीतकालेददौवस्त्रंग्रीष्मकालेजलान्नकम् ॥ १८५ ॥ प्रावृषिच्छत्रदानंचतथातीर्थाटनंकृतम् ॥ एवंनिवसतीसातुबहुवर्षगतागतैः ॥ १८६ ॥ मृत्वाचेंद्रपुरेप्राप्तापुनरागत्यभूतले ॥ सुंदरी चातिलावण्यापतिप्रीतिपरायणा ॥ १८७ ॥ ५५ वर्षेमृत्युः ॥ ४० अथजयधायोगः ॥ कश्चित्तुबाहुजश्चैवशतद्रुनिकटेवसन् ॥ विंशको

शाधिपस्तत्रचोग्रदंडःप्रतापिकः ॥ १८८ ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥ उन्मत्तश्चबभूवाऽपिखङ्गमुद्यम्यवेगतः ॥ संहि.
॥ १८९ ॥ मार्जारींचशुनींगांचवृषभाऽश्वगर्दभादिकान् ॥ नरांश्चैवतुनारीश्चहन्यमानोविशेषतः ॥ १९० ॥ जीवांश्चहतवान्सर्वान्सोऽयं
कालाभिधःक्रमात् ॥ प्राप्तेवार्द्धक्यसमयेहरगेहंतदाकृतम् ॥ १९१ ॥ नांगीकृतंयदाविप्रैःसर्वस्वंमंदिरेऽक्षिपत् ॥ सराजापंचतांप्राप्तोगतो
सौयमशासनम् ॥ अस्मिञ्जन्मनिकुष्ठीस्यात्पुत्रकन्याविवर्जितः ॥ १९२ ॥ ५६ वर्षेमृत्युः ॥ ४१ ॥ अथ छेमयोगः ॥
छेमयोगेनरोजातः पूर्वजन्मनिवैश्यजः ॥ रामक्षेत्रस्यनिकटेनिवसन्पूर्वजन्मनि ॥ १९३ ॥ देवदासइतिख्यातोभार्य्याऽस्यप्रिय
वादिनी ॥ एकस्मिन्समयेविप्रकृत्वाश्राद्धंसहर्षितः ॥ १९४ ॥ ब्राह्मणाश्चसमायाताः स्वगृहेस्थापिताद्विज ॥ पत्न्याद्वंद्वंकृतंसम्यग्गुत्थि
ताब्राह्मणास्तदा ॥ १९५ ॥ यज्ञोभ्रष्टोबभूवाऽथनिराशाःपितरोगताः ॥ तेनपापानुसारेणवंशवृद्धिर्नजायते ॥ १९६ ॥ गयाश्राद्धेकृते
विप्रपुत्रोभवतिनाऽन्यथा ॥ इति ॥ ४२ अथ छात्रकयोगः ॥ आसीज्जन्मांतरेचैवजैद्रथोनामभूपतिः ॥ १९७ ॥ चोलदेशेऽवसत्सोपि
परिवारेणसंयुतः ॥ नानाविलासविभवैःसंयुतोगुणिनांगणैः ॥ १९८ ॥ छलबुद्धिवशात्पुत्रजित्वाशत्रून्विशेषतः ॥ एकस्मिन्समयेविप्र
कृतंकर्मचदारुणम् ॥ केनचिद्ग्रामपतिनासहसंधिःकृतश्छलैः ॥ १९९ ॥ विश्वासाच्चहतश्चासौकृतंकर्मदुरासदम् ॥ सराजापंचतांप्राप्तो
गतश्चयमशासनम् ॥ किंचित्पुण्यवशात्पुत्रसजातोबाहुजोऽधुना ॥ २०० ॥ १।३।८।९।१३।२०।२५ वर्षेषुकष्टम ॥ परमा
युर्वर्षाणि ७२ ॥ ४३ अथ छोभकायोगः ॥ कांतिकानगरीश्रेष्ठाप्रकीर्णागुणिनांगणैः ॥ तत्रभीष्मवरोराजाविष्णुभक्तिपरोदृढः ॥ ६९
॥ २०१ ॥ हरनिंदापरोनित्यंह्यात्मज्ञानेसधूर्तकः ॥ वाचामधुरयायुक्तोनिर्दयश्छलसंयुतः ॥ २०२ ॥ एकस्मिन्समयेविप्रब्राह्मणश्चप्रता

डितः॥तेनविप्रेणक्रोधेनस्वंशरीरंचघातितम् ॥ २०३ ॥ तस्यपापप्रभावेणश्रियस्तस्यक्षयंगताः ॥ पापाच्चनरकेप्राप्तःषष्टिवर्षसहस्रकम् ॥
॥ २०४ ॥ इदंतुमानुषंजन्मवंशवृद्धिर्नजायते ॥ तुलादानाद्भवेत्पुत्रोनान्यथाद्विजसत्तम ॥२०५॥ ४० वर्षेअल्पमृत्युःपरमायुर्वर्षाणि ८४
४४ अथजीमूतयोगः ॥ आसीत्पूर्वंपैठनेचनगरेबाहुजोवसन् ॥ महाशूरोऽतिभव्यश्चधनधर्मरतःसदा ॥ २०६ ॥ लोकपर्यटनेगत्वासह
सैन्येनबाहुजः ॥ तत्रभीष्मवतींभव्यांनगरींत्रिदिवोपमाम् ॥ २०७ ॥ वैनतेयेनवैपुत्रभक्षितामनुजादयः ॥ गृहेगृहेप्रतिद्वारेचैकःसोऽभक्षय
त्तदा ॥ २०८ ॥ तस्मिन्दिनेब्राह्मणस्यगृहेवासःकृतःखलु ॥ गरुडाग्रेगतोराज्ञाकृतंयुद्धंपरस्परम् ॥ २०९ ॥ गरुडोहर्षसंयुक्तस्त्यक्त्वाग्रा
मंगतोऽनघ ॥ सराजाचंद्रलोकेचपितृलोकेततोगतः ॥ चंद्रलोकात्परिभ्रष्टश्चागतोधरणीतले॥२१०॥१।५।९।१४।१९ वर्षेषुकष्ट
म् ॥ परमायुर्वर्षाणि ९७ ॥ ४५ अथजगत्पालयोगः ॥ जगत्पालेनरोऽस्त्युग्रोदानवत्सलधार्मिकः ॥ जगदानंदनामाचगुर्जरेनगरेवसन् ॥
॥ २११ ॥ देव्याअग्रेविधानेनजपकरणान्निरंतरम् ॥ आविर्बभूवसहसाजगन्मातात्रिलोचना ॥ २१२ ॥ वरंवरयराजेंद्रप्रसन्नाहंतवव्रतात् ॥
दत्त्वेप्सितंवरंदेवीह्यन्तर्धानंगतापुनः ॥ २१३ ॥ सहस्रमितवर्षाणिकृत्वाराज्यंनिरंतरम् ॥ पुनर्वैमानुषोभूत्वासर्वसौख्यसमन्वितः ॥२१४॥
प्रथमेपंचमेवर्षेद्वादशेषोडशेपिवा ॥ वर्षेपीडाभवेत्तस्यप्रायश्चित्तेकृतेसुखम् ॥ २१५ ॥ आयुःपंचाशद्वर्षांतंकथितंप्राणधारणम् ॥ आश्वि
नेधवलेपक्षेह्यष्टम्यांनिधनंभवेत् ॥ २१६ ॥ ४६ अथजेवरीयोगः ॥ जेवरीयोगेयोजातःसर्वपूज्योधनाधिपः ॥ मुखाग्रेतिलकंचिह्नंभव्यकां
तिर्दयायुतः ॥ २१७ ॥ वंशवृद्धिर्नजायेतपूर्वपापानुसारतः ॥ शुक्रउवाच ॥ कोस्तिपूर्वमहाभागकिंकृतंपापपुण्ययोः ॥ २१८ ॥ श्रोतु
मिच्छामितत्त्वज्ञवदविस्तरतोऽधुना ॥ भृगुरुवाच ॥ शृणुपुत्रप्रवक्ष्यामिविस्तरेणसमासतः ॥ २१९ ॥ बाहुजःपूर्वजननेवैराटेनगरेऽवसत् ॥

दत्तानितेनदानानिब्राह्मणेषुस्वशक्तितः ॥ २२० ॥ मातृस्वसुश्चगमनात्पुत्रकन्याविवर्जितः ॥ अस्मिञ्जन्मनितृतीयेतुगौरांगःप्रियदर्शनः
॥ २२१॥१।६।१०।१५।२०। वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०६ ॥ ४७ अथजोरयोगः ॥ आसीत्पूर्वभवेशूद्रोगंगायादक्षिणेतटे ॥ भूप
तिश्चसमाख्यातःपत्नीपुत्रसमन्वितः ॥ २२२ ॥ परदाराऽभिगमनंकृतंतेननिरंतरम् ॥ एकस्मिन्समयेविप्रप्रयागेमकरेवसन् ॥ २२३ ॥ अ
र्द्धोदयंसमासाद्यमहापर्वणिकेतदा ॥ ब्राह्मणेभ्योददौदानंहर्षगद्गदमानसः ॥ २२४ ॥ स्वगृहेपुनरागत्यदम्पतीचतदाऽनघ ॥किंचित्कालव
शंयातःस्वर्गयातश्चपादजः ॥ पत्नीतस्यसतीजातापुनरागत्यभूतले ॥ २२५ ॥१।८।१३।१७।२२।३१।३६। वर्षेषुकष्टम्॥ परमायुर्वर्षाणि
६७॥४८ अथजोषितायोगः ॥ आसीज्जन्मान्तरेनारीवंगदेशेवसत्यसौ ॥ सुधाकरीतिविख्यातापतिस्तस्याधनेश्वरः ॥ २२६ ॥ काक
घातातदानारीकाकवंध्याऽधुनाभवेत् ॥ तीर्थेतीर्थेददौदानंसत्पात्रायद्विजायच ॥ २२७ ॥ तेनपुण्यावशेषेणसाजातात्रसुखान्विता ॥ स्व
र्णकाकस्यप्रतिमापलपंचप्रमाणिका ॥ ब्राह्मणायप्रदातव्याबहुपुत्रान्वितातततः ॥२२८ ॥ १।४।८।१०।१३।१९ वर्षेषुकष्टम्॥ परमायुर्वर्षा
णि३९॥४९अथझंडावलीयोगः ॥ झंडावल्यांनरोजातःकाकुत्स्थेह्यवसत्तदा ॥ मनोहरइतिख्यातोबाहुजःसर्वशास्त्रवित् ॥२२९॥ सम्यग
ध्यापिताविप्राश्चान्नदानमथोददौ ॥ सीमावादेहतस्तत्रबाहुजस्यसुतस्तदा ॥ २३० ॥ निशायांचोरकार्येहिबहुवर्षांतरेमृतः ॥ पापाच्चनर
केगत्वासजातोऽत्रद्विजालये ॥ २३१ ॥ ८।९।१३।२१।२७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६१।५० अथझटितियोगः ॥ पूर्वजन्मनिनैपा
लेखराश्चचतुरःसुधीः ॥ पशुपतिश्चविख्यातःपत्नीपुत्रसमन्वितः ॥२३२॥ बहुवत्सरपर्य्यंतंजीवाश्चघातिताभृशम् ॥ प्रातेवार्द्धक्यसमयेस ७०
र्वस्वंविधिनाददौ ॥ २३३ ॥ तेनपुण्यप्रभावेणधनधान्ययुतोऽधुना ॥ गृहदानात्पयोदानात्पुत्रवृद्धिर्भविष्यति॥२३४॥ १।१०।२०। ३६

वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५८ ॥ ५१ अथउग्रदंडयोगः ॥ उग्रदंडेनरोजातःपृथ्वीपालनतत्परः ॥ पुत्रकन्यासमायुक्तःसहसैन्येनराज
ते ॥ २३५ ॥ आसीत्पूर्वेविप्रःकश्चिच्छरय्वाश्चोत्तरेतटे ॥ मह्नीपालइतिख्यातःपादजोधर्मवानपि ॥ २३६ ॥ नानातीर्थाटनंकृत्वाह्यारामं
चजलाशयम् ॥ तेनपुण्यावशेषेणसजातोबाहुजोधुना ॥२३७॥ १।५।९।१३।१७।२०।२३।३८। ४० एतद्वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
८१॥५२ अथचलाचलयोगः ॥ चलाचलेऽभवत्पूर्वधर्मशास्त्रविनोदकः ॥ कौशल्यायांनगर्यांचतपस्वीचजितेन्द्रियः ॥ २३८॥ चेतन्य
इतिविख्यातोनृपद्वारेप्रतिष्ठितः ॥ एकस्मिन्समयेविप्रपापमाचरितंभृशम् ॥ २३९ ॥ नृपकन्याचयुवतिःसुन्दरीषोडशाब्दिका॥कुमारी
गमनात्तस्यसगर्भाचाभवत्पुरा ॥ २४० ॥ नाशितस्तेनगर्भोहिविविधैरौषधैरपि ॥ विप्रोयमपुरंप्राप्यभुक्त्वाक्लेशांश्चशाश्वतान् ॥ पुनश्चमातु
षीयोनौमातृकुक्षेःसमुद्गतः ॥ २४१॥ १ । ३ । १० । १२ । १८ । २० । २५ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ५३ अथ
चातुरीयोगः ॥ पूर्वजन्मनिभोविप्रचित्रकूटाद्रिसन्निधौ ॥ भिल्लोनाममहाव्याधःशौचाचारविवर्जितः ॥२४२॥ जीवांश्चघातयामासमार्गा
वरोधनेरतः ॥ एकस्मिन्समयेविप्रप्रयागेमकरेगतः ॥ २४३ ॥ तत्रभाविबलान्मृत्युर्बभूवद्विजसत्तम ॥ तेनपुण्यप्रभावेणसजातः
पादजोऽधुना ॥ २४४ ॥ १। १३ । १८।२१ । २३ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६६ ॥ ५४ अथचोलमाख्ययोगः ॥ आसीज्ज
न्मान्तरेचैवतपस्वीब्राह्मणःकिल॥ध्वजाधरइतिख्यातोमदांधोगर्वसंयुतः ॥ २४५ ॥ किंचिद्विद्याविलासीचजपकर्माऽर्चनेदृढः॥ एकस्मि
न्समयेविप्रभाविनोर्थस्यवैबलात् ॥ २४६ ॥ दंडकारण्यनिकटेतपश्चर्य्यामथाऽकरोत् ॥ ब्राह्मणस्यसुतस्तत्रसर्वालंकरणैर्युतः ॥ २४७ ॥
धनलोभाद्धतस्तेनभाविनोर्थस्यवैबलात् ॥ तस्यचमातापितरौपुत्रस्नेहेनदुःखितौ ॥ २४८ ॥ अचिराच्चमृतःसोपिगतोवैयम

शासनम् ॥ तेनकर्मविपाकेननरकेपाचितोभृशम् ॥ २४९ ॥ पश्चान्मानुष्यमापन्नोव्रतदानप्रभावतः ॥ इदंचतुष्टयंजन्ममृताऽपत्यंद्विजो
त्तम ॥ २५० ॥ मृतः पुत्रोभवेदस्यजातोजातस्तथैवच ॥ इदंजीवेदिदंजीवेदित्याशामपिचाकरोत् ॥ २५१ ॥ जातंजातंविनष्टंचनकृतात
स्यनिष्कृतिः ॥ एवंयदिचिरंस्थित्वापश्चाच्चम्रियतेखलु ॥२५२॥ कृत्वास्वर्णमयींमूर्तिंविप्रबालस्यशोभनाम् ॥ पूर्वोक्तेनविधानेनसंकल्प्य
ब्राह्मणार्पणम् ॥ ततःश्रेयोभवेत्तस्यवंशवृद्धिर्भविष्यति ॥ २५३ ॥ १ । ४ । ५ । ९ । १२ । १६ । २५ । २७ वर्षेषुकष्टम्॥परमायुर्व
र्षाणि ६९ ॥ ५५ अथचंद्रकांतियोगः ॥ कश्चित्प्रागभवद्विप्रःसर्वविद्याविशारदः ॥ वेदाभ्यासरतःश्रीमान्प्राप्तसर्वमनोरथः ॥ २५४ ॥
तुलादानानिदत्त्वाचघृतस्यभूसुरेष्वपि ॥ गृहीतवांश्चचौर्य्येणलोभोपहतचेतसा ॥ २५५ ॥ केनचित्सुकृतेनैवप्राग्भवेयत्फलंशृणु ॥ श्रोत्रि
यस्यकुलेजातोवेदवेदांगपारगः ॥ २५६ ॥ धनपुत्रसमायुक्तःक्षयरोगसमन्वितः ॥ सरस्वत्याश्चदानेनरोगाश्चविलयंगताः॥२५७॥ १ । ५ ।
७ । १० । १५ । २० । २८ । ३६ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५९ ॥ ५६ अथछर्छरीयोगः ॥ बभूवब्राह्मणःकश्चिद्वंगदेशेवस
न्सुधीः ॥ धर्मकर्मदयायुक्तोधनपुत्रादिसंयुतः ॥ २५८ ॥ दत्तानितेनविप्रेभ्योदानान्यत्यल्पशक्तितः ॥ सत्पात्रेभ्यस्तदाविप्रपर्वस्वपिविधा
नतः ॥ २५९ ॥ पापमाचरितंतेनकामलोभेननिश्चयः ॥ ब्राह्मण्यांधारितोगर्भोभाविनोर्थस्यगौरवात् ॥ २६० ॥ गर्भपातनजाद्दुःखा
त्सामृताद्विजसत्तम॥एवंचात्रगतेकालेप्राप्तश्चयमशासनम्॥२६१॥भुक्त्वापापाच्चनरकान्पुण्यात्स्वर्गंचशाश्वतम् ॥ पूर्वपुण्यप्रभावेणसजातो
ब्राह्मणोऽधुना ॥ २६२ ॥ धनमैश्वर्यमतुलंतथास्त्रीभोगभाङ्नरः॥दक्षःकार्य्येषुचार्वंगोधर्मिष्ठोलाभसंयुतः॥२६३॥ मानीयशस्वीपुरुषःकांति
मान्प्रियभाषकः॥पुण्यादिदंतथापापाद्विप्रपापरतःक्वचित् ॥२६४॥ धूर्तःशठःक्रोधपरोधनवृद्धिक्षयान्वितः॥पूर्वपापानुसारेणयुवापुत्रोमृतः

खलु ॥ २६५ ॥ १।६।२०।२८।३६॥४०॥४६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९३॥ ५७ अथछूरसञ्ज्ञकयोगः ॥ आसीज्जन्मांतरेवेश्यु
स्कारश्चनापितः॥प्रयागेनिवसन्पूर्वंपरिचर्यात्कृतंधनम् २६६। नानाविभवविस्तारैःपुण्यमार्गेकृतोव्ययः ॥ आरामंचजलोत्सर्गंकन्योद्वाह
मथाकरोत्॥२६७॥आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ बभूवपादजःसोपिवैश्योभूत्वाततोपरि ॥२६८॥ इदंचतुष्टयंजन्मसर्वसौ
ख्येनसंयुतम् ॥ शरीरंपीडयमानंचह्युद्वेगोमानसीव्यथा ॥ २६९ ॥ १।२।७।९।१३।१८।१९।२०।२८।३३॥ वर्षेषुकष्टम्॥परमायुर्वर्षाणि
८७ ॥ ५८ अथजटायुयोगः ॥ ब्राह्मणीगर्भयुक्ताचप्रयाणेभर्तृसंयुता ॥ सर्वाभरणभूषाढ्यानानारत्नसमन्विता ॥२७०॥ बहवोमिलिता
श्चौराजगृहुश्चास्यभूषणम् ॥ तत्रकोलाहलोजातोगर्भपातोऽभवत्तदा ॥ २७१ ॥ १।५।९।१४।२०।२५।३० । वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ६९॥५९॥ अथजोधयोगः ॥ कश्चिद्दासकुलेपूर्वंचोत्कलेहितदाऽवसत् ॥ यानार्यघातयत्कंचित्पुरुषंप्राग्भवेद्द्विज २७२॥
सांत्रजन्मनिरोगेणशूलेनैवप्रपीड्यते ॥ सुवर्णदानाद्विधिवत्तथारुद्रजपादिह ॥ २७३ ॥ पूजनाच्छंकरस्याऽपिशूलरोगाद्विमुच्यते ॥
॥ २७४ ॥ १।४।६।११।२०।२९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६० ६० अथजांगल्ययोगः ॥ कश्चित्क्षात्रकुलेपूर्वंपांचालेनग
रेऽपिच ॥ गोत्रघातःकृतस्तत्रपरस्त्रीरमणंतथा ॥२७५॥ सोत्रजन्मनिनूनंचमहाकष्टेनपीडितः ॥ तीर्थस्नानकृतादीनिनिष्फलान्यत्रभा
गेव ॥ २७६ ॥ ज्ञानपूर्वंकृतात्पापाद्रोगहाचक्षयीभवेत् ॥ २७७ ॥ १।४।५।७।१०।१३।१६। वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ४६ ॥ ६१
अथजानकीयोगः ॥ कश्चिच्छूद्रोमहाभागबभूवप्राग्भवेधनी ॥ व्यापारनिरतोदक्षःक्रयविक्रयकर्मसु ॥२७८॥ नीतःसर्वरसस्तेनमिलित्वा
चार्द्धसीरिणा ॥ कालेनतद्धनंलोभात्स्नेहमूल्याधिकंसुत ॥ २७९ ॥ भुक्त्वापापफलाद्घोराद्भ्रमरत्वमुपागतः ॥ ततःपुण्याच्छुभान्मु

क्त्वाभोगाञ्ञतोत्रबाहुजः ॥ २८० ॥ क्षात्रःपुण्यकलायुक्तोभूमिदानात्सुरार्चनात् ॥ स्नेहहारीयतःपूर्वैराजरोगात्प्रपीडितः ॥ २८१ ॥ सर्वस्नेहादिदानाद्वैस्ववित्तस्यप्रदायकः ॥ स्वर्णदानंतथाचात्रक्षयरोगाद्विमुच्यते ॥ २८२ ॥ २ । ६ । ९ । १३ । २० । २९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८६ । ९६ ॥ ६२ अथजयवर्द्धीयोगः ॥ आसीज्जन्मान्तरेचैवबाहुजस्यवरांगना ॥ देशेहिककुभेचैवपतिपुत्रसमन्विता ॥ २८३ ॥ विषंदत्त्वापतिंविप्रप्राग्ग्यजाराश्रितासती ॥ पतिघ्नीसामहादुष्टाबाल्येत्रविधवाद्विज ॥ २८४ ॥ शिवस्याराधनाच्चैव गंगायाउपसेवनात् ॥ गतिंशुभांसाप्राप्नोतिव्रतकृच्छ्रोपसेवनात् ॥ २८५ ॥ ३ । ७ । १२ । २० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९९ ॥ ६३ अथजज्वालयोगः ॥ मूर्द्धाऽभिषिक्तोयःकश्चिन्मथुरायामभूत्सुधीः ॥ राजसेवीमहाशूरआखेटकरतःसदा ॥ २८६ ॥ मृगयायांगतोदैवाद्घातितामृगसूकराः ॥ तत्रैकाहरिणीविप्रघातितागर्भसंयुता ॥ २८७ ॥ तद्गर्भस्थौहतौवत्ससुशुभौमृगशावकौ ॥ सहायाभ्यांयुतेनैवकृतंकर्माऽतिदारुणम् ॥ २८८ ॥ ताभ्यांमिलित्वाभुक्त्वाचाभूवंस्तेपापभागिनः ॥ नृपःकालेमहाभागप्राप्तःशत्रुपुरंतदा ॥ २८९ ॥ सशौर्य्यकर्मणाविप्रघातयित्वारिपून्बहून् ॥ घातितःसोपिबहुभिःप्रहारैरतिदारुणैः ॥ २९० ॥ संग्रामभूमौसमृतःप्रातःस्वर्गपुरंतदा ॥ भुक्त्वानानाविधान्भोगान्सजातोब्राह्मणोधुना ॥ २९१ ॥ चंचलश्चातिचतुरःसर्वशास्त्रार्थकोविदः ॥ धनैर्नानाविधैर्युक्तो गौरांगोरक्तलोचनः ॥ २९२ ॥ १ । ३ । ८ । १२ । १६ । २० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७७ ॥ ६४ ॥ अथजुद्धयोगः ॥ बभूवब्राह्मणःकश्चिद्वंगदेशेवसन्सुधीः ॥ दत्तानितेनविप्रेभ्योदानानिजातिशक्तितः ॥ २९३ ॥ सत्पात्रेभ्यःपरंविप्रपर्वस्वपिविधानतः ॥ पापमाचरितंतेनकामलोभेनभोद्विज ॥ २९४ ॥ ब्राह्मण्यांधरितोगर्भोभाविनोर्थस्यगौरवात् ॥ स्त्रीसहायश्चकृतवान्गर्भपातंद्विजोत्तम ॥ २९६ ॥

संहि- ७२

भुक्त्वानानाविधान्भोगांस्तिर्यग्योनीः पुनःपुनः ॥ पश्चान्मानुष्यमापन्नःपुत्रदारविवर्जितः ॥ २९६ ॥ १ । ८ । १३ । २१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ ६५ अथजृंभकयोगः ॥ जृंभकेचनरोजातःपूर्वजन्मनिद्राविडे ॥ शूद्रस्त्वेकोऽवसत्तत्रकृषिवाणिज्यतत्परः ॥ ॥२९७॥धनिकस्यहृतंद्रव्यंनदत्तंलोभहेतुना ॥ आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ पापाच्चनरकंगत्वापुनरागत्यभूतले॥२९८॥ १ । २ । ४ । ८ । १३ । २० । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि९२॥ ६६ अथजनार्दनयोगः ॥ कश्चिद्वैश्यकुलेपूर्वंब्रह्मावर्तेऽवसत्तदा॥ कालिदासइतिख्यातःपत्नीपुत्रसमन्वितः ॥२९९॥ तस्मिन्ग्रामेऽवसत्त्वेकोब्राह्मणःपंडितःसच ॥ तेनविप्रेणवैश्येचद्रव्यंदत्त्वाचपुष्कलम्॥ ॥३००॥स्थापितंतद्गृहेद्रव्यंपात्रेताम्रमयेद्विज ॥ सविप्रस्तीर्थकेगत्वाकाश्यांचमृत्युमाप्तवान् ॥३०१॥ तस्यपुत्रस्तुयाचितवान्पितृद्रव्याणि चानघ ॥ नदत्तंतेनवैश्येनसर्वस्वंभक्षितंद्विज ॥३०२॥ किंचिद्दानार्चनंकृत्वाबहुवर्षांतरेमृतः ॥ पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन ॥ ॥३०३ ॥ इहजन्मनिमहाभागपीड्यमानोमुहुर्मुहुः ॥ गर्भपातोमृतसुतोजायतेनात्रसंशयः ॥ ३०४ ॥ १।५।१०।१५।२०।२५।२९ वर्षेषु कष्टम् ॥ परमायुर्वर्षाणि ६८ ॥ ६७ अथजयीयोगः ॥ जयीयोगेचयोजातःपूर्वजन्मनिब्राह्मणः ॥ विद्यावेदविहीनश्चपरसंतापकारकः ॥ ३०५ ॥ एकस्मिन्समयेविप्रद्रव्यलोभेनब्राह्मणः ॥ विश्वासघातमकरोत्तेनाऽभूद्धर्मनाशकः ॥ ३०६॥ एवंस्वल्पतिथेकालेसविप्रःपंच तांगतः ॥ विश्वासघातपापाच्चसर्वोदेहोरुजाकुलः ॥ दारिद्र्येणभवेत्पीडाचोद्यमेहानिरेवच ॥ ३०७॥ ३ । ८ । १० । २० । २५ वर्षेषु कष्टम् ॥ परमायुर्वर्षाणि १०० ॥ ६८ अथजीतायोगः ॥ कश्चिद्वैश्यःपुराजातोह्यंगदेशेतदानघ ॥ माधवेतिसमाख्यातःक्रयविक्रय णेरतः ॥ ३०८ ॥ व्यापारेनिर्गतोदैवात्पूर्वदेशेतदानघ ॥ कृत्वाप्राप्तिंधनस्याऽयंहर्षगद्गदमानसः ॥ ३०९ ॥ ब्राह्मणानांकृतासेवादानं

दत्त्वास्वशक्तितः ॥ स्वदेशेपुनरागत्यकृतंकर्मतुदारुणम् ॥ ३१० ॥ दृष्ट्वास्वीयांसकोपेनपरजारसमागताम् ॥ खड्गेनघातितासाचपापमा संहि.
ऽऽचरितंत्त्विदम् ॥ रोगाकुलोऽत्रजननेवंशवृद्धिर्नजायते ॥३११॥ १।४।६।९।१७। २७। ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥
७५ ॥ ६९ अथजनारातियोगः ॥ आसीज्जन्मांतरेपूर्वंचोत्कलेनगरेवसन् ॥ बुद्धिनाथइतिख्यातोब्राह्मणोद्यूतकर्मकृत् ॥ ३१२ ॥ पर
कन्यांतदाविप्रविक्रयामासलोभतः ॥ तेनपापाऽनुसारेणपुत्रोनजायतेधुना ॥ ३१३ ॥ कन्याश्चबहवोजाताःपुत्रोनैवचनैवच ॥ कन्या
दानाद्भवेत्पुत्रोनान्यथाद्विजसत्तम ॥ ३१४ ॥ १।३।८। ११।१८।२०।२८ वर्षेषुकष्टम् ॥ ज्वरादिवमनकफार्शसादिभिर्जले
श्वभीतिः ॥ परमायुर्वर्षाणि ५८ ॥ ७० अथजलदयोगः ॥ पूर्वजन्मनिवैश्योऽभूद्भार्य्याविप्रस्यसात्त्विकी ॥ पतिश्चापितदा
तस्यब्राह्मणोज्ञानसत्तमः ॥ ३१५ ॥ अप्रसूताप्रियातस्यचपलाचारुलक्षणा ॥ वैश्येनधर्षितासाचलोभमोहादिविभ्रमैः ॥ ३१६ ॥
अज्ञानात्काममिच्छंतावुभावपिहठेनच ॥ तावत्कालवशेनैवब्राह्मणः पंचतांगतः ॥ ३१७ ॥ सवैश्योदैवयोगाच्चभाविनोर्थस्यवैबला
त् ॥ तांचवैधर्षयामासबहुकालगतागतैः ॥ ३१८ ॥ व्यभिचारवशात्तत्रधनंसर्वंविनिश्चितम् ॥ गृहीतंधूर्तयालोभाद्वैश्यस्यतुद्विजोत्तम ॥
॥ ३१९ ॥ ब्राह्मणीनिधनंप्राताव्यभिचारपराऽसती ॥ वैश्योपिनरकंगत्वाबहुवर्षाणिभोगभाक् ॥ इदंजन्मद्वितीयंतुबहुशोव्याकुलः सदा
॥ ३२० ॥ १।२।५।८।१३।२०।२७।२९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७६ ॥ ७१ अथजज्ञासीयोगः ॥ आसीज्जन्मांतरे
चैवब्राह्मणःपूर्वकेवसन् ॥ देवरामइतिख्यातःपत्नीपुत्रसमन्वितः ॥ ३२१ ॥ देवाऽऽगारेसदाऽतिष्ठद्दाहुजस्यसहायतः ॥ देवद्रव्यापहरणं ७३
कृतंरात्रौद्विजोत्तम ॥ ३२२ ॥ तेनपापानुसारेणकुष्ठरोगेणपीडितः ॥ सर्वांगेजायतेदुःखंपुत्रोजातोमृतःसच ॥ ३२३ ॥ १।३।८।१२

१।७।२१।२८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ७२ अथजदुयोगः ॥ जदुयोगेचयोजातोबाहुजःपूर्वजन्मनि ॥ देशेकारूषकेचैवनिव
सन्पूर्वजन्मनि ॥ ३२४ ॥ माधवेतिसमाख्यातःपत्नीपुत्रसमन्वितः ॥ एकदाचंद्रमोग्रस्तेभूमिदानंद्विजेददौ ॥ ३२५ ॥ पुनर्गृहीतासातेन
लोभाकुलितचेतसा ॥ तेनपापानुसारेणगतोलोकेचभास्करे ॥ पुनरागत्यमेदिन्यांबहुकष्टसमन्वितः ॥ ३२६ ॥ १।३।५।८। १२। १६।
२०। २८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ४९ ॥ ७३ अथजम्भारातियोगः ॥ जम्भारातौचयोजातोवैश्योनामसुदर्शनः॥ कुंडिनेनगरेचैव
निवसन्पूर्वजन्मनि ॥ ३२७ ॥ कृतवान्दारुणंकर्मगोत्रघातंतदाऽनघ ॥ भुक्त्वानानाविधान्भोगान्यमलोकेतदाऽनघ ॥ ३२८ ॥ पुनर्वै
मानुषींयोनिंगौरांगोदक्षिणेतिलः ॥३२९॥ २। ४। ६। ८। १२। १६। २०। २५। २७। ३५। ३७ वर्षेषुकष्टम ॥ परमायुर्वर्षाणि
९३॥७४अथजसोमतियोगः॥जसोमतियोगेयोजातःपूर्वजन्मनिबाहुजः॥कृत्वातुविविधान्पुण्यान्ब्राह्मणाश्चापिपूजिताः॥३३०॥तत्रभावि
बलात्पुत्रगर्भिणीचशुनीहता ॥ तेनपापानुसारेणनरकंगत्वासबाहुजः ॥ ३३१ ॥ भुक्त्वावर्षसहस्राणिचागतोभूमिमंडले ॥ इदंजन्मतृतीयं
तुमानुषोजायतेऽधुना ॥ ३३२ ॥१।४।६।८।१२।१५ ।२५।२७। वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ ७५ अथचैतन्ययोगः ॥ बभूवमुख
जःकश्चिद्विद्याधनसमन्वितः ॥ नानाकलासुकुशलोविष्णुभक्तिपरायणः ॥ ३३३ ॥ राहुग्रस्तेहिचन्द्रेतुसर्वस्वंब्राह्मणेददौ ॥ तत्रभाविबला
त्पुत्रपापमाचरितंत्विदम् ॥ ३३४ ॥ धर्षिताक्षत्रियातेनकामलोभाच्छुभानना ॥ प्रताडितःपतिस्तस्यास्तेनदैवहतेनतु ॥ ३३५ ॥ ततो
मृत्युवशंप्राप्तोगतोसौयमशासनम् ॥ शुभाशुभफलंभुक्त्वादिव्यवर्षसहस्रकम् ॥ ३३६ ॥ अस्मिञ्जन्मनिदानेनमानुषत्वंगतोधुना ॥ सुरूपदे
हःसद्बुद्धिःस्त्रीपुत्रधनसंयुतः ॥ ३३७ ॥ शूरोदाताप्रधानश्चदेशेदेशेतिविश्रुतः ॥ किंचित्पापरतत्वेनधूर्तोमनसिपीडितः ॥ ३३८ ॥ १।३।

६।१०।१५।१९।२१।२६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७॥७६ अथचैनयोगः ॥ कश्चित्क्षात्रकुलेविप्रपूर्वजन्मनिभूमिपः ॥ गिरिवासीमहादुष्टश्चौरकर्मपरायणः ॥ ३३९ ॥ लुंठितोब्राह्मणस्तेनमार्गेसंताडितोभृशम् ॥ तत्ताडनान्महत्पापंमृतःकालेद्विजोत्तमः ॥ ३४० ॥ गतेबहुतिथेकालेसजातोब्रह्महाऽधुना ॥ गंगायमुनयोर्मध्येक्रूरकर्मामहोद्यमी ॥ ३४१ ॥ १।४।८।१०।२०।२३ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ७७ अथचारार्कियोगः ॥ अथासीद्बाहुजाकाचिद्भर्तृप्रियरतासदा ॥ दानधर्मरतासाध्वीविप्राणांपूजनेरता ॥ ३४२ ॥तथादेवात्सासुभगाद्द्रव्यलोभरतासदा ॥ सायोषापुत्रमददद्विषंलोभवशेनवै ॥ ३४३ ॥ मृतः सविषदोषेणगृहीतंतद्धनंस्वयम् ॥ पतिस्तस्यामृतस्तत्रपुत्रदुःखेनदुःखितः ॥ ३४४ ॥ पापमाचरितंचोग्रंस्वपुत्रवधसंज्ञकम् ॥ प्राप्तायमपुरंभुक्तापूर्वपुण्याच्छुभानना ॥ ३४५ ॥ पूर्वपुण्यप्रभावेणसाजाताबाहुजेकुले ॥ सारक्तगौराधर्मज्ञासदापुण्यपरायणा ॥ ३४६ ॥१।३।८।१२।१५।१८।२०।२५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ ७८ अथचिरबुरायोगः ॥ कश्चिद्द्विप्रकुलोत्पन्नोदेहावयवशोभितः ॥ सदाचारःसुशोभाढ्योदयार्द्रोयमतत्परः ॥३४७ ॥ क्रयविक्रयकर्ताचाकिंचिद्व्यापारवान्भुवि ॥ तस्यप्रियाशुभाऽऽचारापतिभक्तिपरायणा ॥ ३४८ ॥ दासीपुत्रोहतोदैवात्पापमाचरितंत्विदम् ॥ तेनपापानुसारेणसजातश्चात्रपुत्रक ॥ ३४९ ॥ १।३।८।१२।१८।२२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६६॥ ७९ अथचवणयोगः ॥ पूर्वजन्मनिसमुत्पन्नःकिंचिद्भूमिपतिस्तदा ॥ तावज्जन्मनिवैश्यस्तुपरवित्तापहारकः ॥ ३५०॥ द्यूतकर्मणिनिरतोनानालोकाऽभिवंचकः ॥ ग्रामाधीशस्यनिकटेसर्वंभाषितवांश्चसः ॥ ३५१ ॥ कश्चिद्विप्रोऽवसद्ग्रामेशांतोदांतःक्षमीसदा ॥ पुत्र्यःपंचतथासप्तपुत्रवित्तेनसंयुतः ॥ ३५२ ॥ कालेचैवमृतेविप्रेराज्ञासर्वंस्वमाहृतम् ॥ निराधारासुताजातानाकारिद्विजभोजनम् ॥ ३५३ ॥ क्रियाकर्मकृतंनैवसर्वंराज्ञाहृतंचयत् ॥

कृत्वापराधंसक्षत्रियोभूतिनासह ॥ ३९४ ॥ म्लेच्छैर्विनिहतोमार्गेगतोराजायमालयम् ॥ तेनपापानुसारेणधनपुत्रविवर्जितः ॥
॥ ३९५ ॥ १ । २ । ८ । १२ । १८ । २२ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९० ॥ ८० अथचातृकयोगः ॥ ब्राह्मणोऽभूत्कुरुक्षेत्रे
कृषिकृद्वेदपारगः ॥ स्वज्ञातिकस्यचान्यस्यवृत्तिलोपमकारयत् ॥ ३९६ ॥ तेनयुद्धंमहाघोरंतस्यजातामृतिस्तदा ॥ वृत्तिलोपीद्विजः
कालेगतश्चयमशासनम् ॥ ३९७ ॥ स एवचद्विजोजातोवेदाभ्यासाच्चपुत्रक ॥ कुष्ठक्षययुतःपापाद्युवभावेद्विजोत्तम ॥ ३९८ ॥ १ । २ ।
५ ।८ ।१२ । १६।२२।२७। ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७२ ॥ ८१ अथचतुरयोगः ॥ आसीज्जन्मांतरे चैवबाहुजःसरयूतटे ॥
राजाचघातितस्तेनपापमाऽऽचरितंत्विदम् ॥३९९॥आयुषस्तुसमाप्तित्वात्समृतः कालचोदितः ॥ सराजयक्ष्मरोगेणयुक्तः स्यादन्यजन्म
नि ॥ ३६० ॥ अस्मिंस्तुवयसिविप्रसोपिमानैर्वियुज्यते ॥ महापापोद्भवैरोगैःपीड्यमानोमुहुर्मुहुः ॥३६१॥२।८।१३।१९।२५।२८। ३७
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६५ ॥ ८२ अथचाशनयोगः ॥ कुलद्वयाऽऽनंदकरीपूर्वजन्मनिवैश्यजा ॥ बभूवभर्तृसुहृदातदाज्ञापालिनीस
ती ॥ अत्रजन्मनिसाविप्राकाश्यांजाताहिपुत्रक ॥ ३६२ ॥ १ ।४ । ७ । १० । १२ । १५ । २० । २३ । २८ वर्षेषुकष्टम् ॥ परमा
युर्वर्षाणि ६३ ॥ ८३ अथचतुर्भुजयोगः ॥ कश्चिद्द्विजोमहाभागमैथिलेनगरेवसन् ॥ अंधदेवइतिख्यातः पत्नीपुत्रसमन्वितः ॥ ३६३ ॥
विष्णोश्चाऽऽराधनेनिष्ठःपरोपकरणेतथा ॥ विद्यादानंतथाकृत्वाह्यर्भकाःशिक्षिताभृशम् ॥ ३६४ ॥ एवंनिवसतस्तत्रबहुवर्षगतागतैः ॥
एकस्मिन्समयेविप्रपापमुग्रमुपार्जितम् ॥ ३६५ ॥ताडितश्चस्वशिष्यस्तुविद्यार्थेचैकदाऽनघ॥ तेनदुःखेनच्छात्रोऽसावन्धोपिचबभूवह ॥
॥ ३६६ ॥ विप्रश्चकालेसंप्राप्तेमृतःस्वर्गंतदागतः ॥ पूर्वपुण्यप्रभावेणसजातोब्राह्मणोधुना ॥ सर्वसौख्येनसंयुक्तोयौवनेनेत्रकष्टितः ॥

॥ २६७ ॥ १ । ३ । ५ । ८ । ११ । १५ । १९ । २३ । २७ । २९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६६ ॥ ८४ ॥
अथचरांगीयोगः ॥ बाहुजश्चाभवत्कश्चिदांत्रवेद्येतदाऽनघ ॥ कृषिकर्मोद्यमेमग्नोनिष्ठुरश्चविशेषतः ॥ ३६८ ॥ एकस्मिन्समये
विप्रकृतंकर्मजुगुप्सितम् ॥ वीर्यंहत्वागोसुतस्यनासिकायांददौगुणम् ॥ ३६९ ॥ तेनपापानुसारेणमृत्वासनरकेगतः ॥ पापात्पापफलं
भुक्त्वायोनिंभुक्त्वाकथंचन ॥ ३७० ॥ षष्टिवर्षसहस्रांतेचागतोभूमिमंडले ॥ यौवनेमेहरोगश्चभूत्वापिम्रियतेशिशुः ॥ ३७१ ॥ १ । ३ ।
८ । १३ । १७ । २० । २४ । ३२ । ३६ । ३९ । ४० । ४५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०६ ॥ ८५ अथचोलरोमायोगः ॥ १ ॥
आसीज्जन्मनियानारीचेंद्रप्रस्थस्यसन्निधौ ॥ बाहुजस्यगृहेविप्रसर्वसम्पद्युतातदा ॥ ३७२ ॥ सगर्भासाबभूवाऽथकृतंकर्मचदारुणम् ॥ मुष्टि
काहननंकृत्वाचोदरस्ताडितोभृशम् ॥ ३७३ ॥ तेनदुःखेनभोविप्रगर्भपातोबभूवह ॥ मूर्छिताज्वरदाहेनसोमृताद्विजसत्तम ॥ भुक्त्वापापं
चनरकेपुनरागत्यभूतले ॥ ३७४ ॥ १ । ३ । ८ । १३ । १५ । २० । २६ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ११० ॥ ८६ अथचालक
योगः ॥ चालकेचनरोजातःसर्वसम्पद्युतोऽधुना ॥ भूत्वापिम्रियतेबालःकेनतत्कर्मणावद ॥ ३७५ ॥ भृगुरुवाच ॥ शृणुपुत्रप्रवक्ष्यामिय
त्कृतंपूर्वजन्मनि ॥ नर्मदानिकटेपूर्वंब्राह्मणःशास्त्रकोविदः ॥ ३७६ ॥ वेदविद्याऽनुरक्तश्चशिवस्याराधनेरतः ॥ एकस्मिन्समयेविप्रवेश्य
भार्य्यावराङ्गना ॥ ३७७ ॥ आगतातस्यनिकटेदृष्ट्वाविप्रेणवैतदा ॥ हठात्तयासहरतिःकृताऽतःसाचगर्भिणी ॥ ३७८ ॥ मृतातेनैवदुःखेन
पापमाचरितंत्विदम् ॥ सोपिमृत्वापापफलंभुक्त्वापुण्यफलंतथा ॥ ३७९ ॥ षष्टिवर्षसहस्रांतेपुनरागत्यभूतले ॥ गौरांगःपृथुदेहश्चसाज
सश्चतुरःसुधीः ॥ ३८० ॥ १ । ३ । ९ । १५ । २० । २८ । ३१ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६३ ॥ ८७ अथचतुरानन

योगः ॥ पूर्वजन्मनिभोविप्रदेशेकौशलकेपुरा ॥ राजपुत्रोऽवसत्त्वेकोबाधकोनामनामतः ॥ ३८१ ॥ पत्नीतस्यमहाशुभ्रागुणरूपसम
न्विता ॥ एकदाराजपुत्रेणगर्भिणीहारिणीहता ॥ ३८२ ॥ प्रत्यहंमृगमांसेनाऽपोषयत्स्वतनुंतदा ॥ शरीरेवृद्धताजातादयातस्य नजायते
॥ ३८३ ॥ ततोवैमरणंप्राप्तंपत्नीभूतासतीतदा ॥ सत्यलोकेगतःसोपिभार्य्यायाःसुकृतेनतु ॥ ३८४ ॥ भुक्त्वाकल्पमितं पुण्यंसत्यलोके
द्विजोत्तम ॥ पुनःपुण्यक्षयेजातेमानुषत्वंगतोधुना ॥ पूर्वजन्मविपाकेनमृतवत्सत्वमाप्तवान् ॥ ३८५ ॥ १ । ३ । ८ । १३ । १९ । २७ ।
३७ । ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६२ ॥ ८८ अथचारीयोगः ॥ आसीज्जन्मांतरेचैवब्राह्मणोवेदपाठकः ॥ पत्नीरुद्रवतीनाम्नादुः
शीलाकर्कशासदा ॥ ३८६ ॥ वेदपाठरतोनित्यंषडंगंप्रत्यहंपठेत् ॥ एकस्मिन्समयेविप्रतत्रग्रामाधिपोमृतः ॥ ३८७ ॥ मरणेतस्यवैजा
तेतद्विप्रश्चनिमंत्रितः ॥ भुक्तंतेनतदादेवक्षत्रियस्यक्रियासुच ॥ ३८८ ॥ गृहीतंतस्यवैदानंशय्याचैवगजादिकम् ॥ स्वगृहेपुनरागत्यहर्षग
द्गदमानसः ॥ ३८९ ॥ ततोबहुतिथेकालेतस्यविप्रस्यपंचता ॥ गतोऽसौयमलोकेचनरकेदारुणेभृशम् ॥ ३९० ॥ अजव्याघ्रकृमीणां
तुयोनीर्भुक्त्वापृथक्पृथक् ॥ मानुषत्वंपुनर्जातंपूर्वकर्मविपाकतः ॥ ३९१ ॥ पुत्राःकन्यामृताविप्रतस्यचविविधास्तथा ॥ मृतवत्सोभवे
त्त्वासौरोगाश्चविविधास्तथा ॥ ३९२ ॥ गायत्र्याश्चजपैर्देवचतुर्विंशतिलक्षकैः ॥ पुत्रोभवेत्तस्यरोगानाशंयास्यंतिचाशुवै ॥ ३९३ ॥ १ । ४ ।
८ । १४ । १६ । २० । २७ । ३० । ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ८९ अथचौर्य्ययोगः ॥ कान्यकुब्जेशुभेदेशेपुरासूर्य्यपुरेतथा ॥
रुद्रशर्माद्विजस्तत्रपत्नीतस्यप्रभावती ॥ ३९४ ॥ वेदपाठरतोनित्यंदारिद्र्येणप्रपीडितः ॥ कर्कशाभामिनीतस्यनिष्ठुरंभाषिणीसदा ॥
॥ ३९५ ॥ एकदासूर्य्यग्रहणेतैलकारस्तदागतः ॥ गंगामध्येगतोदानंतस्मैविप्रायवैददौ६ ॥३९६॥ प्रददौलक्षसंख्याकांस्वर्णमुद्रांसदक्षि

नाम् ॥ प्रतिगृहीत्वाथोदानंगृहंगत्वाद्विजस्तदा ॥ ३९७ ॥ व्ययंचकारद्रव्यस्यभार्य्यापुत्रसमन्वितः ॥ वेदपाठंपरित्यज्यविषयान्सेवते
सदा ॥ ३९८ ॥ आयुषस्तुसमाप्तत्वात्सविप्रःपंचतांगतः ॥ सगतोनरकेघोरेयमराजेनघातितः ॥३९९॥ भुक्त्वानरकजंदुःखंस्त्रीपुत्रसहित
श्वसः ॥ युगमेकंतदाविप्रप्रेतत्वेकाकजंबुकौ ॥ ततःशृणुचभोविप्रमानुषत्वंपुनर्भवेत् ॥ ४०० ॥ १ । २ ।:४ । ७ । ९ ! १४ । १९ ।
२० । २३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७०॥९० अथचनाकारयोगः ॥ कान्यकुब्जेद्विजःकश्चिन्नर्मदादक्षिणेतटे ॥ माहिष्मत्यांवसंस्त
त्रवेदपाठनतत्परः ॥ ४०१ ॥ नामतःकविशर्मेतिपत्नीतस्यमनोत्सवी ॥ अत्यहंवैश्यवृत्तिश्चक्रयविक्रयकारकः ॥ ४०२ ॥ तत्रवैश्योऽवस
त्त्वेकोधनधान्यसमन्वितः ॥ वैश्यस्यतेनविप्रेणधनंनीतमृणेबहु ॥ ४०३ ॥ ततःकालवशंप्राप्तःसविप्रोमरणंगतः॥ पापात्पापफलंभुक्त्वा
योर्निभुक्त्वाकथंचन ॥ ४०४ ॥ पुनर्वैमानुषीयोनौमातृकुक्षेःसमुद्भतः॥२।८।९।१३।१६।२०।२८वर्षेषुकष्टम्॥परमायुर्वर्षाणि१ ०० ॥ ९१
अथचौर्य्ययोगः॥आंत्रवेद्येद्विजस्त्वेकःप्रतिग्राहीवसत्यसौ॥पुण्यकर्मविहीनश्चचौरकर्मरतःसदा ॥४०५ परस्त्रीलंपटोभूत्वास्वस्त्रियास्त्यागनं
कृतम् ॥ एवंबहुतिथेकालेसमृतोगदपीडितः ॥ ४०६ ॥ पापाच्चनरकेगत्वाह्यसिपत्रवनांतरे ॥ नानायोनावभ्रमत्सपूर्वकर्मानुसारतः॥मध्य
देशेसमुत्पन्नःश्यामारुणकलेवरः ॥ ४०७॥ १ । ४ । ८। ११ । १६ । १९ । २४ । २८ । २९ । ३२ । ३९वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
७८॥९२अथचटाचटायोगः ॥ गोमत्याउत्तरेविप्रक्रोशपंचप्रमाणके ॥ विष्णुदासेतिनाम्नावेदासपुत्रोबभूवह॥४०८॥प्रज्ञाकरेपुरेशुभ्रेतस्य
भार्य्याचसुंदरी ॥कृषिंचकुरुतेनित्यंब्राह्मणानांचसेवकः ॥ ४०९ ॥पित्रोश्चपरमोदासःसदाचप्रियभाषकः॥एकस्मिन्दिवसेदेवव्रतीकश्चित्स
[illegible]॥४१०॥ [illegible]क्यंकिञ्चिद्वाऽपिनप्राप्तवान ॥ अपभ्रंशंचागदत्साभिक्षुकंचैवसुंदरी ॥४११॥ विष्णुदासोगृहेनाऽभूत्तद्दिने

भुक्तचिरं ॥ विष्णुदासस्यमरणंबभूवद्विजसत्तमं॥४१२॥पश्चान्मृताचसाबालागतासानरकेतदा॥।किंचित्पुण्यावशेषेणचागताधरणातल॥
गौरस्वरूपोमतिमान्धनधान्यसमन्वितः ॥४१३॥ १।५।९।१३।१६।२०।२६।३०।३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१
९३ अथचलकाद्युतियोगः ॥ देवशर्माद्विजःकश्चिन्मध्यदेशेवसत्ततदा ॥ पौरोहित्येनभ्रष्टःसभुंक्तेचप्रतिसद्मवे ॥४१४॥ श्राद्धकर्मपरिभ्रष्टः
परपाकरतःसदा ॥ धनंचसंचितंतेनप्रतिग्राहेणवैप्रभो ॥४१५॥ मरणंचगतोविप्रोभार्याऽपितदनन्तरम् ॥ गतोऽसौनरकेघोरेपूर्वकर्मफला
दपि ॥ ४१६ ॥ युगमेकंतदाविप्रभुक्त्वानरकजंफलम् ॥ अश्वस्ययोनौगत्वाचवृषभस्यततःपरम् ॥ लब्धंजन्मचतुर्थंचमानुषत्वमिदं
शुभम् ॥ ४१७ ॥ १।५।१०।१५।२७।३२।३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६० ॥ ९४ अथछलिकयोगः ॥ मध्यदेशेपुरा
विप्रोऽवसत्त्वेकोद्विजःखलु ॥ ब्रह्मकर्मरतोनित्यंवेदवेदांगपारगः ॥ ४१८ ॥ प्रत्यहंपाठयामासचतुर्वेदान्यथाविधि ॥ लोहकारोवसत्तत्र
ब्राह्मणस्यसुहृद्द्विज ॥ ४१९ ॥ लोहकारेणयद्द्रव्यंलोहकर्मण्युपार्जितम् ॥ तत्सर्वंब्राह्मणगृहेस्थापितंप्रेमहेतुना ॥ ४२० ॥ एवंस्वल्पेगते
कालेलोहकारस्तदामृतः ॥ ब्राह्मणेनधनंभुक्तंनदत्तंतस्यभ्रातृके ॥ ४२१ ॥ आयुषस्तुसमाप्तित्वात्सविप्रःपंचतांगतः ॥ पापात्पापफलं
भुक्त्वायोनिंभुक्त्वाकथंचन ॥ जन्मन्यस्मिन्भवेत्पीडामासिमासिचहायने ॥ ४२२ ॥ १।४।११।१६।२२।२६ वर्षेषुकष्टम् ॥ पर
मायुर्वर्षाणि ६७ ॥ ९५ अथछिद्रमानंदीयोगः ॥ कान्यकुब्जेशुभेदेशेनन्दनेनामवैपुरे ॥ बोधशर्मापुरातत्रावसद्विप्रोऽतिनिर्धनः ॥
॥ ४२३ ॥ भुक्तंचसर्वदाऽनेनपरान्नंसहपुत्रकैः ॥ तस्यपत्नीचविख्याताबांधवानामवैपुरा ॥४२४॥ साऽपिभुक्तवतीचान्नंपरेषामेवसर्वदा ॥
तयोःप्रतिग्राहिणोश्चवासोऽभून्नरकेतदा ॥४२५॥ नरकाच्चविनिःसृत्यकाकश्चमहिषोऽभवत् ॥ पुनर्मनुजयोनौचपूर्वकर्मविपाकतः ॥४२६॥

१। ३। १०। १२। १६। १७। २०। २७। ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९६ ॥ ९६ अथछाकाहारीयोगः ॥ मथुरायांचयस्यांविवसंति बहवोजनाः ॥ तस्यांपुर्य्यांद्विजश्रेष्ठकुलालोधनवानपि ॥४२७॥ कुलालकर्मतस्तेनबहुद्रव्यमुपार्जितम् ॥ कर्मचंद्रेतिविख्यातस्तस्यपत्नी चदेवकी ॥४२८॥ कुलालकर्मनिरतोयात्रांकृत्वादिनेदिने ॥ एवंगतेतुवयसिवृद्धत्वंचततोभवत् ॥ ४२९ ॥ प्राप्तेवार्द्धक्यसमयेदारिद्र्येण प्रपीडितः ॥ स्वर्णकारस्यवैद्रव्यंव्यवहारेगृहीतवान् ॥ ४३० ॥ शतसंख्यामितंद्रव्यंव्ययेयातंद्विजोत्तम ॥ मृत्युंगतःकुलालोऽपिपत्नीतस्य पुरामृता ॥४३१॥ नर्मदायांतुभोविप्रद्वावपिमृत्युमागतौ ॥ तस्मात्तीर्थफलादेवस्वर्गलोकेगतावुभौ ॥४३२॥ ततःपुण्यक्षयेजातेमर्त्यलो केसमागतः॥ मनुष्येषुशुभंजन्मधनधान्यसमन्वितम् ॥ पुनर्विवाहितानारीपूर्वजन्मप्रसंगतः ॥ ४३३ ॥ १ । ३। ६। ९। १२। १७। २१। २३। ३७ वर्षेषुमहत्तरंकष्टम् ॥ परमायुर्वर्षाणि ९७ ॥ ९७ अथछमापतियोगः ॥ अवंतिकायाःपुर्य्याश्चदक्षिणेपञ्चक्रोशके ॥ पुरं दरइतिख्यातेपुरेचैवातिशोभने ॥ ४३४ ॥ तत्राऽवसत्सर्वदाहिब्राह्मणोवेदपारगः ॥ किशोरशर्माविख्यातःक्रयविक्रयणेसुधीः ॥ ४३५ ॥ कष्टेनतुमहाद्रव्यंसंचितंचदिनेदिने ॥ धनंचबहुधाकृत्वापुण्यकार्य्येनदत्तवान् ॥ ४३६ ॥ ततोभ्रात्रेकनिष्ठायभागोनैवप्रदापितः ॥ कोटि त्रयमितंद्रव्यंस्वगृहेचैवसंचितम् ॥ द्रव्यस्यैवविभागायमृतोभ्राताचविग्रहे ॥ एवंबहुगतेकालेकिशोरोपिमृतःसवै ॥४३७॥ गतोसौनरकेघोरे युगमेकोनविंशतिः ॥ पुनःकर्मवशादेवगर्दभत्वेचजातवान् ॥४३८॥ वृकयोनौततोगत्वामानुषत्वमिहागतः॥मध्यदेशेधुनाजातःकिंचिद्वि त्तसमन्वितः ॥शीतवातेनकष्टंचजातोजातोमृतःशिशुः ॥ ४३९॥१।३।५।८।१२।१५।२६।२९।३५ वर्षेषुकष्टम्॥ परमायुर्वर्षाणि ९८॥९८ अथचस्वाद्रियोगः ॥ अवंतिकायांचपुरिरंगकारोवसत्पुरा ॥ अरंजयद्बहुविधवस्त्राणिचद्विजोत्तम ॥ ४४० ॥ ब्राह्मणीनगरस्थैकातस्यांप्री

तेसमुद्रम्॥त्यक्तापतिव्रतांभार्य्यांब्राह्मण्याश्चपतिःखलु॥४४१॥द्रव्यंचसंचितंतेननदानंनैवभोजनम् ॥ भूमिंखात्वाधनंस्थाप्यकदन्नंभुञ्ज
तेसदा॥४४२गंगायमुनयोःसंगेकिंचिद्दानंकृतंखलु ॥ मरणंतस्यवैजातंतस्यभार्याविवाहिता ॥४४३॥ तत्पुरेचसतीजातालीलानामपति
व्रता ॥ सत्यलोकंगतौद्वौचदिव्यवर्षसहस्रकम् ॥४४४॥ पुनःपुण्यक्षयेजातेचेहजातोहिमानुषः ॥ मध्यदेशेतुविख्यातोधनधान्यसमन्वितः
॥४४५॥पुत्राश्चबहवोजाताःकोपितेषांनजीवति ॥ ब्राह्मणीगमनात्पापात्त्वंजोपिजायतेधुना॥४४६॥१।५।८।११।१७।२१।२६।३०।३७
३९ ।४०वर्षेषुकष्टम्॥परमायुर्वर्षाणि६९॥९९अथचलेखायोगः॥उज्जयिन्यांपश्चिमेभागेवैश्योऽवसच्चभाग्यवान्॥ धनधान्यसमायुक्तःस्वक
र्मनिरतःसदा ॥ ४४७॥ एवंमध्यवयःप्राप्तेदारिद्र्येणप्रपीडितः ॥ व्यापारार्थंततोदेवविप्रस्वर्णंगृहीतवान् ॥४४८॥ पलंविंशतिमानंचव्ययं
यातंदिनेदिने॥ततोवैश्यस्यमृत्युर्वैभार्य्ययासहितस्यच ॥ ४४९ ॥ षष्टिवर्षसहस्राणिभुक्त्वाचैवशुभाशुभम् ॥ ततोवैमानुषीयोनौचागतो
धरणीतले ॥ धनधान्यसमायुक्तःपुत्रकन्याविवर्जितः ॥ ४५० ॥ १।५।८।१२।१७ एषुवर्षेषुप्रायःकष्टम् ॥ परमायुर्वर्षाणि ६७ ॥ १००
अथचीकूटाद्रियोगः॥ अयोध्यानगरीश्रेष्ठाततःक्रोशद्वयात्परे ॥ अग्निकोणेतदाविप्रसंगोग्रामश्चविश्रुतः ॥४५१॥ तस्मिन्ग्रामेऽवसत्त्वेकोब्रा
ह्मणोदौत्यतत्परः ॥ मद्यपानरतोनित्यंचौरविद्यारतः सदा ॥ ४५२ ॥ परस्त्रीरमणेधूर्तोवेश्यासुरततत्परः॥ चोरितंद्रव्यमुत्पाद्यदत्तंभागंच
तुर्थकम् ॥४५३॥ एवंगतेतुवयसितस्यमृत्युर्बभूवह ॥ नरकेतंपातयामासुर्यमदूतायमाज्ञया ॥५५४॥ सप्तवर्षसहस्राणिरौरवेपरिपाचितः॥
महाकष्टंभवेत्तस्यसूचीमुखक्रमादिभिः ॥४५५॥ पुनःकर्मवशादेवनरकान्निस्सृतोयदा॥ बिडालकाकयोनौचततोभूत्वाचमानुषः॥ सर्वांगे
जायतेपीडाचोद्वेगोमानसीव्यथा ॥४५६॥ १।३।५।९।१३।१६।२६।३१।३७ वर्षेषुकष्टम्॥ परमायुर्वर्षाणि ६३ ॥ १०१ अथचंपकारूढ

योगः॥कावेरानिकटेचैववैश्यानामप्रभाकरः॥ धनधान्यसमायुक्ताद्रव्यस्योत्पादनेरतः ॥४५७॥ एकस्मिन्समयेविप्रसपद्यातःकृतोभृशम् ॥
वनेदावाग्निदाहेननितरांमुनिसत्तम॥४५८॥एकदामकरेमाघेसस्नातश्चरवौगते॥तेनपुण्यानुसारेणस्वर्गेगत्वाचवैश्यजः॥४५९॥ पापाच्चनर
केगत्वाह्यपिवर्षसहस्रकम् ॥ पुनरागत्यमेदिन्यांकिंचिद्वित्तसमन्वितः॥कंदतेसर्वदिवसेपूर्वकर्मानुसारतः॥४६०॥१।४।८।१३।१५।१७।१९
२०।२४।२८।३०।३७वर्षेषुकष्टम्॥परमायुर्वर्षाणि६९॥१०२अथचर्वगीयोगः॥आसीज्जन्मांतरेचैवकेवटःकीकटेवसन् ॥ मीनांश्चघातयन्नि
त्यंतत्सकाशाद्धनंकृतम्॥४६१॥दत्तानितेनदानानिचंद्रग्रस्तेचपर्वणि॥एकस्मिन्समयेविप्रब्राह्मणस्यप्रसंगतः॥४६२ ॥ तीर्थाटनंकृतंसम्य
कथांश्रुत्वातथाऽनघ ॥ एवंगतेतुवयसितस्यमृत्युरभूत्पुरा ॥४६३॥ पापात्पापफलंभुक्त्वा योनिंभुक्त्वाकथंचन ॥ पुनरागत्यमेदिन्यांधन
धान्यसमन्वितः ॥४६४॥ पादजस्यकुलेजातोदानाच्चैवधनाधिपः ॥ यौवनेराजरोगेणपीडयमानकलेवरः ॥ ४६५ ॥ १।३।८।१२।१६।
२१ । २६ । २७ । २९ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७८ ॥१०३॥ अथचारुमोचनयोगः ॥ कश्चिद्दासकुलेजातःकीटदेशेतदान
वं ॥ दत्तानितेनदानानिब्राह्मणेषुस्वशक्तितः ॥४६६ ॥ एकस्मिन्समयेविप्रकृत्वाव्यापारनिश्चयम् ॥ परदेशात्कृताप्राप्तिर्द्रव्याणिविविधा
निच ॥ ४६७ ॥ शिवालयःकृतःसम्यक्कन्योद्वाहमथाऽकरोत् ॥ एवंहिन्यवसत्तत्रबहुवर्षगतागतैः ॥ ४६८ ॥ स्वकीयांगृहिणींत्यक्त्वापर
भार्य्याचमानिता ॥ तेनपापानुसारेणयमलोकंचप्राप्तवान् ॥ ४६९ ॥ यमलोकात्परिभ्रष्टश्चागतोधरणीतले ॥ ईषद्गौरोमध्यदेहोदक्षिणांगे
प्रतिहितः ॥ ४७० ॥ १ । २ । १८ । २२ । २७ । २९ । ३२ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७२ ॥ १०४ अथचर्मकयोगः ॥ 
लंजनिकायानारीगांधारेनगरेऽवसत् ॥ शिवदेवीतिविख्यातासुंदरीचारुशोभना ॥४७१॥ पतिंत्यक्त्वाचसानारीपरपुरुषरताऽभवत् ॥देशे

[illegible]तुस्वैरिणीद्विजसत्तम॥४७२॥एकस्मिन्समयेविप्रजारमित्रप्रसंगतः॥ गंगास्नानेकृतंसम्यक्सामृतातत्रभोसुत ॥४७३गंमामृत्यु
[illegible]तुब्रस्वर्गेगत्वाचसांगनां॥पुनरागत्यमेदिन्यांपूर्वपुण्यप्रभावतः॥४७४॥ईषद्गौरांगवदनाचारुकिञ्जल्कशोभना ॥ पतिप्रीतिरताचोग्रार
तितृप्तिर्नजायते ॥ ४७५ ॥ पुत्रार्थचितानित्यंचगुप्तपापकृताद्भवेत् ॥ आद्येतृतीयेवर्षेचपीडातस्यतथाक्वचित् ॥ ४७६ ॥ अष्टमेनवमेव
र्षेमंगलंलभतेध्रुवम् ॥ विंशतिवर्षेत्यारिष्टंचपंचवेदाब्दकेमृतिः॥४७७ ॥ १०५ अथचंडलीकयोगः ॥ आसीज्जन्मांतरेचैवब्राह्मणःकीकटे
वसन् ॥ ब्रह्मकर्मपरिभ्रष्टोवैश्यकर्मसमाचरत् ॥४७८॥ शर्करांस्थाप्यवृषभेसम्यग्वाहितवान्द्विज ॥ मार्गेपंकेऽभवन्मग्नोवृषभोभारसंयुतः ॥
॥ ४७९ ॥ दंडेनताडितस्तेनक्रोधेनमहतावृषः ॥ तद्दुःखेनचदीनःसपंचत्वंप्राप्तवान्खलु ॥४८०॥ गतेकालेतुमृत्वासविप्रोऽपिनरकंगतः ॥
अस्यजन्मान्यभूवन्वैबहुवर्षसहस्रकम् ॥४८१॥ पुनरागत्यमेदिन्यांकिंचित्पुण्यप्रभावतः ॥ श्यामाऽरुणोलांछनिकःश्वेतकुष्ठेनचिह्नितः ॥
॥ ४८२ ॥ १।५।९।१२।१५।२१।२७।३७वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०५ ॥ १०६अथचंपाकांतियोगः ॥ किरातेनगरेपूर्वंब्रह्मदत्तो
पिब्राह्मणः ॥ सदाऽऽचारीव्रतीचैवब्रह्मकर्मपरायणः ॥ ४८३ ॥ श्रौतस्मार्तनिरतश्चशिवस्याऽऽराधनेरतः ॥ परोपकरणेनिष्ठःपरमैश्वर्य्य
संयुतः ॥४८४॥ एकस्मिन्समयेविप्रक्रोधेनमहतावृतः ॥ सविप्रःस्वस्यगेहंतुदग्धंहिकृतवान्खलु ॥४८५॥ जीवाश्चबहवस्तत्रभस्मीभूताश्च
दारुवत् ॥ तेनपापानुसारेणसविप्रःपंचतांगतः ॥ ४८६ ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गंतथाऽनघ ॥ बहुवर्षसहस्रांतेपुनरागत्यभूतले ॥
॥ ४८७ ॥ मध्यदेशेसमुत्पन्नःसुंदरःप्रियवाचकः ॥ दानेधर्मेमतिस्तस्यचंचलश्चकलात्मकः ॥ ४८८ ॥ १ । ५ । ८ । १३ । १६ वर्षेषु
कष्टम् ॥ परमायुर्वर्षाणि ७० ॥ १०७ अथचरेडकयोगः कश्चिद्द्विजकुलेपूर्वंब्रह्मपुत्रस्यसन्निधौ ॥ इंद्रजालीमनोभ्रष्टोभूतप्रेतादिसेवकः ॥

॥ ४८९ ॥ लोकानांवंचनेव्यग्रःपरकार्य्यविनाशकः॥एकस्मिन्समयेविप्रतीर्थयात्रामथाऽकरोत्॥४९०॥आयुषस्तुसमाप्तित्वान्ममारपथि भूसुरः ॥ पुनरागत्यमेदिन्यांमनुष्यत्वंगतोऽधुना ॥४९१॥१।३।८।१२।१६।२०।२९।३६ वर्षेषुकष्टम्॥परमायुर्वर्षाणि६९॥ १०८अथचंद्रालीयोगः ॥ कश्चिद्द्विजकुलेपूर्वंब्रह्मपुत्रस्यसन्निधौ ॥ देवराजइतिख्यातःपत्नीपुत्रसमन्वितः॥४९२॥ सर्वविद्याविवेकीचतेनकोपिनपाठितः विद्यागर्वयुतस्तत्रविचचारमहीतले॥४९३॥ दत्तानितेनदानानिपर्वस्वपिहिभक्तितः॥ गयाश्राद्धमथोकृत्वाब्राह्मणाश्चापितोषिताः॥४९४॥ एवंनिवसतस्तत्रबहुवर्षगतागतेः ॥ आयुषस्तुसमाप्तित्वात्सविप्रःपंचतांगतः ॥४९५॥ चंद्रलोकेकृतोवासःपितृलोकेततःपरम्॥ पितृलोकात्परिभ्रष्टश्चागतोधरणीतले ॥ गौरस्वरूपोमतिमान्धनधान्यसमन्वितः ॥ ४९६ ॥ ३ । ६ । १३ । २० । २८ । ३५ । ४० वर्षेषुकष्टम् परमायुर्वर्षाणि६१॥१०९ अथचन्द्रमदीयोगः ॥ वाराणस्यामभूत्कश्चिद्ब्राह्मणोवेदवित्पुरा ॥ वेदानध्यापयामासस्वशिष्यान्सर्वदासच ॥ ॥ ४९७ ॥ मृत्वास्वर्गंगतश्चासौभुक्त्वाभोगांश्चशाश्वतान् ॥ आगत्यचधरापृष्ठेवेदशास्त्रस्यपारगः ॥ ४९८ ॥ १६।२० । २९वर्षेषुकष्टम्॥ परमायुर्वर्षाणि ७९ ॥ इतिचवर्गयोगः ॥ इतिश्रीयोगसागरेसभार्चितदेशेशुक्रभृगुसंवादेचवर्गादिनवोत्तरशतयोगकथनंनामपञ्चमं प्रकरणम् ॥ ५ ॥ अथटवर्गयोगः ॥ देशेकलिंगकेह्यासीत्पूर्वंबाहुजसंज्ञकः ॥ गंगास्नानंकृतंतेनबाहुजानांसहायतः ॥१ ॥ एकदातुकुटुम्बं चघातितंतेनजानता ॥ एकस्मिन्वैदिनेगत्वाददाहवनमद्भुतम्॥२॥एवंसुदारुणंकर्मकृत्वामृत्युंगतश्चसः॥यमाज्ञांचापिसंप्राप्यदुरितंकर्मभुक्तवान् ॥ ३ ॥ शुभाच्छुभफलंभुक्त्वापापाच्चनरकांस्तथा ॥ माघेचजाह्नवीस्नानात्सजातःपादजोधुना ॥४॥ भव्योमहोद्यमीगौरःकृशांगश्चान्धदृक्तथा ॥ बहुलोभीबहुस्त्रीकोदेवताऽतिथिपूजकः ॥ ५॥१ ।३। ८ ।१३ ।१६ ।२० । २७ । ३५ । ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि

६७॥१ अथटंकयोगः ॥ अत्रजन्मन्यसौवंध्याप्राग्भवेसुतसंयुता ॥ पूर्वपापप्रभावेणसपत्न्यागर्भघातनात ॥६॥ जातेयंपादजाऽत्रैवदुःखा
तांसुतवर्जिता ॥ प्रायश्चित्तंप्रवक्ष्यामिसर्वपापप्रणाशकम् ॥७॥ काश्यांगत्वाचविधिनाशिवमाराध्ययत्नतः ॥ व्रतैर्दानैर्महापुण्यैर्नानाविभ
वविस्तरैः ॥८॥ शिवरात्रौततःपश्चाद्दीपमालादिपुष्पकैः ॥ अर्धरात्रेमहानद्यामध्येस्नानंतुकारयेत् ॥९॥ मन्त्रैर्वरुणसूक्तैश्चनौकायांचसमा
स्थितः ॥ यएवंकुरुतेविप्रतस्यस्यात्संततिर्ध्रुवम् ॥१०॥ १।५।९।१५।१८।२२।२७।३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ४९ ॥ २ अथटं
कोरयोगः ॥ याऽकरोत्प्राग्भवेकाचिन्नारीराजवधंतदा ॥ सैवाऽत्रजन्मनिब्रह्मन्क्षयरोगनिपीडिता ॥ ११ ॥ यक्ष्मणाचक्षयंयातिधातुतः
क्षयरोगिणी ॥ धातुक्षयेक्षयंयातितच्छरीरमशाश्वतम् ॥ १२ ॥ दृढकर्मकृतंपापंतेनैवाचरितंद्विज ॥ पापस्यनाशकर्तातुनाऽस्त्युपायोऽत्र
जन्मनि ॥ १३ ॥ २ । ४ । ६ । ९ । १० । १५ । २० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७२ ॥ ३ अथटनत्कारयोगः ॥ कश्चिद्द्विजोमहा
भागह्यासीद्वंगेहिधार्मिकः ॥ गयायांद्वादशेवर्षेकृत्वाश्राद्धंविधानतः ॥१४ ॥ विधिनातत्रदत्तानिकाम्यश्राद्धानिमानद ॥ ततोभाविबला
द्विप्रब्राह्मणेनतपस्विना ॥ १५ ॥ स्थापितंतद्गृहेद्रव्यंलोभाद्दत्तंनतद्धनम् ॥ सर्वैर्मिलित्वाभुक्तंतुस्त्रीपुत्रभ्रातृभिःसह ॥ १६ ॥ ततोबहुतिथे
कालेगतोहियमशासनम् ॥ पूर्वपुण्यप्रभावेणसजातोत्रापिवैद्विजः ॥ १७ ॥ विशालाक्षोधनीमानीसुरूपःप्रीतिदोघृणी ॥ बहुग्रामाधि
कारीचपुण्यात्सर्वफलंत्विदम् ॥१८ ॥ लोभीक्रूरोमहाक्षुद्रःसदाचिंतासमन्वितः ॥ संतानसुखहीनस्तुप्रायश्चित्तेकृतेसुखम् ॥ १९ ॥ १ ।
३।८।२०।२५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९० ॥ ४ अथटनेश्वरयोगः ॥ विंध्याद्रिनिकटेपूर्वंशूद्रःपरमधार्मिकः ॥ धनमैश्वर्यमतुलं
किंचिद्देशाधिपःसच ॥ २० ॥ कार्मुकेतिसमाख्यातःशिवस्यस्मरणेरतः ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥२१॥ ब्राह्मणस्य

हृतंवित्तंलोभाकुलितचेतसः ॥ तेनपापानुसारेणगतोसौयमशासनम् ॥ २२ ॥ पुण्यात्पुण्यफलंभुक्त्वातेनाऽयंबाहुजोधुना ॥ ईषद्गौरोमन संहि-
स्वीचवामांगेनसचिह्नितः ॥ २३ ॥ प्रथमेतृतीयेवर्षेषष्ठेद्वादशकेपिच ॥ पीड्यंतेसर्वगात्राणिविंशतिवर्षांतरेतथा॥ पञ्चपंचाशदब्दान्तंकथितं
प्राणधारणम् ॥ २४ ॥ ५ अथटर्णगायोगः ॥ आसीत्पूर्वंमहाभागअयोध्यानिकटेवसन् ॥ नामतोभीष्मदेवश्चबहुस्त्रीपरिवारयुक् ॥२५॥
एकातुसुंदरीभार्य्यासुशीलाव्रतपालिनी ॥ सपत्नभावदोषेणकेनापिर्निदिताऽन्यया ॥ २६ ॥ अपभ्रंशैस्तर्जिताचसातिक्रोधेनविह्वला ॥
भीष्मदेवस्यवैचाग्रेसर्वमुक्तवतीस्वयम् ॥ २७ ॥ ततोमूर्ध्निदुर्भगासाभीष्मदेवेनताडिता ॥ सामृतातेनदुःखेनातोबभूवसपापभाक्॥ २८ ॥
किंचित्कालांतरेविप्रभीष्मदेवोपिवैमृतः ॥ स्त्रीघातपापात्प्राप्तोयंनरकेभृशदारुणे ॥ २९ ॥ पुनरागत्यमेदिन्यांकिंचित्पुण्यप्रभावतः ॥
भूत्वापिम्रियतेभार्यापुत्रसौख्यंनलभ्यते ॥ ३० ॥ १ । ३ । ५ । ८ । ११ । १८ । २० । २४ । ३१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
६५ । ६८ ॥ ६ अथटंकणायोगः ॥ कश्चिद्द्विजकुलेपूर्वं वेत्रवत्याश्चसन्निधौ ॥ हिरण्यदेवोविख्यातश्चतुरःसर्वकलात्मिकः ॥ ३१ ॥
भार्य्यामनस्विनीतस्यपरपूरुषरताचसा ॥ ब्रह्मकर्मपरिभ्रष्टापक्षिणांघातनेरता ॥ ३२ ॥ एकस्मिन्समयेविप्रतरुशाखाऽवलंबितम् ॥ शुक
स्यनीडंचाकर्षन्दष्टाव्यालेनतत्रच ॥३३॥ मृत्वादुष्टापिसाविप्रगत्वाचयमशासनम् ॥ यमलोकात्परिभ्रष्टामानुषत्वंहिचागता ॥ ३४ ॥
१।५।११।२०।२७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८८ ॥ ७ अथटोरयोगः ॥ कश्चिद्विप्रकुलेपूर्वंनर्मदायास्तटेशुभे ॥ देवशर्माचविख्या
तोभार्य्यातस्यवरांगना ॥ ३५ ॥ तृणकाष्ठयोर्व्यापारः सर्वदातेनकारितः ॥ तत्सकाशात्कृतंद्रव्यंकार्पण्येनविमोहितः ॥ ३६ ॥ नदा
[illegible]द्विजोददौ ॥ ॥ किंचित्कालांतरेविप्रः सगत्वायममंदिरे ॥ ३७ ॥ नानाजन्मान्यभूवंश्चनानावर्षसहस्रकम् ॥

धश्चान्मानुष्यमापन्नः सर्वरोगेणपीडितः ॥ ३८ ॥ १ । ३ । ८ । १३ । १६ । २० । २४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७ ॥ ८ अथटामे
श्वरयोगः ॥ टामेश्वरेनरोंजातोधनवान्पंडितः सुधीः ॥ सत्यवादीविलासीचकुनखीबहुधार्मिकः ॥३९॥ पूर्वजन्मनिक्षात्रोऽसौगौरीकुमा
रकेऽवसत् ॥ एकदातत्रभोविप्रकृतंकर्मजुगुप्सितम् ॥ ४० ॥ भ्रातृपत्न्याश्चगमनंकृतंतेनतदाबलात् ॥ सामृतालज्जिताभूत्वाविषंभुक्त्वाचदा
रुणम् ॥ ४१ ॥ तेनपापानुसारेणजातःपुत्रोविनश्यति ॥ स्वर्णदानंपलंचैकंनराकारंचकारयेत् ॥४२ ॥ दक्षिणासहितंदेयंनिष्कृत्यर्थंद्वि
जन्मने ॥ ततःश्रेयोभवेत्तस्यपुत्रोजीवतिनिश्चितम् ॥ ४३ ॥ १ । ४ । ९ । १२ । १५ । २० । २७ । ३१ । ३६ । ३९ । ४० । ४५
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० ॥ ९ अथटिक्कितयोगः ॥ दशारण्येऽवसत्पूर्वंबाहुजश्चपराक्रमी ॥ शैशवेयौवनेचाथवार्द्धक्येपापमाच
रत् ॥ ४४॥एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात्॥पूर्वंदत्तंहृतंक्षेत्रंब्राह्मणानामधर्मतः॥४५॥तेनपापानुसारेणनरकेरौरवेगतः॥ बहुवर्ष
सहस्रांतेपुनरागत्यभूतले ॥ ४६॥गौरोरुणोमध्यदेहोहृदिकंठेप्रचिह्नितः॥प्रथमेद्वितीयेवर्षेसौख्यंमातृसहायतः॥४७॥षष्ठेऽष्टमेचविकलमेक
विंशतिमेपिवा ॥ चतुःषष्टितमाब्दान्तेजीवनंकथितंमया ॥ ४८ ॥ १० ॥ अथडुंबरयोगः ॥ कार्णाटेनगरेविप्रःशूद्रश्चान्यवसत्पुरा ॥ वृक्षा
णांछेदनंकृत्वाक्रीत्वावैलाभसंकुलः ॥४९ ॥ दत्तानितेनदानानिब्राह्मणेभ्यःस्वशक्तितः ॥ तीर्थाटनंतथाकृत्वाबहुवर्षगतागतैः ॥ ५० ॥
आयुषस्तुसमाप्तत्वान्ममारपथिपादजः ॥ इदंजन्मद्वितीयंतुबाहुजस्यकुलोत्तमे ॥ ५१ ॥ गौरस्वरूपोमतिमान्कीर्तिमान्धनसंयुतः॥ पुत्रा
र्थेसर्वदाचिंतापूर्वपापानुसारतः ॥५२॥ प्रकर्तव्यःहिरण्याढ्यःकल्पवृक्षःशुचान्वितः॥ सुवर्णकल्पवृक्षस्यरत्नाऽऽढ्यस्यद्विजोत्तम ॥ श्रद्धया
चक्रुतेदानेपुत्रोभवतिनान्यथा ॥ ५३ ॥ १ । ३ । ५ । ९ । १० । १४ । १६ । २० । २५ । २८ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७

॥ ११ अथडिमडिमायोगः ॥ गंधर्वइतिविख्यातोराजपुत्रोबभूवह ॥ सरयूनिकटेविप्रन्यवसत्परिवारयुक् ॥ ५४ ॥ पितातस्यमहाराजा
शूद्रःपरमधार्मिकः ॥ गंधर्वेणतदाविप्रकृतंकर्मजुगुप्सितम् ॥ ५५ ॥ बलादाकर्षितातेनबालापुत्रवधूःशुभा ॥ एवंगतेतुवयसिपा
पमाचरितंभृशम् ॥ ५६ ॥ सर्वाप्रजाचविमुखाभूत्वाचद्विजसत्तम ॥ गंधर्वस्याहरत्प्राणान्सगत्वायमशासनम् ॥ ५७ ॥ नानाजन्मोत्तरे
विप्रमानुषत्वमिहागतः ॥ प्रथमाब्देद्वितीयेचचतुर्थेष्टमकेपिवा ॥ ५८ ॥ द्वादशेषोडशेवर्षेचाऽतिकष्टेनपीडितः ॥ राजरोगोभवेत्तस्यच
त्वारिंशद्गतेमृतिः ॥ ५९ ॥ १२ ॥ अथडुंगरयोगः ॥ कश्चित्क्षात्रकुलेपूर्वेरुद्रवत्यापगातटे ॥ गोवर्द्धनःसमाख्यातःपत्नीपुत्रसमन्वितः ॥ ६० ॥
द्वीपव्यापारनिरतःक्रयविक्रयणेदृढः ॥ कृतानितेनद्रव्याणिबहुकालगतागतैः ॥ ६१ ॥ कृत्वाधर्मार्जनंचासौब्राह्मणायददौकिल ॥ दासीगमन
पापाच्चनरकेकर्दमेगतः ॥ ६२ ॥ दशवर्षसहस्राणिकृमियोनौपुनःपुनः ॥ पश्चाद्वैमानुषीयोनौमातृकुक्षेःसमुद्गतः ॥ ६३ ॥ १। ३। ८। १३। १७।
२०। २८। ३०। एषुवर्षेषुवैकष्टंकथितंचविशेषतः ॥ यदिजीवतिदानाद्वैतदायुःसप्तषष्टिकम् ॥ ६४ ॥ १३अथडोलनयोगः ॥ अथपूर्वे
विपाशायाःशूद्रोनाम्नादिवाकरः ॥ नृपसेवीमहामानीद्रव्यस्योत्पादनेरतः ॥ ६५ ॥ महाभिमानयुक्तेनकृतंकर्मचदारुणम् ॥ नृपस्यदुहिताभ
व्याकुमारीमनुवार्षिकी ॥ ६६ ॥ तस्यांतथाकृताप्रीतिर्यथाकामश्चवैरतौ ॥ सगर्भासाबभूवाऽपिभूपेनापिश्रुतातदा ॥ ६७ ॥ पाद
जस्यशिरश्छिन्नंखड्गेनचनृपाज्ञया ॥ सगत्वायमलोकेच बहुवर्षमभोगकृत् ॥ पुनरागत्यमेदिन्यांकष्टंतस्ययदाकदा ॥ ६८ ॥ १। ५।
१०। १२। १७। २२। २५। २९। ३३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ४७ ॥ १४ अथढोलयोगः ॥ ढोलयोगेचयोजातो
[illegible]वादीचमानुषः ॥ परनारीविलासीचपरकार्य्यस्यविघ्नकृत् ॥ ६९ ॥ परापवादनिरतोबह्वाहारीबलान्वितः ॥ आसीत्पूर्वेभवेक

[illegible]स्वार्थसाधकः ॥ ७० ॥ कीटदेशेवसंत्सोपिधनधान्यसमन्वितः ॥ गोशतंचकृतंदानंपृथ्वीदानंततःपरम् ॥ ७१ ॥ बाहुजेनतु साहाय्यात्कृतंकर्मजुगुप्सितम् ॥ पृथक्छय्यास्वस्त्रियाश्चविप्राणांमानखंडनम् ॥ ७२ ॥ यतीनांचददौदंडमेवंकालगतागतैः ॥ तेनपापानुसारेणवंशवृद्धिर्नजायते ॥ १।३।८।१६।२२।२९।३५।३६।४० अल्पमृत्युःखवेदाब्देपरमायुःशताब्दकम् ७३ ॥ १५ अथढाकयोगः ॥ ढाकयोगेचयोजातःपूर्वजन्मनिबाहुजः ॥ विख्यातःकीर्तिमान्सोपिराज्यकर्तासदानघ ॥ ७४ ॥ एकस्मिन्समयेविप्रचाखेटकेसदारतः ॥ भृत्यान्वितश्चराजासवनंप्रतिययौतदा ॥ ७५ ॥ शशकान्सुकरांश्चैवमृगान्हत्वात्वनेकधा ॥ एकातुसुरभिस्तत्रह्यासन्नप्रसवातदा ॥ ७६ ॥ व्याघ्रवत्तनुमासाद्यद्रुमाकीर्णेतुचास्थिता ॥ दूरादपिविलोक्याथशरात्संताडिताद्विज ॥ ७७ ॥ पपातधरणीपृष्ठेदृष्ट्वाभूपश्चशंकितः ॥ पापाच्चनरकंगत्वादिव्यवर्षसहस्रकम् ॥ पुनरागत्यमेदिन्यांसुन्दरश्वेतचिह्नितः ॥ ७८ ॥ १ । ४ । ८ । १० । १३ । १७ । २० । ३१ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९७ ॥ १६ अथढुढुरीयोगः ॥ आसीज्जन्मांतरेचैववेश्याचंद्रकलाशुभा ॥ रूपयौवनसम्पत्त्याबहुद्रव्यमुपार्जितम् ॥ ७९ ॥ लोकानांवंचनेव्यग्राचंचलाचातिशोभना ॥ एकदाचंद्रग्रस्तेचब्राह्मणायकुटुम्बिने ॥ ८० ॥ स्वर्णमालांददौदानंगांत्वेकांचसवत्सकाम् ॥ तेनपुण्यप्रभावेणचाधुनासुखसंयुता ॥ ८१ ॥ १ । ३ । ९ । १४ । १८ । २० । २६ वर्षेषुकष्टम् ॥ गर्भोत्पातनम् ॥ सर्वांगेकष्टम् ॥ ज्वरादिरुधिरस्रावः ॥ परमायुर्वर्षाणि ४८ ॥ १७ अथढनत्संज्ञकयोगः ॥ कालंजरगिरौरम्येतत्रविप्रोऽवसत्पुरा ॥ गीर्वाणइतिविख्यातःपत्नीतस्यसुशोभना ॥ ८२ ॥ परमैश्वर्य्यमतुलंदेशकोशाधिपस्तदा ॥ ब्रह्मकर्मपरिभ्रष्टःक्षात्रधर्मेसदारतः ॥ ८३ ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥ पुत्रार्थंब्राह्मणद्वाराचण्डीपाठाश्चपाठिताः ॥ ८४ ॥ ततस्यचाऽभवत्पुत्रःपरमोत्कर्षसंयुतः ॥

ब्राह्मणस्याऽकरोन्निंदांतथावेदस्यभोद्विज ॥ ८५ ॥ तेनपापप्रभावेणगर्दभोपिबभूवह ॥ पुनर्वैमानुषींयोनिंस्वर्गांश्चैवमुपागतः ॥ हृष्टःपुष्टः
सविज्ञेयःपुत्रेणरहितोऽनघः ॥ ८६॥ १।३।८।२०।२४।३१।३६।३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८० ॥ १८अथडीहायोगः ॥ कश्चि
द्विष्णुपुरेरम्येगंगायादक्षिणेतटे ॥ ब्राह्मणोन्यवसत्तत्रशौचाचारविवर्जितः ॥ ८७ ॥ यवनैश्चकृतामैत्रीबहुवर्षगतागतैः ॥ एकस्मिन्समये
विप्रस्वर्णकारस्यवैधनम् ॥ ८८ ॥ चोरितंतेनमूढेननरकेदारुणेगतः ॥ नरकान्निःसृतोविप्रचायातोधरणीतले ॥ ८९ ॥ १ । ३ । ७ ।
१२ । १५ । २० । २९ । ३५ । ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६० ॥ १९ अथडोहनयोगः ॥ डोहनेचनरोजातस्तपस्वीपूर्वजन्म
नि ॥ इलावर्तेऽवसत्सोऽपिधनधान्यविवर्जितः ॥ ९० ॥ शारदेतिसमाख्यातापत्नीतस्यकुलोचना ॥ स्वीयांपाणिगृहसतींपरित्यक्त्वाद्वि
जोत्तम ॥ ९१ ॥ परभार्य्यासमानीतास्वगृहेस्थापितातुसा ॥ उद्वाहितातुविपिनेक्रंदमानामुहुर्मुहुः ॥ ९२ ॥ सामृतापतिशोकेनपापमाच
रितंत्विदम् ॥ कालांतरेमृतःसोपिगतोपियमशासनम् ॥ ९३ ॥ यमलोकात्परिभ्रष्टश्चागतोधरणीतले ॥ ईषद्गौरोतिह्रस्वश्चमतिमान्धनसं
युतः ॥ ९४ ॥ प्रथमेद्वितीयेषष्ठेद्वादशेषोडशेपिवा ॥ विंशतिवर्षांतरेकष्टंप्राप्तेपंचाशकेमृतिः ॥ ९५ ॥ २० अथठंठपालयोगः ॥ कुमारी
क्षेत्रमध्येतुब्राह्मणःप्राणिहिंसकः ॥ निर्दयोनिष्ठुरःसोऽपिशाक्तधर्मेसदारतः ॥ ९६ ॥ चौरकर्मरतःसोपिलोकापवादवर्जितः ॥ एकस्मिन्स
मयेविप्रचोरितंनृपवेश्मनि ॥९७॥ बहुद्रव्याणिरत्नानिचानीतानिस्वकेगृहे ॥ कोटपालेनवैयत्नाद्बद्धश्चकरपादयोः ॥९८॥ कारागृहेचक्षिप्तः
सुदृढंबद्धाचशृंखलैः ॥ समृतस्तत्रभोविप्रतुलस्यश्वत्थसन्निधौ ॥ ९९ ॥ पुण्यात्पुण्यफलंभुक्त्वाचापिवर्षसहस्रकम् ॥ पुनरागत्यमे ८२
दिन्यांदुःखभारसमन्वितः ॥ १०० ॥ १ । २ । ८ । १३ । १८ । २२ । २५ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९०

२१ अथठकुरयोगः ॥ ठकुरेचनरोजातःसर्वसौभाग्यसंयुतः ॥ परमौदार्ययुक्तश्चसद्विद्याभ्युपजीविकः ॥१०१॥ दक्षिणांगेतथावामेलांछनं
तिलमाषयोः ॥ द्विभार्य्योगुणसम्पन्नःकृषिवाणिंज्यतत्परः ॥ १०२ ॥ कन्याश्चबहवोजाताःपुत्रोनैवचनैवच ॥ शुक्रउवाच ॥ केनकर्मवि
पाकेनेदानींपुत्रविवर्जितः ॥१०३॥भृगुरुवाच ॥ आसीत्पूर्वंह्यङ्गदेशेब्राह्मणःपंडितःसच॥केवलेतिसमाख्यातःकृतंकर्मसुदारुणम् ॥१०४॥
गुरुद्रव्यंचविपुलंगृहीत्वाविविधैश्छलैः ॥ तेनकर्मानुसारेणपुत्रोनैवप्रजायते ॥१०५॥ गुरुमूर्तिश्चकर्तव्यातेनहेममयीतथा ॥ तीर्थभूमौप्रदा
तव्याब्राह्मणायसदक्षिणा ॥ १०६ ॥ ततःश्रेयोभवेत्तस्यपुत्रोजीवतिनिश्चितम् ॥ रोगाश्चविलयंयांतिजीवेद्वर्षाष्टषष्टिकम् ॥ १०७ ॥ २२
अथडिंडिमाधरयोगः ॥ पूर्वजन्मनिशूद्रश्चगंडक्याःपश्चिमेतटे ॥ गांभीर्य्येतिसमाख्यातःपत्नीतस्यगुणाकरी ॥ १०८ ॥ पत्न्यासहैकदा
शूद्रोद्वारकायांगतश्चसः ॥ नानातीर्थाटनंकृत्वापुण्यमार्गेसदारतः ॥ १०९ ॥ एकस्मिन्समयेविप्रब्राह्मणस्यहृतंधनम् ॥ ब्रह्मस्वंभक्षितंतेन
नदत्तंलोभहेतुना ॥ ११० ॥ पत्नीतस्यसतीजातास्वर्गलोकमुभौगतौ ॥ पुनरागत्यमेदिन्यांगौरांगोदीर्घलोचनः ॥ १११ ॥ प्रथमेद्वि
तीयेवर्षेषष्ठेचाऽष्टमकेपिवा ॥ पीड्यमानस्तथादेवद्वादशाब्देविशेषतः ॥ ११२ ॥ चतुर्विंशेवत्सरेचमहारिष्टंप्रजायते ॥ चतुर्वेदाब्दपर्य्यंतं
कथितंप्राणधारणम् ॥ ११३ ॥ २३ अथडाकिन्ययोगः ॥ आसीज्जन्मांतरेचैवबाहुजःपृथवीपतिः ॥ सर्वधारीतिनाम्नावैचोग्रदंडः
प्रतापवान् ॥ ११४ ॥ नानायुद्धंकृतंतेनजित्वाशत्रुबलंबलात् ॥ द्विजस्यैकस्यकोपेनचाभवद्राक्षसस्तदा ॥ ११५ ॥ विंशतिवर्षसहस्रांते
मानुषत्वमजायत ॥ महाभिमाननिरतःप्रपंचकरणेरतः ॥ ११६ ॥ पार्थिवाःकोटिसंख्याकाःपूजिताश्चद्विजोत्तम ॥ धनपुत्रास्तदास्युर्वैना
न्यथाद्विजसत्तम ॥ षष्टिवर्षांतरेमृत्युर्भविष्यतिनसंशयः ॥ ११७ ॥ २४ अथदंडपाणियोगः ॥ कश्चिद्वैश्यकुलेपूर्वंगोमत्यानिकटे

तदा ॥ वासुदेवेतिनाम्नावैपत्नीतस्यकलाभिधा ॥ ११८ ॥ धनसैश्वर्य्यमतुलंदानधर्मपरायणा ॥ ब्राह्मणेनतदादेवस्वर्णमुद्राशतद्वयम् ॥
॥ ११९ ॥ स्थापितंतस्यवैगेहेसगत्वातीर्थकेतदा ॥ ब्राह्मणोदैवयोगेनतत्रैवचतदामृतः ॥ १२० ॥ तस्यपुत्रःसमायातोमुद्रार्थं वैश्यवेश्म
नि ॥ नदत्तंतस्यवैद्रव्यंतिरस्कारमथाकरोत् ॥ १२१ ॥ एवंस्वल्पेगतेकालेसवैश्योमृत्युमापह ॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्यफलं
तथा ॥ १२२ ॥ षष्टिवर्षसहस्रांतेपुनरागत्यभूतले ॥ चैतन्यचारुश्चतुरोरूपवान्गुणसंयुतः ॥ १२३ ॥ प्रथमेतृतीयेवर्षेसप्तमाष्टमयो
रपि ॥ त्रिंशत्यब्देषोडशेचचतुर्विंशेविशेषतः ॥ १२४ ॥ पीड्यमानंतथांगंवाभूत्वापिम्रियतेशिशुः ॥ तुलादानाद्भवेच्छ्रेयोधनंपुत्रः
प्रलभ्यते ॥ चतुःषष्टिश्चवर्षाणिजीवनंतस्यचाधुना ॥ १२५ ॥ २५ अथडम्बरयोगः ॥ डम्बरेयोगेयोजातः सनरःसुखभाग्भवेत् ॥
शस्त्रविद्यासुनिपुणःपृथ्वीपतिरभूद्भुवि ॥ १२६ ॥ नानाविलासविभवैर्वैश्यागामीविशेषतः ॥ पूर्वंचबर्बरेदेशेशूद्रोऽभूत्तामसोबली ॥
॥ १२७ ॥ एकस्मिन्समयेविप्रैकादश्याश्चकृतंव्रतम् ॥ तंडुलंसेटकंकृत्वायत्रतत्रापियाचितम् ॥ १२८ ॥ प्रभातेभिक्षुकस्त्वेकः समा
यातश्चवैतदा ॥ दारिद्र्येणातिक्रोधेनभिक्षुकायसमर्पितम् ॥ १२९ ॥ उपोष्यद्वादशीयातातस्यांरात्रौमृतःखलु ॥ तेनपुण्यावशेषेणसर्वं
सम्पद्युतोधुना ॥ १३० ॥ १ । ४ । ८ । १६ । ४ । २८ ॥ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९८ ॥ २६ अथडीलमीलकयोगः ॥ पंपापुरी
चनगरीप्रकीर्णागुणिनांगणैः ॥ तत्रविप्रः सुधादेवःसात्विकः पारमार्थिकः ॥१३१॥ शिवस्याऽऽराधनेनिष्ठोविद्याविनयसंयुतः॥गृहंत्यक्त्वा
गतस्तीर्थेकृष्णानद्याश्चसन्निधौ ॥ १३२ ॥ तपश्चर्याकृतातत्रदैवात्पत्नीसमागता ॥ तिरस्कारःकृतस्तस्याः पापमाचरितंत्विदम् ॥ ८३
॥ १३३ ॥ एवंस्वल्पेगतेकालेसविप्रःपंचतांगतः ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गंतथानघ ॥ १३४ ॥ पुनरागत्यमेदिन्यांपूर्वपुण्यप्रभा

वतः ॥ भूत्वापिम्रियतेभार्य्यापरस्त्रीसेवनात्सुखम् ॥ १३५ ॥ १ । ३ । ८ । १२ । १६ । २० । २५ । २८ । ३३ । [illegible]र्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६१॥२७अथडारयोगः ॥ डारयोगेचयोजातः पूर्वजन्मनिनोत्तमः ॥ बाहुजःशिवनामाख्यःपुत्रस्त्रीधनसंयुतः १३६॥गोदानमश्वदानंचपृथ्वीदानमथाऽकरोत् ॥ तीर्थेतीर्थेकृतासेवामुनीनांचपुनःपुनः ॥१३७॥ जन्मन्यत्रमहाभागप्रतापीबहुसेवकः ॥ उदारोमतिमांश्चैवच्छलिकः कोपसंयुतः ॥ १३८ ॥ १ । ३ । ५ । ८ । १२ । २० । २२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६१॥२८ अथडारकयोगः ॥ डारेयोगेतुयोजातः प्राग्जन्मनिगुणेश्वरः ॥ अवंतिकांवसन्सोपिपादजश्चसुखान्वितः॥१३९॥कृषिवाणिज्यनिरतोव्यापारीसर्ववस्तुषु ॥ सततंभक्षितंतेनच्छागमांसंविशेषतः ॥ १४० ॥ छागानामपिवस्त्राणामकार्षीत्क्रयविक्रयौ ॥ एकदातुरवौग्रस्तेगवांदानंकृतंशतम् ॥ १४१ ॥ नर्मदायांकृतंदानंस्वर्णवस्त्रकदम्बकम् ॥ ततोबहुतिथेकालेशूद्रस्यमरणंभवेत् ॥१४२॥ पापात्पापफलंभुक्त्वास्वर्गंभुक्त्वातथापिच ॥ पुनर्मानुष्ययोनौवैचागतोधरणीतले॥१४३॥१।५।८।१२।१६।२०।२५।२८वर्षेषुकष्टम्॥परमायुर्वर्षाणि७१॥२९अथडोलाख्ययोगः ॥ येनराःपरद्रव्याणिहरन्तिसततंद्विज ॥ तेनरादुखितालोकेरोगैस्तैस्तैःप्रपीडिताः ॥ १४४ ॥ अन्नंयस्यगृहीतंदुतस्ययोनददातितत् ॥ ऋणंसर्वंदुःखदंवैपरलोकेचदारुणम् ॥ १४५ ॥ यस्यगात्रंचवैरूप्यंधातुरोगीतथानरः ॥ कन्याघातेकृतंपूर्वंफलंभवतिदारुणम् ॥ १४६ ॥ कीकटेनंदनोनामवल्लभोवसतेतदा ॥ सनाढ्योवैतदादेवःकृपणःसहभार्य्यया॥ १४७॥नित्यंसचमहाभागब्राह्मणोवेदपाठकः ॥ सतिष्ठतिपुरोमध्येधनंचबहुसंचितम् ॥ १४८ ॥ प्रत्यहंवैपरान्नेनभोजनंकुरुतेद्विजः ॥ यदाप्रौढवयोजातंतदाचपुरमत्यजत् ॥ १४९ ॥ असौगतोमित्रपार्श्वेह्यवसद्वैपुरेशुभे ॥ आभीरस्यगृहावासंमित्रत्वेनप्रदत्तवान् ॥ १५० ॥ ब्राह्मणस्यहृतंद्रव्यंस्वगृहेस्थापितंद्विज ॥ ब्राह्मणःस्वर्णशोकेन

स्वशरीरंजहौतदा ॥ १६१ ॥ शूद्रेणैवतदादेवतस्यस्वर्णव्ययंकृतम् ॥ बहुकालेततोयातेशूद्रस्यैवदरिद्रता ॥ १६२ ॥ दरिद्रत्वेनभोशुक्रब हुपापंचसंचितम् ॥ ततोमृत्युवशेयातोवल्लभःसहभार्य्यया ॥ १५३ ॥ नरकेपातयामासुर्यमदूतायमाज्ञया ॥ ततस्तेनचप्रेतत्वंभुक्तंव र्षसहस्रकम् ॥ शरय्वाश्चोत्तरेभागेमानुषत्वंचप्राप्तवान् ॥ १५४ ॥ १ । ४ । ६ । १२ । १६ । २१ । २५ । ३० । वर्षेषुकष्टम् ॥ परमा युर्वर्षाणि ८९ ॥ ३० अथडवडवीयोगः ॥ अथांतरेप्रवक्ष्यामियत्कृतंपूर्वजन्मनि ॥ मथुरापुरतोदेवपूर्वेक्रोशप्रमाणके ॥ १५५ ॥ लक्ष्म णस्यपुरंख्यातंतत्रैवबहवोजनाः॥वसंतिवैष्णवाःसर्वेवेदकर्मविचक्षणाः ॥ १५६ ॥ स्वर्णकारोवसत्तत्रस्वधर्मप्रतिपालकः ॥ दामोदरइति ख्यातस्तस्यपत्नीप्रभावती ॥ १५७ ॥ विष्णुभक्तिरताशांतासज्जनानांचसेवकौ ॥ तस्यपुत्रौचद्वौजातौसद्गुणौपितृसेवकौ॥१५८॥ एका चबह्लवीतत्रनिवासार्थंचह्यागता ॥ पुत्रद्वयसमायुक्ताबहुगोधनसंयुता ॥ एकोद्यूतरतःपुत्रोद्वितीयश्चौरकर्मणि ॥ १५९ ॥ उपा र्जितंबहुद्रव्यंमहिषीगोधनंभृशम् ॥ ततोबहुतिथेकालेमहामारीसमागता ॥ १६० ॥ पुत्राभ्यांसहसानारीमृत्युंप्राप्तवतीततः ॥ द्रव्यंतस्या स्तदादेवस्वर्णकारोगृहीतवान् ॥ १६१ ॥ भुक्तंद्रव्यंचतत्सर्वंजीवितावधिभूतले ॥ आयुषस्तुसमाप्तत्वात्स्वर्णकारस्तदामृतः ॥ १६२ ॥ स्वर्गापवर्गभोगश्चबभूवबहुवार्षिकः ॥ पुनःपुण्यक्षयेजातेमानुषश्चाभवद्भुवि ॥ १६३ ॥ १ । ४ । ९ । १५ । १९ । २६ । ३३ । ३७ वर्षेषुकष्टम् ॥ मेहाद्यर्शोरोगात्तथाज्वरः ॥ परमायुर्वर्षाणि ६७ ॥ ३१ अथडरनांतकयोगः ॥ आसीज्जन्मांतरेचैवनापितःकीक टेवसन् ॥ क्षुरकर्मपरिभ्रष्टःकृषिकर्मोद्यमेरतः ॥ १६४ ॥ पत्नीतस्यमहाभ्रष्टापरपुंसिरतासदा॥ एकस्मिन्समयेदेवनापितेनातिलोभिना॥ ॥ १६५ ॥ अर्द्धरात्रेकृतंकर्मवैश्यपुत्रस्यमारणम्॥तस्यसर्वाणिद्रव्याणिनापितेनाप्यखादिच॥१६६॥व्ययंकृत्वातदादेवप्रत्यहंद्विजसत्तम॥

दैवाच्चतीर्थराजेहिसस्नातोभृगंगेरवौ ॥ १६७ ॥ आयुषस्तुसमाप्तत्वान्ममारपथिनापितः ॥ नानानरकेषुस्थित्वानानोजन्मानिचाप्तवा
न् ॥ १६८ ॥ बहुवर्षसहस्रांतेमर्त्यलोकेचमानुषः ॥ प्रथमेतृतीयेवर्षेदशमैकादशयोर्गदः ॥ १६९ ॥ आविंशेवामृतिःप्रायः षष्टिवर्षाणि
जीवति ॥ आश्विनेधवलेपक्षेह्यष्टम्यांमरणंवदेत् ॥ पुनर्जन्मभवेत्तस्यतदामुक्तिर्नसंशयः ॥ १७० ॥ ३२ अथढारकयोगः ॥ इन्द्रप्रस्थ
पुरेरम्येबाहुजोन्यवसत्तदा ॥ चोलसिंहइतिख्यातः पत्नीतस्यपतिव्रता ॥ १७१ ॥ किंचिद्देशाधिकारीसचोग्रदंडः प्रतापवान् ॥
सप्राजासहसैन्येनकृत्वायुद्धंविशेषतः ॥ १७२ ॥ कृतानितेनदानानिपर्वस्वपिविशेषतः ॥ एकस्मिन्समयेविप्रसाध्वीचस्त्रीकलं
किता ॥ १७३ ॥ प्रजानांदापितोदंडोद्रव्यलोभेनतेनच ॥ ततोवैमरणंजातंपत्नीजातासतीतदा ॥ बहुवर्षसहस्रांतेचागतोधरणीतले ॥
॥ १७४ ॥ १ । ४ । ९ । १३ । १७ । २० । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६५ ॥ ३३ अथढरकीयोगः ॥ आसीज्जन्मांतरे
चैवकेशवोनामनर्तकः ॥ यत्रतत्रकृतावासोलोकानांवंचनायच ॥ १७५ ॥ द्रव्यंचविपुलंकृत्वापुण्यमार्गेव्ययःकृतः ॥ तीर्थाव
गाहनंकृत्वागयाश्राद्धमथाकरोत् ॥ १७६ ॥ ब्राह्मणेषुगृहस्थेषुश्राद्धदानंतदाददौ ॥ मृतः स्वर्गपुरेयातः पत्नीजातासतीतदा ॥
॥ १७७ ॥ पुनरागत्यमेदिन्यांपूर्वपुण्यप्रभावतः ॥ प्रथमेमश्चमेवर्षेद्वादशेषोडशेपिवा ॥ १७८ ॥ चतुर्विंशमितेवर्षेचाल्पमृत्युर्भ
विष्यति ॥ षष्टिवर्षांतरेकालः सत्यंसत्यंवदाम्यहम् ॥ १७९ ॥ ३४ अथढाढीयोगः ॥ कश्चिच्छूद्रकुलेपूर्वंयमुनायाःशुभेतटे ॥
शंकरेतिसमाख्यातः पत्नीपुत्रसमन्वितः ॥ १८० ॥ उद्यमेषुसदामग्नोब्राह्मणानांचसेवकः ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यवै
बलात् ॥ १८१ ॥ बाहुजस्यप्रसंगेनकृतंकर्मचदारुणम् ॥ राजपुत्रवधंकृत्वामहापापमुपार्जितम् ॥ १८२ ॥ ततोवैमरणंप्राप्य

नरकेरौरवेगतः ॥ शतजन्मोत्तरेविप्रमानुषत्वमिहागतः ॥ १८३ ॥ १ । ५ १० । १५ । २० । २७ । वर्षेषुकष्टम् ॥ परमायुर्व
र्षाणि १०६ ॥ ३५ अथठंढनायोगः ॥ ठंढनायांनरोजातःपूर्वजन्मनिबाहुजः ॥ कौशिक्याश्वशुभेतीरेन्यवसत्परिवारयुक् ॥
॥ १८४ ॥ सचक्षात्रस्तुवैतत्रतुलादानमथाकरोत् ॥ चन्द्रेग्रस्तेप्रयागेचगोशतंब्राह्मणेददौ ॥ १८५ ॥ भूमिवादेचवैतत्रगोत्रिपुत्रश्चघाति
तः ॥ तेनकर्मविपाकेनपुत्रकन्याविवर्जितः ॥ १८६ ॥ १ । ३ । ८ । १२ । १६ । २६ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९० ॥
३६ अथडोंगरीयोगः ॥ सारस्वत्येशुभेदेशेब्राह्मणःशास्त्रकोविदः ॥ रामदत्तइतिख्यातःसपत्नीकःसपुत्रकः ॥ १८७ ॥ ब्रह्मकर्म
परःश्रेष्ठोधनधान्यसमन्वितः ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥ १८८ ॥ यजमानगृहेयातोबहुलोभेनसंयुतः ॥ यजमानो
ददौकिंचिन्नगृहीतंचतद्धनम् ॥ १८९ ॥ परस्परंकृतंयुद्धमतिप्रबलदंडिना ॥ स्थूलेनलगुडेनाथबाहुजश्चप्रताडितः ॥ १९० ॥ सम्रृतस्ते
नदुःखेनपापमाचरितंत्विदम् ॥ तेनपापानुसारेणसविप्रःपंचतांगतः ॥ १९१ ॥ पापात्पापफलंभुक्त्वायोनीर्भुक्त्वाकथंचन ॥ पुनर्वैमानुषीयो
नौगौरांगोभव्यरूपवान् ॥१९२ ॥ १।३।७।१२।१५।२०।२७।३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६१ ॥ ३७ अथडुंबरीयोगः ॥ डुंबरी
योगकेजातःकालिंजरगिरौवसन् ॥ बाहुजःशस्त्रजीवीचहिंसायांचसदास्थितः ॥ १९३ ॥ एकस्मिन्समयेविप्रकृतंकर्मचदारुणम् ॥ द्रव्य
लोभेनवैश्यश्चमार्गेचैवविघातितः ॥१९४॥ तेनपापानुसारेणमीनयोनिशतैरपि ॥ बहुवर्षसहस्रांतेचाश्रितामानुषीतनुः ॥१९५॥१।३।९
८।१२।२० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ३९॥३८ अथडिग्विहारीयोगः ॥ आसीज्जन्मांतरेचैवबाहुजःपृथिवीपतिः ॥ उग्रसेनइतिख्या ८५
तःशतकोशाऽधिपस्तदा ॥ १९६ ॥ परस्त्रीरमणेरक्तोवाममार्गपरायणः ॥ पितृष्वसामहाभव्याबलादाकर्षितातदा ॥१९७॥ तयासहकृ

तोभोगःपापमुग्रमुपार्जितम् ॥ समृतोव्रणदोषेणगतोऽसौयमलोककम् ॥ पुनरागत्यमेदिन्यांसुकीर्तिःप्रमदाधिपः ॥ १९८ ॥ १ । ३ । ८ ।
१४।२०।२३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६८ ॥ ३९ अथडैनकीयोगः ॥ डैनकीयोगेयोजातोभूतसेव्यत्यसद्गतिः ॥ मलिनाम्बरधारी
चकिंचिद्वित्तसमन्वितः ॥ १९९ ॥ पूर्वजन्मनिविप्रोसावैंद्रजालीकलाकरः ॥ नानाविधैर्धूर्तवृत्तैर्लोकानांवंचनेरतः ॥२००॥ तेनकर्मा
नुसारेणयमलोकंतदागतः ॥ यमलोकात्परिभ्रष्टश्चागतोधरणीतलम् ॥२०१॥ १ । ४ । ८ । १३ । २१ । २६ । २९ । ३० । ३५ । ३७
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७ ॥ ४० अथडिगधारकयोगः ॥ कश्चिद्विजकुलेपूर्वंमागधेनगरेऽवसत् ॥ कैवर्तकोपितत्रैवावसद्ग्रामेचनं
दने ॥ २०२ ॥ मनोहरइतिख्यातोधनाढ्योजायतेमहान् ॥ मत्स्यमांसस्यभोदेवप्रत्यहंविक्रयेरतः ॥ २०३ ॥ संचितानिचरत्नानिनदा
नंचकदाचन ॥ एकदाचंद्रमोग्रस्तेस्वर्णाऽलंकृतगांददौ ॥ २०४ ॥ सत्पात्रायचविप्रायभार्य्ययासहभक्तितः ॥ ततोमृत्युवशंयातोभार्य्या
जातासतीतदा ॥ २०५ ॥ पापाच्चनरकेगत्वाह्यसिपत्रवनांतरे ॥ नरकान्निःसृतोविप्रश्शृगालोगहनेवने ॥ २०६ ॥ पुनश्चकाकयोनिःसमानु
षस्तुततोभवत् ॥ गुणज्ञोदेवताभक्तोवेश्यासुरतितत्परः॥२०७॥रागीशुष्यत्तनुर्वक्ताज्ञानवान्सुतवर्जितः ॥ स्वर्णस्यप्रतिमांभव्यांसूर्याकृति
पलद्वयाम् ॥ संकल्प्यब्राह्मणेदद्यात्पुत्रोजीवतिनिश्चितम् ॥ २०८ ॥१।४।८।१२।१५।१७।२०।२५। २९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
६२ ॥ ४१ अथटिट्किितायोगः ॥ अथांतरेप्रवक्ष्यामिटिट्किितायोगजंफलम् ॥ तत्सर्वंशृणुमेदेवयत्कृतंपूर्वजन्मनि ॥ २०९ ॥ मध्यदेशे
द्विजश्रेष्ठधनाढ्योबल्लवोऽवसत् ॥ हंसकेतुरितिख्यातोभार्य्यातस्यतुकर्कशा ॥ २१० ॥ बहवोवृषभागावोमहिष्यश्चाऽपितस्यच ॥ कृषि
कर्मरतःशूद्रोविक्रीतागोवृषादिकाः ॥२११॥ एकोवैश्योधनाढ्योवैतस्यमित्रंतदाऽभवत् ॥ महाप्रीतिस्तदाजाताबहुवर्षप्रमाणतः॥२१२॥

एकदातुनिशायांवैसशूद्रोवणिजंद्विज ॥ सुतंरत्नादिलोभेनशस्त्रेणहतवांश्चमः॥२१३॥द्रव्यंसर्वंगृहीत्वातुभूमिमध्येधृतश्चसः॥ बहुवर्षगतेचै संहि.
वशूद्रोमृत्युवशंगतः ॥ २१४ ॥ पातयामासवैघोरेनरकेभृशदारुणे ॥ ततोजातस्तदादेवराक्षसोगहनेवने॥ २१५॥ बहुवर्षसहस्रांतेमानुषत्व
मितोऽधुना॥मित्रघातात्कृतात्पापात्पुत्रसौख्यंनलभ्यते ॥ २१६ ॥कुर्यात्स्वर्णमयींमूर्तिपलपंचप्रमाणिकाम्॥संकल्प्यब्राह्मणेदद्यात्पुत्रो
भवतिनान्यथा॥२१७॥२।५।१३।१६।२०।२९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६४ ॥ ४२ अथटकबालकयोगः ॥ अथांतरेप्रवक्ष्यामि
शृणुदेवविशेषतः ॥ आदौपापफलंदेवभुज्यतेसर्वमानुषैः ॥ २१८ ॥ पश्चात्पुण्यफलंदेवपरत्रचत्विहापिच ॥ एकःशिल्पकरोदेवन्यवसद्ध
स्तिनापुरे ॥ २१९ ॥ हेमदासइतिख्यातोभार्य्याद्वयसमन्वितः ॥ प्रत्यहंशिल्पकार्य्येचकरोतिव्ययकारणात् ॥ २२० ॥ अश्वत्था
दिकवृक्षाणांछेदनंचकृतंबहु ॥ एवंबहुतिथेकालेशिल्पकारोमृतस्तदा ॥ २२१ ॥ नरकेकर्दमेचैवयमदूतैश्चक्षेपितः ॥ बिडालः
शरठोभूत्वाकाकोबकश्चजातवान् ॥ २२२ ॥ सजातोमध्यदेशेतुमानुषःसुखसंयुतः ॥ वृक्षच्छेदनकात्पापात्पुत्रेणरहितोऽभवत् ॥ २२३॥
धेनवःपंचदातव्याःसत्पात्रायद्विजायच ॥ ततोभवतिपुत्रोपिपूर्वपापव्यपोहनात् ॥ २२४ ॥ १।४।७।१०।१३।१६।२०।२९।
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७८ ॥ ४३ अथटाडीसंज्ञकयोगः ॥ मध्यदेशेतुहेपुत्रलोहकारोऽवसत्पुरा ॥ विष्णुव्रतरतोनित्यंसाधूनां
पोषकश्चसः ॥ २२५ ॥ धनधान्यसमृद्धस्तुमहालोभेनसंयुतः ॥ ब्राह्मणस्यहृतंवित्तंलोभात्संकुलितेनच ॥ २२६ ॥ तेनपापानुसारेण
कुंभीपाकेतदागतः ॥ दिव्यवर्षसहस्रांतेमानुषश्चाऽभवत्पुनः ॥२२७॥ सर्वांगेजायतेपीडावंशवृद्धिर्नजायते ॥ गायत्रीमूलमंत्रंचजपेल्लक्षचतु ८६
ष्टयम् ॥ ततःश्रेयोभवेत्तस्यवाऽन्यथाविपरीतकम् ॥२२८॥ १।४।८।१२।१६।१८।३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥१०९॥

॥४४ अथटीकरयोगः ॥ अयोध्यानगरीरम्याततःक्रोशचतुर्दशे ॥ तत्राप्येकोऽवसच्छूद्रोडम्बराख्योमहाबलः ॥२२९॥ चित्रातस्याभवत्प
त्नीपतिसेवापरायणा ॥ गुरुसेवारतोनित्यंप्रत्यहंशाकविंकयी ॥२३०॥ एकामार्जारिकाश्वेतापालितातेनवैद्विज ॥ सगर्भासायदाजाता
वधंतस्यास्तदाकरोत् ॥२३१॥ ततोबहुतिथेकालेशूद्रमृत्युरभूद्विज ॥ स्वर्धुनीमरणात्पुण्यात्स्वर्गेगत्वाचपादजः ॥२३२॥ षष्टिवर्षसहस्रा
णिभुक्त्वास्वर्गभवंफलम् ॥ पुनर्वैमानुषोजातोधनधान्यसमन्वितः ॥ कन्याश्चबहवोजाताःपुत्रोनैवचनैवच ॥ २३३ ॥ १।३।८।१२।१६
१७।२०।२७।३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८८ ॥ ४५ अथटोरीयोगः ॥ पुरीकाशीसमाख्यातात्रैलोक्येदेवपूजिता ॥ तस्यास्तु
पश्चिमेदेशेक्रोशपंचदशेमिते ॥ २३४ ॥ मांडव्यस्यपुरेरम्येऽवसंश्चबहवोजनाः ॥ तन्मध्येचैवशूद्रोपिह्यवसन्मानवर्जितः ॥२३५॥ डिंडि
मेतिसमाख्यातोगौरीतस्यवरांगना ॥ धनंतुसंचितंतेननदानंकृतवान्पुरा ॥ २३६ ॥ एकदादैवयोगेनब्राह्मणाश्चनिमंत्रिताः ॥ भोजनंप्रद
दौप्रीत्यादक्षिणासमयेतदा ॥ २३७ ॥ गौरेकाकपिलादत्तापुरोहितायभूषिता ॥ ब्राह्मणोऽप्यजलपत्तत्रकश्चिच्छूद्रंप्रतिद्विज ॥ २३८ ॥
अहंग्रामस्यवैपूज्योमदीयागौःशृणुप्रभो ॥ पुरोहितायकथंदत्ताप्राणदानंददाम्यहम् ॥ २३९ ॥ इविश्रुत्वावचस्तस्यदुर्वचोब्राह्मणस्यच ॥
इत्युक्तोविप्रःक्रोधेनविषंपीत्वातदामृतः ॥ २४० ॥ शूद्रस्यमरणंजातंकुम्भीपाकेतदागतः ॥ मानुषेचततोजन्मबहुवर्षांतरेधुना ॥
॥ २४१ ॥ पूर्वपापफलात्पुत्रवंशवृद्धिर्नजायते ॥ गामेकांकपिलांदद्याद्वस्त्रस्वर्णैरलङ्कृताम् ॥ तदापुत्रोभवेत्तस्यचान्यथाविपरीतक
म् ॥ २४२ ॥ १ । ३ । ८ । १२ । १६ । १७ । २० ।३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९१ ॥ ४६ अथटोराख्ययोगः ॥ अल
कैंचपुरेदेवशूद्रस्त्वेकोवसत्पुरा ॥ शूद्राचाररतोनित्यंविक्रयंकुरुतेसदा ॥ २४३ ॥ गोमहिष्यादिव्यापारेव्ययंकुर्य्याद्दिनेदिने ॥

एकदातस्यगोवृंदंवनेतिष्ठतिभोनघ ॥२४४॥ महावृष्टिस्तत्रजातातावद्भावःप्रपीडिताः ॥ तासांमध्येमहाबाहोबहुगावोमृतास्तदा ॥२४५॥
रक्षाकृतानवैतासांतृणाऽऽच्छादनकैर्द्विज ॥ नरकेपातयामासुर्यमदूतायमाज्ञया ॥२४६॥ बहुवर्षसहस्राणिभुक्त्वानरकजंफलम् ॥ नरकान्निः
सृतोदेवगजयोनौसमुद्भतः ॥२४७॥ गजयोनिंचवैभुक्त्वामानुषत्वंततोऽभवत् ॥ पूर्वपापानुसारेणमहाव्याधिःप्रजायते ॥ गायत्रीलक्षजापा
श्चहवनंमार्जनंतथा ॥ २४८ ॥ १।२।५।८।११।१३।१७।१९।२५।३१ । ३६ वर्षेपीडाभवेत्तस्यपरमायुःशताब्दकम् ॥ २४९ ॥ इति ॥
॥ ४७ अथटंटकयोगोव्याख्यायते ॥ अयोध्यानगरात्पूर्वेयोजनद्वयसंमिते ॥ २५० ॥ लवनस्यपुरेरम्येवसंतिबहवोजनाः ॥ २५१ ॥
तन्मध्येशूद्रएकोहिकैवर्तोधनधान्यवान् ॥ मत्स्यव्यापारनिरतस्तत्सकाशात्कृतंधनम् ॥२५२॥ मत्स्यंभुंक्तेचनित्यंसमांसंबहुविधंद्विज॥
निर्दयःसर्वजंतूनांकच्छपानांविशेषतः ॥ २५३ ॥ एवंबहुगतेकालेतस्यमृत्युरभूत्पुरा ॥ यमदूतैर्महाघोरैर्निक्षिप्तश्चयमाज्ञया ॥२५४॥ नर
कान्निःसृतोदेवदद्रुणश्चतदाऽभवत् ॥ ऋक्षत्वंचपुनस्तत्रमानुषत्वमजायत ॥ २५५ ॥ १।३।८।११।१५।२० । २७ । ३८ वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ६९ ॥ ४८ अथटारुयोगः ॥ आसीज्जन्मांतरेचैवधनीवैश्यकुलेतदा ॥ मैथिलस्याऽतिनिकटेमंगलेनामवैपुरे ॥ २५६ ॥
तस्यपत्नीविशालाक्षीसुन्दरीसुखदायिनी ॥ आचारवांश्चशांतोहिक्रयविक्रयतत्परः ॥ २५७ ॥ एकदाब्राह्मणःस्नेहीतस्यगेहेसमागतः ॥
आदरंबहुधाकृत्वाभोजयामासशास्त्रतः ॥ २५८ ॥ स्वर्णदानंततोदेवलक्षमुद्राःप्रदापिताः ॥ दत्तावैश्येनभोदेवब्राह्मणायसुशांतये ॥२५९॥
ब्राह्मणेनततोद्रव्यंस्थापितंतस्यवैगृहे ॥ ततःकाश्यांद्विजोगत्वासमृत्युवशगोऽभवत् ॥२६०॥ भुक्तंसर्वंततोदेवस्वदत्तंचयदाधनम् ॥ अयो
ध्यायांमहातीर्थेस्वर्गंगत्वांचवैश्यजः ॥ ततःपुण्यक्षयेजातेपुनरागत्यभूतले ॥२६१॥ १।४। ९ । १३ । १७ । २० । २५ । २९ । ३६

वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६२ ॥ ४९ अथटांरणयोगः ॥ कश्चिद्द्विजकुलेपूर्ववंगदेशेतदाऽवसत् ॥ मत्स्यमांसादनेव्यग्रःसुरापीवृष
लीपतिः ॥ २६२ ॥ प्रत्यहंद्यूतकारीसव्ययंकृत्वाधनंभृशम् ॥ एवंबहुतिथेकालेतस्यमृत्युरभूत्पुरा ॥ २६३ ॥ पापाच्चनरकेगत्वाह्यसिपत्र
वनांतरे ॥ नानायोनिषुचोत्पन्नोबहुवर्षप्रमाणकम् ॥ पश्चान्मानुष्यमापन्नःकिंचित्पुण्यप्रभावतः ॥ २६४ ॥ १। ६।९।१३।१८।२०।२२।
२६।३२।३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०५ ॥ ५० अथटीमाकरयोगः ॥ आसीज्जन्मांतरेचैवकुलालःकीकटेवसन् ॥ मयादासइ
तिख्यातःपत्नीपुत्रसमन्वितः ॥ २६५ ॥ पात्राणांमृन्मयानांसक्रयविक्रयकारकः ॥ तस्यप्रियःसमायातोब्राह्मणोवेदपारगः ॥२६६॥ पत्नी
तस्यमहादुष्टाब्राह्मणीव्यभिचारिणी ॥ कुलालेनकृतामैत्रीमैथुनंप्राकरोत्सदा ॥ २६७॥ एवंगतेषुवर्षेषुकुलालोमरणंगतः ॥ ततोयमपुरेप्रा
प्तोयमदूतैर्निपीडितः ॥ २६८ ॥ महाकटाहनरकेरौरवेचसमाविशत् ॥ बहुवर्षसहस्रांतेमानुषत्वंपुनर्भवेत् ॥ २६९ ॥ १।३।७।१२।१५
२० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ५० पुनः टीमाकरयोगः ॥ विष्णुकांच्यांपुराविप्रवैश्यस्त्वेकोऽवसत्तदा ॥ मकरंदइतिख्यातः
पत्नीतस्यसुलोचना ॥ २७० ॥ अश्वादिविक्रयंकृत्वाराजपक्षीतदानघ ॥ पितृसेवांपरित्यज्यभक्ताद्यैर्व्यसनेरतः ॥ २७१ ॥ पितृश्राद्धंकृतं
नैवद्विजाश्चापिनभोजिताः ॥ एवंगतेषुवर्षेषुपंचत्वंतस्यचाऽभवत् ॥ २७२ ॥ भुक्त्वानरकजंदुःखंक्रमियोनिंविशेषतः ॥ नरकान्निःसृतोदेव
बिडालोपिबभूवह ॥ इदंजन्मतृतीयंतुमानुषश्चाऽभवद्ध्रुवम् ॥२७३ ॥ १।२।५।१०।१५।२०।२४ वर्षेषुकष्टम्॥परमायुर्वर्षाणि ६६॥५१अथ
टोनयोगः॥कश्चिद्द्विजकुलेपूर्वंब्रह्मपुत्रस्यसंनिधौ॥वृंददेवइतिख्यातःसपत्नीकःसपुत्रकः॥शास्त्राभ्यासीमनोत्साहीकुकर्मणिरतःसदा॥२७४॥
भ्राताकनीयांश्चतस्यतस्यपत्नीसुशोभना ॥ बलादाकर्षितातेनकृतःसुरतिसंगमः ॥ भ्रातुःप्रतिभवेद्युद्धमतिप्रबलदंडिना ॥ २७५ ॥

कनिष्ठेनहतस्तत्रसमृतःपापभागपि ॥ नानानरकेषुसस्थित्वाकृमियोनिशतंगतः ॥ पुनर्वैमानुषोजातोमध्यदेशेद्विजोत्तम ॥ २७६ ॥ संहि.
१।३।५।८।१२।१६।२०।२७।३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि८०॥५२ अथटाराकीयोगः ॥ मथुरायांवसन्पूर्वंगुर्जरोबहुधार्मिकः॥ महि
षीगोधनधनैःसंकुलंतस्यवेश्मच॥२७७॥दधिदुग्धंघृतंतक्रंविक्रयामासवैखलु॥तत्सकाशात्कृतंद्रव्यंरत्नानिविविधानिच ॥२७८॥एकस्मि
न्समयेविप्रतुलादानंतदाऽकरोत् ॥ ब्राह्मणायददौद्रव्यंपुष्कलंस्वर्णरूपकम् ॥२७९॥ एवंचैवगतेकालेवृद्धत्वेचतदाऽनघ ॥ पुत्रायचददौद्रव्यं
भ्रातृपुत्रायनैवच ॥ २८०॥ ततोबहुतिथेकालेतस्यमृत्युरभूत्पुरा ॥ पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन॥पुनर्वैमानुषीयोनौधनधान्य
समाकुलः ॥२८१॥ १।५।१०।१३।२०।२७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६१ ॥ ५३ अथटाकनयोगः ॥ कश्चिद्वैश्यकुलेपूर्वंरेवानद्या
श्चसन्निधौ ॥ प्रवीरइतिविख्यातःक्रयविक्रययोरतः ॥ २८२ ॥ धनधान्यसमृद्धश्चधर्मकर्मार्चनेरतः ॥ एकस्मिन्समयेविप्रबाहुजस्यप्रसं
गतः ॥ २८३ ॥ वनंदावाग्निनादग्धंहत्वाजन्तून्बहूंस्तदा ॥ तीर्थावगाहनेयातःपरिवारेणसंयुतः ॥ २८४ ॥ नौकोपरिसमाविश्यगंगाम
ध्येनिमज्जितः ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गंतथागतः ॥ ततःपुण्यक्षयेजातेमर्त्यलोकेचमानुषः ॥ २८५ ॥ १ । ३ । ५ ।
८ । १२ । २० । २५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८२ ॥ ५४ अथटनकाद्युतियोगः ॥ आसीज्जन्मांतरेचैवकौण्डिन्योनामब्राह्मणः ॥
वेदविद्याविवेकीचअर्भकान्पाठयेत्ततः ॥ २८६ ॥ सहशिष्यैश्चसविप्रःपरदेशेतदागतः ॥ विद्याविलासमभवत्पराजयमचीकरत् ॥२८७॥
तेनभूपेनविप्रायद्रव्यंदत्तंसुपुष्कलम् ॥ स्वगृहेसम्यगानीयसन्मार्गेचव्ययःकृतः ॥ २८८ ॥ आयुषस्तुसमाप्तित्वात्सविप्रःपंचतां
गतः ॥ षष्टिवर्षसहस्राणिभुक्त्वास्वर्गभवंफलम् ॥ ततःपुण्यक्षयेजातेपुनरागत्यभूतले ॥ २८९॥१।५।१०। १५ । २० । २५ । २९ ८८

वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९॥५५ अथटोडलाख्ययोगः॥ अथांतरेप्रवक्ष्यामियत्कृतंपूर्वजन्मान ॥ पुनःपुनानदातारंब्राह्मणान्यवसत्त
दा॥ मोऽत्रदेवइतिख्यातःसपत्नीकःसपुत्रकः ॥२९०॥ शिवस्याऽऽराधनेव्यग्रोब्राह्मणानांचपालकः ॥ सर्वस्वंविधिनादत्तंसत्पात्रायद्विजाय
च ॥२९१॥ एकस्मिन्समयेविप्रकृतंकर्मजुगुप्सितम् ॥ स्वकृतंवर्णितंसम्यग्गोत्रजागमनंकृतम् ॥ २९२ ॥ आयुषस्तुसमाप्तित्वात्समृतः
कालचोदितः ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गनिवासकृत् ॥ पुनर्वैमानुषीयोनौपूर्वपुण्यात्सआगतः ॥ २९३ ॥ १ । ८ । १६ ।
२२ । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६२ ॥ ५६ अथटीकाख्ययोगः ॥ आसीज्जन्मांतरेचैवविवेकीनृपतिःप्रभुः ॥ इंद्रसेनिरि
तिख्यातःपत्नीपुत्रसमन्वितः ॥ २९४ ॥ धर्ममार्गेचकुशलोब्राह्मणाऽतिथिपूजकः ॥ एकस्मिन्समयेविप्रह्यरातिश्चसमागतः ॥
॥ २९५ ॥ परस्परंकृतंयुद्धंततःकोलाहलोह्यभूत् ॥ तत्पुरंचगृहीतंवैह्यरातिनातदानघ ॥ २९६ ॥ भयभीतश्चभूपःसपलायनपरायणः ॥
एकाकीहयमारुह्यजगामगहनेवने ॥ २९७ ॥ तपश्चर्य्याकृतातत्रबहुवर्षांतरेमृतः ॥ पुनरागत्यमेदिन्यांषष्टिवर्षसहस्रके ॥ गौरांगोभव्यमूर्तिश्च
सर्वसम्पद्युतोधुना ॥ २९८ ॥ १ । ४ । ८ । १२ २० । २५ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५९ ॥ ५७ अथटौनकयोगः ॥
पूर्वजन्मनिवैश्योऽसौकाम्पिल्येनगरेवसन् ॥ मोहनेतिसमाख्यातःपत्नीतस्यखगेश्वरी ॥ २९९ ॥ दम्पतीप्रीतिवशतस्तीर्थराजेसमा
गतौ ॥ तौस्नातौमृगगेभानौमासमेकंनिरंतरम् ॥ ३०० ॥ हरिद्वारेततोगत्वागंगास्नानंकृतंद्विज ॥ वैजनाथेसमागत्यवैजनाथार्चनंकृत
म् ॥ ३०१ ॥ पत्नीतस्यमृतातत्रशोकाकुलितमानसः ॥ उन्मत्तोपिबभूवापिपर्य्यटन्गांचतुर्दिशः ॥ ३०२ ॥ आयुषस्तुसमाप्तित्वात्सवैश्यः
पंचतांगतः ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गेतथाऽनघ ॥ मानुषश्चभवेत्सोपिसर्वसम्पद्युतोऽधुना ॥ ३०३ ॥ १ । ८ । १३ । १७ ।

...१० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६८ ॥ ५८ अथठकुरेश्वरयोगः ॥ सौराष्ट्रेनगरेपूर्वंशोभनेनामवैपुरे ॥ क्षत्रियश्चाऽवसत्त्वेकोधन
धान्यसमन्वितः ॥ ३०४ ॥ गोविंदइतिविख्यातः पत्नीतस्यसुधाकरी ॥ वैश्यवृत्तिरतोनित्यंव्यापारंसर्वदाऽकरोत् ॥ ३०५ ॥ व्यापारा तंहि-
र्थंततोदेववृषभौपालितौयदा ॥ द्वौवृषौयोजितौतेनकूपेचपतितौमृतौ ॥ ३०६ ॥ मृतौपुत्रौचसमयेनजातोन्यस्तदाद्विज ॥ यत्किंचि
त्क्रियतेकर्मशुभंवाप्यशुभंद्विज ॥ ३०७ ॥ तत्सर्वंचक्षयंयातंमृत्वाचनरकंगतः ॥ मुद्गरैस्ताडयामासुर्यमदूतायमाज्ञया ॥ षष्टिवर्षसहस्रांते
मानुषत्वमिहागतः ॥ ३०८ ॥ १ । ४ । ८ । १२ । १६ । २० । २२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७२ ॥ ५९ अथडारतीयोगः ॥
देशेकाश्मीरकेचैवकाष्ठकारोऽवसत्पुरा ॥ रंगदासःसमाख्यातःपत्नीद्वयसमन्वितः ॥ ३०९ ॥ छित्त्वासर्वाणिकाष्ठानिव्ययंकुर्य्याद्दिने
दिने ॥ स्वगोत्रकन्ययातेनमैथुनंचकृतंहठात् ॥ ३१० ॥ ततोबहुतिथेकालेतस्यमृत्युरभूत्पुरा ॥ यमदूतैर्महाघोरेनरकेपरिपातितः ॥
॥ ३११ ॥ षष्टिवर्षसहस्रांतेपुनर्वैमानुषोऽधुना ॥ गोत्रजागमनात्पापात्पुत्रमृत्युर्ध्रुवंभवेत् ॥ १ । ३ । ८ । १२ । १६ । २० ।
२९।२८ । ३१ । ३६ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ वर्षेकष्टंविजानीयात्षट्षष्टिसंमितेमृतिः ॥ ३१२ ॥ ६० अथडोरमाकांतयोगः
सौहलेवैपुरेरम्येसिंहदेवेतिबाहुजः ॥ तस्यभार्य्याविशालाक्षीसुर्य्यानाम्नीतिविश्रुता ॥ ३१३ ॥ आतिथ्यकरणेसक्तादेवताद्विजपूजका ॥
कार्तिकेमाघेवैशाखेदीपदानंकरोतिसा ॥ ३१४ ॥ कदाचिद्दैवयोगेनतीर्थयात्रांसमागता ॥ सामृतातत्रभोविप्रदेवलोकेगताद्विज॥३१५॥
सिंहदेवेनवैतत्रचोरितंवैश्यकंधनम् ॥ कालसर्पेणवैहत्वाक्षत्रियोनरकंगतः ॥ ३१६ ॥ विंशद्वर्षसहस्रांतेपुनर्वैमानुषोऽभवत् ॥ ३१७ ॥
१ । ६ । १० । १८ [illegible] कष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ६१ अथडाहीयोगः ॥ नर्मदादक्षिणेभागेब्राह्मणःपूर्वजन्मनि ॥ ८९
।सहस्राणिभुक्त।

कापद्याऽऽचरणेव्यग्रः परद्रव्याऽपहारकः ॥ ३१८ ॥ कुशदेवइतिख्यातः पत्नीतस्यवरांगना ॥ एकस्मिन्समयेविप्रतस्यमित्रंसमागतम् ॥ ॥ ३१९ ॥ तस्यभार्य्यातिगौराचमृद्वंगीचारुलोचना ॥ तयासहकृतामैत्रीमैथुनंचचकारसः ॥ ३२० ॥ तस्यधनंचयत्किंचिद्व्ययंकृत्वा दिनेदिने ॥ एवंस्वल्पगतेवर्षेब्राह्मणः पंचतांगतः ॥ ३२१ ॥ तिर्यग्योनौसमुत्पन्नोजंबुकाकौतथामृगः ॥ इदंतुमानुषंजन्मधनपुत्रविवर्जितम् ॥ ॥ ३२२ ॥ १ । ४ । ८ । १२ । १६ । २० । २९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ६२ अथडावरयोगफलंप्रकथ्यते ॥ अथां तरेप्रवक्ष्यामियोगंडावरमेवच ॥ कश्चिद्द्विजकुलेपूर्वंशोणभद्रस्यपश्चिमे ॥ ३२३ ॥ नारंतकःसमाख्यातःक्षात्रधर्मपरायणः ॥ द्रव्यंचवि पुलंकृत्वाबहुग्रामाधिकारकः ॥ ३२४ ॥ नानामनोरथयुक्तेनशिवस्थापनंकृतम् ॥ आहूयब्राह्मणाःसर्वेह्याहताश्चविशेषतः ॥ ३२५ ॥ एकंसंपूज्यविप्रंचकृतंद्वंद्वंपरस्परम् ॥ नदत्तंतस्यवैकिंचिद्विमुखोब्राह्मणोगतः ॥ ३२६ ॥ एवंस्वल्पेगतेकालेसविप्रः पंचतांगतः ॥ ततोवैमानुषी योनौमर्त्यलोकेसमागतः ॥ ३२७ ॥ धनधान्ययुतोप्यत्रपुत्रवृद्धिर्नजायते ॥ महारोगेणविकलःसर्वदातप्तमानसः ॥ ३२८ ॥ १ । ५ । ९ । १३ । १८ । २२ । २९ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ६३ अथडेनयोगः ॥ कलिंगेब्राह्मणश्चासीद्वेदपाठीचधार्मिकः ॥ शिष्याअध्यापिताविप्रबहुकालंविशेषतः ॥ ३२९ ॥ एकदाक्रोधयुक्तेनकश्चिच्छात्रोऽतिताडितः ॥ तेनपापेनप्रथमंभुक्त्वानरकजंफलम् ॥ ॥ ३३० ॥ पश्चात्पुनर्नंदनंप्राप्तोविद्यादानप्रभावतः ॥ तत्रत्यभोगंभुक्त्वाऽथपुनश्चात्रैवब्राह्मणः ॥ ३३१ ॥ विद्याऽभ्यासीसुधर्माचधनधान्य समन्वितः ॥ पुत्रदारयुतोधीमान्विद्यादाताजितेन्द्रियः ॥ ३३२ ॥ ७ । १२ । १६ । २० । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ६४ अथडेलाख्ययोगः ॥ डेलाख्ययोगेयोजातोबाहुजोवंगदेशके ॥ शिवदासःपुराख्यातःशिवस्याऽऽराधनेरतः ॥ ३३३ ॥ एकदाशिवरात्रौ

२० । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६८ ॥ ५८ अथठकुरेश्वरयोगः ॥ सौराष्ट्रेनगरेपूर्वंशोभनेनामवैपुरे ॥ क्षत्रियश्चाऽवसत्त्वेकोधन धान्यसमन्वितः ॥ ३०४ ॥ गोविंदइतिविख्यातः पत्नीतस्यसुधाकरी ॥ वैश्यवृत्तिरतोनित्यंव्यापारंसर्वदाऽकरोत् ॥ ३०५ ॥ व्यापारा र्थंततोदेववृषभौपालितौयदा ॥ द्वौवृषौयोजितौतेनकूपेचपतितौमृतौ ॥ ३०६ ॥ मृतौपुत्रौचसमयेनजातोन्यस्तदाद्विज ॥ यत्किंचि त्क्रियतेकर्मशुभंवाप्यशुभंद्विज ॥ ३०७ ॥ तत्सर्वंचक्षयंयातंमृत्वाचनरकंगतः ॥ मुद्गरैस्ताडयामासुर्यमदूतायमाज्ञया ॥ षष्टिवर्षसहस्रांते मानुषत्वमिहागतः ॥ ३०८ ॥ १ । ४ । ८ । १२ । १६ । २० । २२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७२ ॥ ५९ अथडारतीयोगः ॥ देशेकाश्मीरकेचैवकाष्ठकारोऽवसत्पुरा ॥ रंगदासःसमाख्यातःपत्नीद्वयसमन्वितः ॥ ३०९ ॥ छित्त्वासर्वाणिकाष्ठानिव्ययंकुर्य्याद्दिने दिने ॥ स्वगोत्रकन्ययातेनमैथुनंचकृतंहठात् ॥ ३१० ॥ ततोबहुतिथेकालेतस्यमृत्युरभूत्पुरा ॥ यमदूतैर्महाघोरेनरकेपरिपातितः ॥ ॥ ३११ ॥ षष्टिवर्षसहस्रांतेपुनर्वैमानुषोऽधुना ॥ गोत्रजागमनात्पापात्पुत्रमृत्युर्ध्रुवंभवेत् ॥ १ । ३ । ८ । १२ । १६ । २० । २५।२८ । ३१ । ३६ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ वर्षेकष्टंविजानीयात्षट्षष्टिसंमितेमृतिः ॥ ३१२ ॥ ६० अथडोरमाकांतयोगः सौहलेवैपुरेरम्येसिंहदेवेतिबाहुजः ॥ तस्यभार्य्याविशालाक्षीसूर्य्यानाम्नीतिविश्रुता ॥ ३१३ ॥ आतिथ्यकरणेसक्तादेवताद्विजपूजका ॥ कार्तिकेमाघेवैशाखेदीपदानंकरोतिसा ॥ ३१४ ॥ कदाचिद्दैवयोगेनतीर्थयात्रांसमागता ॥ सामृतातत्रभोविप्रदेवलोकेगताद्विज॥३१५॥ सिंहदेवेनवैतत्रचोरितंवैश्यकंचनम् ॥ कालसर्पेणवैहत्वाक्षत्रियोनरकंगतः ॥ ३१६ ॥ विंशद्वर्षसहस्रांतेपुनर्वैमानुषोऽभवत् ॥ ३१७॥ १ । ६ । १० । १९सहस्राणमुंचकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ६१ अथडाहीयोगः ॥ नर्मदादक्षिणेभागेब्राह्मणःपूर्वजन्मनि ॥

तंहि-

कापटकाऽऽचरणेव्यग्रःपरद्रव्याऽपहारकः ॥ ३१८ ॥ कुशदेवइतिख्यातःपत्नीतस्यवरांगना ॥ एकस्मिन्समयेविप्रतस्यमित्रंसमागतम् ॥
॥ ३१९ ॥ तस्यभार्य्यातिगौराचमृद्वंगीचारुलोचना ॥ तयासहकृतामैत्रीमैथुनंचचकारसः ॥ ३२० ॥ तस्यधनंचयत्किंचिद्व्ययंकृत्वा
दिनेदिने ॥ एवंस्वल्पगतेवर्षेब्राह्मणःपंचतांगतः॥३२१॥तिर्यग्योनौसमुत्पन्नोजंबुकाकौतथामृगः ॥ इदंतुमानुषंजन्मधनपुत्रविवर्जितम् ॥
॥ ३२२ ॥ १ । ४ । ८ । १२ । १६ । २०। २९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७९ ॥ ६२ अथडावरयोगफलंप्रकथ्यते ॥ अथां
तरेप्रवक्ष्यामियोगंडावरमेवच ॥ कश्चिद्द्विजकुलेपूर्वंशोणभद्रस्यपश्चिमे ॥ ३२३ ॥ नारंतकःसमाख्यातःक्षात्रधर्मपरायणः ॥ द्रव्यंचवि
पुलंकृत्वाबहुग्रामाधिकारकः ॥ ३२४ ॥ नानामनोरथयुक्तेनशिवस्थापनंकृतम् ॥ आहूयब्राह्मणाःसर्वेह्याहताश्चविशेषतः ॥ ३२५ ॥
एकंसंपूज्यविप्रंचकृतंद्वंद्वंपरस्परम् ॥ नदत्तंतस्यवैकिंचिद्विमुखोब्राह्मणोगतः ॥३२६॥ एवंस्वल्पेगतेकालेसविप्रःपंचतांगतः॥ततोवैमानुषी
योनौमर्त्यलोकेसमागतः ॥ ३२७ ॥ धनधान्ययुतोप्यत्रपुत्रवृद्धिर्नजायते ॥ महारोगेणविकलःसर्वदातप्तमानसः ॥ ३२८ ॥ १ । ५
९ । १३ । १८ । २२ । २९ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ६३ अथडेनयोगः ॥ कलिंगेब्राह्मणश्चासीद्वेदपाठीचधार्मिकः॥
शिष्याअध्यापिताविप्रबहुकालंविशेषतः ॥ ३२९ ॥ एकदाक्रोधयुक्तेनकश्चिच्छात्रोऽतिताडितः ॥ तेनपापेनप्रथमंभुक्त्वानरकजंफलम् ॥
॥ ३३० ॥ पश्चात्तुनंदनंप्राप्तोविद्यादानप्रभावतः ॥ तत्रत्यभोगंभुक्त्वाऽथपुनश्चात्रैवब्राह्मणः ॥ ३३१ ॥ विद्याऽभ्यासीसुधर्माचधनधान्य
समन्वितः ॥ पुत्रदारयुतोधीमान्विद्यादाताजितेन्द्रियः ॥ ३३२ ॥ ७ । १२ । १६ । २० । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ६४
अथडेलाख्ययोगः ॥ डेलाख्ययोगेयोजातोबाहुजोवंगदेशके ॥ शिवदासःपुराख्यातःशिवस्याऽऽराधनेरतः ॥ ३३३ ॥ एकदाशिवरात्रौ

तुजागरणेह्याखुरागतः ॥ पुष्पंगृहीत्वागतवांस्तावत्तेनप्रताडितः ॥ २३४ ॥ ताडनान्मरणंयातस्तेनाऽसौपापभाक्खलु ॥ मृत्वायमाज्ञ
यादुःखंभुक्त्वेशानस्यसन्निधिम् ॥ २३५ ॥ तत्रभुक्त्वाबहून्भोगान्भूतलेसुंदरोजनः ॥ पुत्रभार्यादिसहितोधनीमानीप्रतापवान् ॥२३६॥
१५।२२।२७।३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८० ॥ ६५ अथडंडभतरियोगः ॥ देशेकलिंगकेपूर्वेवैश्योऽभून्मदनेपुरे ॥ शिवदासइति
ख्यातःपत्नीतस्यपतिव्रता ॥ २३७ ॥ कलावतीतिविख्याताकृष्णभक्तिपरायणा ॥ जन्माष्टम्यांभाद्रपदेव्रतंकृतवतीततः ॥२३८॥ शिव
दासोऽपिदृष्ट्वैवचकारव्रतमुत्तमम् ॥ कथंचिद्दिनमुल्लंघ्यक्षुधार्तःसनिशामुखे ॥२३९॥ क्रोधेनोक्तंप्रियायैनोनिशीथान्तंनजीवनम् ॥ भोजनं
कुरुदुर्बुद्धेकिमेतेनव्रतेनच ॥२४०॥ नाङ्गीकृतंकलावत्यातद्वचोभक्तिकारणात् ॥ अतिक्रोधेनदुष्टेनताडितासावरांगना ॥२४१॥ मृत्वाया
ताचमृद्वंगीवैकुंठभवनंततः ॥ विरहेणप्रतप्तोऽसौशीघ्रंमृत्युंगतस्तदा ॥ २४२ ॥ यमाज्ञयारौरवंतुभुक्त्वायातोधरातले ॥ उद्वाहितोद्वाहिता
चकांतातस्यनजीवति ॥ २४३ ॥ ५ । १५ । २० । २५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८० ॥ ६६ अथडालमालयोगः ॥ डालमाले
नरःकश्चिच्छूद्रोभूदंगकेपुरा ॥ जीवघातीसर्वदाचतथाऽधर्मरतश्चसः ॥ २४४ ॥ एकदातेननिहतोमृगश्चमुनिपालितः ॥ तद्वियोगेनतप्तो
ऽसौमुनिश्चव्याकुलेन्द्रियः ॥ २४५ ॥ कालेनाल्पेनभोदेवशूद्रोयातोयमालयम् ॥ लोहशंकुंचनरकंभुक्त्वाऽऽयातश्चभूतले ॥ २४६ ॥ मृग
हत्यासूचकंचिह्नंवामांगेचप्रदृश्यते ॥ तेनैवघोरपापेनपुत्रसौख्यविवर्जितः ॥ २४७ ॥ १० । १९ । ३० । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
८० ॥ ६७ अथडमास्करयोगः ॥ डमस्करेचयोजातोबाहुजःसकलिंगके ॥ चोलसिंहःपुराख्यातःप्रजापालनतत्परः ॥ २४८ ॥ एकदाच
कृतोमन्तुस्तेनराज्ञाद्विजोत्तम ॥ हतासगर्भाचमृगीतेनपापेनदूषितः ॥ २४९ ॥ मृत्वायातश्चनरकंभुक्त्वापापंतदात्मनः ॥ भूतलेमानवीयो

युर्वर्षाणि ६९।

नौपुत्रस्त्रीसुखवर्जितः ॥ २५० ॥ २० । २५ । ३० । ३४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६५ ॥ ६८ अथडोहनयोगः ॥ पूर्वजन्मनिदा शोऽसौतैलंगेनिवसन्पुरा ॥ परिचर्य्यारतोनित्यंविप्राणांचविशेषतः ॥ २५१ ॥ एवंगतेषुवर्षेषुसमृत्वानंदनेगतः ॥ क्षीणेपुण्येततोविप्रमा नुषःक्षितिमंडले ॥ २५२ ॥ सर्वसौख्ययुतोधीमान्सर्वाभीष्टप्रसादकः॥शूरोदातागभीरश्चजनेषुसप्रधानकः ॥२५३॥रोगार्तोजायतेसोपि वर्षेमासेचहायने॥२५४॥ १।२।४।७।१२।१५।१९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६२ ॥ ६९ अथडोहनकारीयोगः ॥ आसीत्पूर्वंचकेदा रेबाहुजश्चप्रतापवान् ॥ काव्यकर्ताधनीमानीराजसश्चतुरःसुधीः॥२५५॥सुस्वादीसुगुणज्ञश्चप्रवक्तादंभसंयुतः॥एकस्मिन्समयेविप्रब्राह्मस्त्वे कआगतः ॥ २५६ ॥ सर्वशास्त्रस्यवक्ताचबाहुजस्यगृहंगतः ॥ शास्त्रवादोह्यभूत्तत्रपरस्परंतदाऽनघ ॥ ब्राह्मणःक्षत्रियस्यैवपराजयमचीकर त् ॥ २५७ ॥ बाहुजश्चातिकोपेनचापभ्रंशंतदाऽवदत् ॥ ब्राह्मणेनातिक्रोधेनशापोदत्तश्चदुष्करः ॥ सराजाराक्षसोभूत्वाचाशीत्यब्दसहस्र कम् ॥ पुनर्वैमानुषीयोनौपुत्रकन्याविवर्जितः ॥ २५८ ॥ १।५।१३।१८।२२।२७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ७१ अथडंडक योगः ॥ आसीज्जन्मांतरेचैवविप्रवंशेमहागुणी ॥ आभीरस्यप्रसंगेनदुष्टकर्मरतःसदा ॥ २५९ ॥ परदाराभिगमनःपरद्रव्यापहारकः ॥ एवंहिन्यवसत्तत्रबहुवर्षगतागतैः ॥ २६० ॥ आयुषस्तुसमाप्तित्वात्सविप्रःपंचतांगतः ॥ बभूवगर्दभः सोपिमृगोभूत्वाचपर्वते ॥ २६१ ॥ मृगयोनिंपरित्यज्यहंसःसरसिमानसे ॥ पुनर्वैमानुषोभूत्वामध्यदेशेद्विजोत्तम ॥ २६२ ॥ गौरारुणोदीर्घदेहोध नधान्यसमन्वितः ॥ प्रथमेपंचमेवर्षेद्वादशेर्विंशवर्षके ॥ मृत्युतुल्यंभवेत्कष्टंषट्षष्टचब्दंचजीवनम् ॥ २६३ ॥ ७२ अथडोरयोगः प्रकथ्यते ॥ कश्चिन्म्लेच्छकुलेपूर्वंयमनोनामविश्रुतः ॥ गोमतीतटिनीतीरेन्यवसत्पूर्वजन्मनि ॥ २६४ ॥ धनधान्यसमृद्धस्तुसत्क

भाणमनीरमः ॥ एकस्मिन्समयेविप्रजातोऽत्यर्थमहर्घता ॥ २६५ ॥ भवल्लोकोपरकश्चहाहाभूताचमेदिनी ॥ यमनेनतद देवदत्तं
धान्यंविशेषतः ॥ २६६ ॥ बुभुक्षितेभ्यश्चाब्दान्तंददावन्नंतदाकिल ॥ आयुषस्तुसमाप्तित्वात्समृतोजाह्नवीतटे ॥ २६७॥ स्वर्गेगत्वाच
भोविप्रकल्पमेकंतथाऽवसत् ॥ सजातोमानुषोप्यत्रसर्वसौख्यसमन्वितः ॥ २६८ ॥ १।३।५।८।१२।१६।२०।२५।३१ वर्षे
षुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ७३ अथडाहेंद्रयोगः ॥ पूर्वजन्मनिवैश्योसौगंगातीरेतदावसन् ॥ डालचंदइतिख्यातः पत्नीतस्यमनो
त्सवा ॥२६९॥ क्रयविक्रयकर्ताचधनपुत्रसमन्वितः । घृतमिष्टान्नव्यापारात्कृतंद्रव्यंतुपुष्कलम् ॥२७०॥ एकंतस्यभवेन्मित्रंवैश्योग्रामा
धिपस्तदा ॥ तेनवैश्येनवैश्यायददौद्रव्यंविशेषतः ॥ २७१ ॥ कार्य्यार्थंयाचितंतेननदत्तंलोभहेतुना ॥ भोजनेचविषंदत्त्वामित्रघातंतथाऽ
करोत् ॥२७२॥ मित्रघातनकात्पापाद्गतोऽसौयमशासनम् ॥ षष्टिवर्षसहस्राणिभुक्त्वानरकजंफलम् ॥ पुनरागत्यमेदिन्यामांत्रवेद्येप्रजा
यते ॥ २७३ ॥ १।३।६।१०।१५।२२।२८।३३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७७ ॥ ७४ अथडिल्पिकयोगः ॥ डिल्पिकेयो
गयोजातोब्राह्मणः पूर्वजन्मनि ॥ केशवेतिसमाख्यातोब्रह्मचर्य्यरतःसदा॥२७४॥एकांघ्रिभुजमुत्थाप्यरामनामस्मरंश्वसः॥दंडकारण्यानिक
टेकृतवान्दारुणंतपः ॥ ३७५ ॥ तपोन्तेचक्ष्भूवापिविघ्नंतस्यविशेषतः ॥ एकातुस्वैरिणीभव्यायथाकामंहिचागता ॥३७६॥ परस्परंलग्न
चित्तौकामकृच्छ्रेणमोहितौ ॥ तपश्चर्यांपरित्यज्यभक्ताद्यैर्व्यसनेरतः ॥ ३७७ ॥ तेनपापानुसारेणभुक्त्वाभोगांश्चशाश्वतान् ॥ मनुष्यस्य
कुलेजाताइदानींसुतसंयुतः ॥ ३७८ ॥ १।३।८।१४।१८।२०।२७।३७ वर्षेषुकष्टम ॥ महोत्पातः ॥ परमायुर्वर्षाणि ६३ ॥ ७५
अथ डहरुयोगः ॥ डहरुयोगेयोजातः पूर्वजन्मनिमर्कटः ॥ सरयूनद्याश्चतीरेतुन्यवसत्पूर्वजन्मनि ॥ ३७९ ॥ समृतःसरयूमध्येबभूव

पृथिवीपतिः ॥ भ[illegible]पूज्यश्चशिवस्याऽऽराधनेरतः ॥ २८० ॥ परमोदारोऽतुलश्चपरात्मनांचपोषकः ॥ एकस्मिन्समयेविप्रगृहंत्य
क्त्वासमार्थ्यकः ॥ २८१ ॥ हिमाद्रिनिकटेगत्वातत्रस्थित्वाद्विजोत्तम ॥ आराधयन्महादेवमम्बुपर्णाशनेरतः ॥२८२॥ सराजापंचतांप्राप्तः
स्वर्गलोकेतदागतः ॥ षष्टिवर्षसहस्रांतेचागतोभूमिमंडले ॥२८३ ॥ १।३।९।१६।२०।२९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७४ ॥ ७६
अथदुल्कटयोगः ॥ पुरेवैमदनेदेवतैलकारोऽवसत्पुरा ॥ धनधान्यसमायुक्तः कोटिद्रव्यसमन्वितः ॥ स्त्रियौतुतस्यद्वेआस्तांज्येष्ठाभ्रष्टाचकर्क
शा ॥ २८४ ॥ कनिष्ठाचगृहेतस्यगृहिणीधर्मचारिणी ॥ त्यक्ताबहुतिथेकालेतैलकारोमृतस्तदा ॥ पापाच्चनरके गत्वास्त्रीत्यागात्पापभाक्ख
लु ॥ २८५ ॥ कुक्कुटोमहिषोव्याघ्रःसर्पयोनौपुनःपुनः ॥ पश्चाच्चमर्कटोभूत्वासमृतोजाह्नवीतटे ॥ २८६ ॥ पुनश्चमानुषीयोनौजातश्चा
त्रतुभार्गव ॥ धनधान्यसमायुक्तोगुणज्ञोज्ञानवानपि ॥ बहुरोगसमायुक्तस्तथापुत्रोनजायते ॥ ३८७ ॥ १।३।७।१२।१६।२०।२५।३०।
३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९६ ॥ ७७ अथटेमयोगः ॥ गयापुर्यांपुरादेवब्राह्मणोन्यवसत्तदा ॥ वेदकर्मपरिभ्रष्टोमद्यपानरतःसदा
॥२८८॥ वेश्यागमनरक्तश्चपाखंडाचरणेरतः ॥ आयुषस्तुसमाप्तित्वात्सविप्रःपंचतांगतः ॥ ३८९ ॥ महाकटाहनरकेनिक्षिप्तोयमदूतकैः॥
बहुवर्षसहस्रांतेपुनरागत्यभूतले ॥ युक्तःसौख्येनमहतापुत्रकन्याविवर्जितः ॥२९०॥२।४।६।१०।१९।२२।२५।३६ वर्षेषुकष्टम्॥ परमायु
र्वर्षाणि ७८ ॥ ७८ अथटेमाख्ययोगः ॥ देशेहिनंदनेचैवस्वर्णकारोवसत्तदा ॥ महाधनीमहोत्साहीस्वकर्मनिरतःसदा॥३९१॥तस्मिन्ग्रा
मेवसत्येकोब्राह्मणोबहुधार्मिकः ॥ शतपलप्रमितंस्वर्णंतस्मैदत्तंद्विजन्मने ॥२९२॥ सर्वस्वर्णव्ययोकारिस्वर्णकारेणभोनघ ॥ वेश्यांदत्त्वातु
तत्स्वर्णंब्राह्मणोव्याकुलोऽभवत ॥ तद्ग्रामाच्चपलायित्वाह्यन्यत्रतुततोगतः ॥२९३ ॥ एवंस्वल्पेगतेवर्षेस्वर्णकारस्तदामृतः ॥ नरकेरौरवेघो

[illegible] ॥ २१० ॥ [illegible]तमानुषत्वंततोऽभवत् ॥ धनधान्ययुतोनित्यंवंशवृद्धिर्नजायते ॥ रोगैश्चविविधैर्गात्रंपीड्य
मानंमुहुर्मुहुः॥ २९५॥४।८।१५।१९।२६।२९ वर्षेषुकष्टम् ॥परमायुर्वर्षाणि७२॥७९अथटीटहीयोगः॥ कश्चिद्वैश्योऽभवत्पूर्वंवंगदेशेद्विजो
त्तम ॥ महाभिमानसंसक्तःपरद्रोहेरतःसदा ॥२९६॥ मानधाताइतिख्यातःपत्नीतस्यभ्रमावती ॥ धूर्तविद्यासुनिपुणःपरद्रव्यापहारकः ॥
॥ २९७ ॥ एकस्तुन्यवसत्तत्रब्राह्मणोधनसंयुतः ॥ अपवादेनभोविप्रतस्यसर्वंहृतंधनम् ॥२९८॥ तेनविप्रेणक्रोधेनस्वशरीरंचघातितम् ॥
एवंबहुगतेकालेवैश्योमृत्युवशंगतः ॥ २९९ ॥ गर्दभोमाहिषोभूत्वागृध्रोभूत्वाचपर्वते ॥ गंगामरणजातपुण्यात्सगृध्रोमानुषोऽधुना ॥
॥ ४०० ॥ १ । ३ । ८ । १६ । २० । २५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८८ ॥ ८० अथटर्नाभयोगः ॥ अयोध्यापश्चिमेभागेविप्र
रामपुरेशुभे ॥ ह्यासीद्वैश्योरामदासोविख्यातश्चक्षितौसदा ॥ ४०१ ॥ एकदात्वतिथेस्तेनानादरोबहुधाकृतः ॥ तेनपापेनवैश्योसौमृत्वा
यातोयमालयम् ॥ ४०२ ॥ तत्रभुक्त्वामहद्दुःखमागतोभूतलेपुनः ॥ अस्मिञ्जन्मनिनिर्धनश्चपूर्वपापप्रभावतः ॥ ४०३ ॥ २० । २५ ।
५० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९० ॥ ८१ अथटंटकारण्ययोगः ॥ आसीज्जन्मांतरेचैवब्राह्मणोवेदपाठकः ॥ सर्वसामर्थ्यजननोधर्म
कर्माचरेरतः ॥ ४०४ ॥ तीर्थेतीर्थेकृतासेवादेवतायागुरोरपि ॥ एकस्मिन्समयेविप्रलोभाकृष्टेनचेतसा ॥ ४०५ ॥ दक्षिणस्यांदिशिग
त्वायत्रतत्रभ्रमन्नसौ ॥ विविधंयत्नंकृत्वापिलब्धवान्नवराटिकाम् ॥ ४०६ ॥ अतिथिश्चैवभूत्वाथपर्य्यटंश्चचतुर्दिशः ॥ गुरुद्रोहःकृतस्तेन
भाविनोर्थस्यवैबलात् ॥ ४०७ ॥ तेनपापानुसारेणाऽतिथिःसनरकेगतः ॥ नरकान्निःसृतोदेवमानुषोत्राऽभवत्पुनः ॥ ४०८ ॥ १ ।
३ । ६ । ९ । १२ । १६ । २० । २७ । ३२ । ३६ । ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८४ ॥ ८२ अथटारदयोगः ॥

काश्मीरेनगरेपूर्वंब्राह्मणोयवनोयथा ॥ असद्धर्माह्यसद्धाषीद्रव्याऽऽकांक्षीतथातुरः ॥ ४०९ ॥ एकस्मिन्समयेविप्रमध्यदेशेसमागतः ॥ प्र
यागेनैमिषारण्येसस्नातोभक्तिसंयुतः ॥४१०॥ एकस्मिन्समयेविप्रकाश्यांवैब्राह्मणालये ॥ यत्किंचित्तुधनंलब्धंकृत्वातुविविधैश्छलैः ॥
॥ ४११ ॥ तेनपापमनुसारेणनरकंभुक्त्वाऽथदारुणम् ॥ षष्टिवर्षसहस्रांतेभूतलेह्यागतःपुनः ॥ किंचिद्द्रव्ययुतोप्यत्ररोगाश्चविविधास्तथा ॥
॥ ४१२॥१।३।८।१३।२६।६० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७६ ॥ ८३ अथटरढाकनयोगः॥ अथान्यच्चप्रवक्ष्यामिपूर्वजन्मनिबाहुजः॥
कृष्णानद्याश्चनिकटेन्यवसत्परिवारयुक् ॥ ४१३ ॥ धनधान्ययुतस्तत्रपापकर्मपरायणः ॥ एकस्मिन्समयेविप्ररणाग्रेचतदागतः ॥
॥ ४१४ ॥ कृत्वापरस्परंयुद्धमतिप्रबलदंडिनौ ॥ युद्धात्पलायमानःसबभूवद्विजसत्तम ॥ ४१५ ॥ तेनपापानुसारेणयमलोकेहिप्राप्त
वान् ॥ बहुवर्षसहस्रांतेपुनरागत्यभूतले ॥ ४१६ ॥ १ । २ । ४ । ८ । १२ । १७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७२ ॥ ८४
अथटाहरयोगः ॥ कश्चिद्द्विजकुलेविप्रव्यापारेचसदारतः ॥ घृतव्यापारनिरतोद्रव्यलोभीसदाद्विज ॥ ४१७ ॥ गृहेपुनःस
मागत्यविमुखोपिबभूवह ॥ मातापितरौपरित्यज्यभ्रातृवैरेतथारतः ॥ ४१८ ॥ पत्नीतस्यमहादुष्टाकर्कशाकटुवादिनी ॥ सर्पदंशे
नविप्रस्यमरणंचततोऽभवत् ॥ ४१९ ॥ पापात्पापफलंभुक्त्वाबहुवर्षसहस्रकम् ॥ पुनरागत्यमेदिन्यामधुनामानुषोऽभवत् ॥
॥ ४२० ॥ १ । २ । ८ । १० । १२ । १८ । २६ । ३० । ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९८ ॥ ८५ अथठंठपालग्नयोगः
प्रकथ्यते ॥ पूर्वजन्मनियानारीसोरठेनगरेऽवसत् ॥ कुमारीधर्मशीलाचपतिमित्रविवर्जिता ॥ ४२१ ॥ ब्राह्मणस्यकुलेजातानाना
सौख्यसमन्विता ॥ सर्वस्वंब्राह्मणेदत्त्वाजगामबद्रिकाश्रमे ॥ ४२२ ॥ तत्रस्थित्वाद्विजश्रेष्ठतपश्चर्य्यामथाकरोत् ॥ तपोंतेसामृताबाला

बभूवपुरुषोऽधुना ॥ धनधान्यसमायुक्तःपुत्रस्त्रीभूमिसंयुतः ॥ ४२३ ॥ १ । ३ । ८ । १२ । १७ । २० । २५ । २६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८३ ॥ ८६ अथठंढयोगः ॥ ठंढयोगेचयोजातःपूर्वजन्मनिबाहुजः ॥ ज्वालामुख्याश्चनिकटेसिद्धपृष्ठेतदाऽवसत् ॥ ॥ ४२४ ॥ गौरवेतिसमाख्यातःपत्नीह्यास्तावतीशुभा ॥ नानाविभवसंयुक्तोदेव्यर्चनयुतःसदा ॥ ४२५ ॥ तत्रभाविबलात्पुत्रदुर्योगश्च समागतः ॥ द्रव्याणांतस्यसर्वेषांव्ययोभूत्वादिनेदिने ॥ ४२६ ॥ दारिद्र्येणाभवत्पीडाऽभ्रमद्देशेचदेशके ॥ अखाद्यंखादितंतेनगतोयमपुरे द्विज ॥ अत्रजन्मनिमहारोगीचोदरेपीडनंमहत् ॥ ४२७ ॥ १ । ४ । ६ । १० । १३ । १८ । २२ । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८५ ॥ ८७ अथठोकनयोगः ॥ ठोकनेचनरोजातःपर्वतेपूर्वजन्मनि ॥ केदारइतिविख्यातःपत्नीतस्यमहेश्वरी ॥४२८ ॥ धनमैश्वर्यमतुलंभोक्ताचापिविशेषतः ॥ पर्वस्वपिचतेनैवभोजिताब्राह्मणाःशुभाः ॥ ४२९ ॥ एकस्मिन्समयेविप्रदम्पतीतीर्थकंगतौ ॥ तत्रपत्नी मृतापांथोब्राह्मणोपिमृतस्तदा ॥ ४३० ॥ पत्नीशोकेनभोविप्रयमलोकेतदागतः ॥ यमलोकात्परिभ्रष्टश्चागतोभूमिमंडले ॥ ४३१ ॥ १ । २ । ४ । ६ । ८ । १३ । १७ । २० । ३४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० ॥ ८८ अथढासयोगः ॥ ढासयोगेचयोजातःसपुमान्कुलदीपकः ॥ पूर्वजन्मनिमहाराष्ट्रेदेशेदेशेभ्रमंस्तुवै ॥ ४२२ ॥ पत्नींपुत्रंतदात्यक्त्वाब्रह्मचर्य्यरतःसदा ॥ एकस्मिन्समयेविप्रपरस्त्रीलोलुपोभवत् ॥ ४२३ ॥ व्रणरोगेणविकलःसमृतोगदपीडितः ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गतथानघ ॥ षष्टिवर्षसहस्रांतेचागतोधरणीतले ॥ ४३४ ॥ १ । ३ । ८ । १२ । २० । २४ । ३४ । ३८ । ४१ । ४८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ८९ अथठर्पदयोगः ॥ कश्चिद्द्विजोमहाभागचम्पकारण्यसन्निधौ ॥ भूदेवइतिनामावैपत्नीतस्यकुलार्णवी ॥ ४३५ ॥ श्रौतस्मार्त्तनिरतश्चपठने

पाठनेरतः॥ सर्वदाशिवभक्तश्च अन्यत्कर्मनंज्ञायते ॥४३६॥ एकस्मिन्समयेविप्रकृतंकर्मसुदारुणम्॥ शिवालयेऽकरोज्जाप्यंतत्रैकाचागता जन्मा॥ ॥४३७॥बलात्काराद्रतिंकृत्वापापमाचरितंत्विदम्॥ ब्राह्मणस्यततोमृत्युर्बभूवस्त्रीसतीतदा ॥ पुनर्वैमानुषीयोनौमूत्रकृच्छ्रेणकष्टितः ॥४३८॥१।२।४।१३।१८।२०।२७ ।३५ वर्षेषुकष्टम्॥ परमायुर्वर्षाणि ५७॥९०अथडर्पदयोगः॥आसीज्जन्मांतरेचैवव्याधोवसच्चपर्वते॥ व्याधकर्मरतोनित्यंजीवानांघातनेरतः॥४३९॥पशुपक्षिमृगादीन्सजघानचदिनेदिने॥एकस्मिन्समयेविप्रमहाघोरेचजांगले॥४४०॥अभ्रम तत्रव्याकुलोऽभूत्क्षुत्तृड्भ्यांचसपीडितः॥४४१॥इतस्ततश्चविचरन्पर्यटन्गांश्चतुर्दिशः॥ बिल्वमूलेततोमृत्युर्बभूवद्विजसत्तम ॥४४२॥ शिव दूतैःसमंगत्वाकैलासशिखरेगतः ॥ कैलासाच्चपरिभ्रष्टश्चागतोधरणीतले ॥ ४४३ ॥ १ । ४ । ८ । १३ । १७ । २० । २७ । ३८ । ४० ॥ ४४।४९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ८१ अथडोहीयोगः ॥ कश्चिद्वैश्यकुलेपूर्वंमगधेचतदावसन् ॥ ब्राह्मणस्यप्रसंगेनश्रुत्वापौ राणिकींकथाम् ॥ ४४४ ॥ चातुर्मासव्रतंकृत्वाब्राह्मणास्तोषिताअपि ॥ तेनपुण्यप्रभावेणबभूवबाहुजस्तदा ॥ ४४५ ॥ राज्यंकृत्वासुखंभु क्त्वानानासत्संगमेरतः ॥ तत्रदानंकृतंतेनश्रद्धयाचद्विजोत्तम ॥ सजातोप्यत्रभोविप्रब्राह्मणस्यकुलेधुना ॥ ४४६ ॥ १। ३ ।५ । १० । १२ १७ । २० । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७८॥९२ अथटाटयोगः ॥ आसीज्जन्मांतरेचैववावनोनामबाहुजः ॥ स्वप्रतापीकलग्रीवा नामभार्याशुभानना ॥ ४४७॥ पतिसेवारताचोग्राअन्यदेवंनजानती ॥ एकस्मिन्समयेविप्रबाहुजेनदुरात्मना॥४४८॥परस्त्रीमानितातेन सतींत्यक्त्वाचभोनघ ॥ साबालाचविलप्याथयथाहिकुररीखलु ॥ ४४९ ॥ वनाद्रिनिकटेविप्रसामृताद्विजसत्तम॥महाघोरेचनरकेबाहुजः पतितस्तदा ॥ ४५० ॥ षष्टिवर्षसहस्राणि भुक्त्वानरकजंफलम् ॥ पुनर्वैमानुषोभूत्वासर्वरोगान्वितःसच ॥ ४५१ ॥ १ । ४ । ८ । १२ ।

१७ । २० । २७ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०५ ॥ ९३ अथटंघनयोगः ॥ टंघनेयोगेयोजातः पूर्वजन्मफलंशृणु ॥ विपाशा
यास्तटेचैवबाहुजोऽभूद्द्विजोत्तम॥४५२॥धर्मकर्मसमायुक्तोग्रामेषुविश्रुतोमहान्॥पापकर्मार्जितंतेनभाविनोर्थस्यवैबलात् ॥४५३॥ शूद्र्यांवि
धारितंगर्भपातनंचतथाऽकरोत्॥साम्प्रतातेनदुःखेनपापमाचारितंत्विदम् ॥४५४॥ तेनपापप्रभावेणयमलोकमुपागतः॥ पुनर्वैमानुषोभूत्वाप
र्वतारण्यसन्निधौ ॥ ४५५ ॥ प्रथमेवाष्टमेवर्षेद्वादशेषोडशेपिवा॥मृत्युप्रायंहिकष्टंचषष्टिवर्षोत्तरेमृतिः ॥ ४५६ ॥ ९४ अथटेनकायोगः ॥
पूर्वजन्मन्ययोध्यायांशूद्रोनामरमानुजः॥परमोदारोऽतुलश्चरामभक्तःसदादृढः ॥ ४५७ ॥द्रव्यंतूपार्जितंतेनपूर्वकर्मप्रभावतः॥ तस्यव्ययोऽ
कारितेनसाधूनांचप्रसंगतः ॥ ४५८ ॥ शिवनिंदारूपपापाद्गतोनरकेचदारुणे ॥ षष्टिवर्षसहस्राणिनरकेपरिपच्यते॥पुनर्वैमानुषोभूत्वाधन
धान्यसमायुतः ॥ ४५९ ॥ सर्वांगेजायतेदद्रुःपीडातस्यविशेषतः ॥ पुत्रकन्याश्चबहवोभूत्वायांतिचमृत्युताम् ॥ ४६० ॥ शिवस्याऽऽराध
नात्पुत्रसर्वाबाधाविनश्यति ॥ रोगाश्चविलयंयांतिपुत्रपौत्रसमन्वितः ॥ ४६१ ॥ चतुर्थेपंचमेवर्षेनवमैकादशेपिच ॥ महत्कष्टेनविकलो
जायतेमुनिसत्तम ॥ प्राप्तेपंचाशत्तमेब्देह्यल्पमृत्युर्भविष्यति ॥ ४६२ ॥ ९५ अथटेककनकयोगः ॥ कालिंदीनिकटेपूर्वंब्राह्मणःशास्त्र
पाठकः ॥ कौपीनइतिविख्यातः पत्नीपुत्रसमन्वितः ॥ ४६३ ॥ अग्निहोत्रादिकंकर्मदम्पतिभ्यांसदाकृतम् ॥ एकस्मिन्समयेविप्रभगिनी
पुत्रःसमागतः ॥ ४६४ ॥ परदेशात्तदाविप्ररत्नभारसमन्वितः ॥ आदरंबहुधाकृत्वास्वगृहेस्थापितोद्विजः ॥ ४६५ ॥ तस्यद्रव्याणिस
र्वाणिगृहीत्वाविविधैश्छलैः॥तत्कर्मणोवशात्पुत्रब्राह्मणःकौशिकोऽभवत् ॥ ४६६ ॥ पुनर्वैमानुषीयोनौधनधान्यसमन्वितः॥प्रथमेपंचमे ९४
वर्षेषष्ठेऽष्टमेचद्वादशे ॥ विंशतिवर्षांतरेकष्टंषष्टिवर्षांतरेमृतिः॥४६७ ॥ ९६ अथटंघनटयोगः॥इदानींसुखसौभाग्यंपरमोदारवत्सलः ॥ स

मातृपितृभक्तश्चदानपुण्यपरायणः ॥४६८॥ विद्याविनयसम्पन्नःपुत्रेणरहितोऽधुना ॥ भृगुरुवाच ॥ पूर्वजन्मनिविप्रोसौप्रयागेहितदाऽव सत् ॥ कृष्णदेवइतिख्यातःपत्नीपुत्रसमन्वितः ॥४६९॥ मातुलान्यांचगमनंविभ्रमेणतदाऽकरोत् ॥ गर्भपातनकात्पापात्पुत्रवृद्धिर्नजाय ते॥४७०॥१।३।९।१२।१५।१७।२०।३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०३ ॥ ९७ अथटामरीयोगः ॥ आसीज्जन्मांतरे चैववंगदेशे द्विजोधनी ॥ कर्मदेवःसमाख्यातःपत्नीतस्यकुमोदकी ॥ ४७१॥ पातिव्रत्यरताचोग्रापतिसेवापरायणा ॥ ब्राह्मणःकामसक्तश्चपरभार्य्या रतःसदा ॥४७२ ॥ परमार्थसाधनेनैवविषयान्वितसंभ्रमः ॥ एकस्मिन्समयेविप्रद्यूतकार्येद्विजोत्तम ॥ ४७३ ॥ सभार्य्यंचधनंसर्वंहारितं वैद्विजेनतु ॥ सविप्रःपंचतांप्राप्तोगतोऽसौयमलोकके ॥४७४॥ विंशतिजन्मपशुर्भूत्वामानुषत्वंततःपरम् ॥ विकलोदीनःक्षीणश्चहीनवृत्ति प्रपीडितः ॥ ४७५ ॥ १।३।८।१२।२०।२७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६८॥ ९८ अथटेकनेकयोगः॥कश्चिद्द्विजकुलेपूर्वंकामरूपेऽवस त्तदा ॥ पुरुषोत्तमनामावैमिथ्याजल्पतिनित्यशः ॥४७६॥ परापवादकरणेसमर्थोपिविशेषतः ॥ एकस्मिन्समयेविप्रगोत्रपुत्रीकलंकिता॥ ॥ ४७७ ॥ तेनपापानुसारेणनरकेभृशदारुणे ॥ बहुवर्षसहस्राणिभुक्त्वानरकजंफलम् ॥ पुनर्वैमानुषोभूत्वापाखंडीधूर्तएवच ॥४७८॥ १। ३।५।९।१२।१५।२०।२७।३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९३ ॥ ९९ अथटरक्कोपीयोगः ॥ आसीज्जन्मांतरेचैवब्राह्मणःकोंकणे वसन् ॥ शिवरामइतिख्यातःसपत्नीकःसपुत्रकः ॥ ४७९ ॥ राजपूज्योगुणातीतःकापथ्याऽऽचरणेरतः ॥ तस्मिन्ग्रामेद्विजस्त्वेकोदरिद्रः कृपणस्तथा ॥ ४८० ॥ तस्यपुत्रीयौवनेनवरयोग्याबभूवह ॥ उद्वाहकालोवैदैवादायातश्चनिवारितः ॥ ४८१ ॥ तेनवैशिवरामेणदुष्टेन चद्विजोत्तम ॥ शिवरामोगतस्तेनकुंभीपाकंतथैवच ॥ ४८२ ॥ दिव्यवर्षसहस्राणिभुक्त्वाभोगांश्चशाश्वतान् ॥ मानुषोत्रधरायांतुपुत्रदार

विवर्जितः ॥ ४८३ ॥ १।४।६।१२। १३। १६। १८।२०।२७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८८ ॥ १०० अथटंटमिस्वरयोगः ॥
श्रीहट्टनगरेपूर्वंगंधर्वोनामपादजः ॥ कृषिकर्मणिसव्यग्रोधनधान्यसमन्वितः ॥ ४८४ ॥ ब्राह्मणानांकृतासेवातीर्थयात्रातथाकृता ॥
सर्वस्वंविधिनादत्तंसत्पात्रायद्विजायच ॥ ४८५ ॥ जगामबद्रिकाऽऽरण्येतपश्चर्य्याकृताभृशम् ॥ दम्पतीमरणंप्राप्तौगताविंद्रपुरंचतौ ॥
॥ ४८६ ॥ ततः पुण्यक्षयेजातेमर्त्यलोकेचबाहुजः ॥ धनधान्यसमायुक्तः सर्वसौख्येनसंयुतः ॥ ४८७ ॥ १।५।८।१३।१७।
२२।२८।३१।३९ वर्षेषुकष्टम् ॥ परमायुःशताब्दांतंवैशाखेमरणंभवेत् ॥ जाह्नवीनिकटेचैवसंशयोनात्रभार्गव ॥ ४८८ ॥ १०१ अथ
टोकनयोगः ॥ ताप्याश्चनिकटेविप्रतत्त्वदेवेतिब्राह्मणः ॥ महामूर्खोतिजरठःसदादारिद्र्यपीडितः ॥ ४८९ ॥ सत्यवतीतस्यभार्यारूपवती
पतिप्रिया ॥ एकस्मिन्समयेविप्रदम्पतीकाननेगतौ ॥ ४९० ॥ तत्रभाविबलात्पुत्रनृपस्त्वेकः समागतः ॥ आखेटकेततोदेवदृष्टागुणवती
शुभा ॥ ४९१ ॥ बलादाकर्षिताभूयःस्यंदनेस्थापिताचसा ॥ ब्राह्मणोव्याकुलोभूत्वास्वशरीरंजघानह ॥ ४९२ ॥ आत्महापापदोषेण
चिरायनरकेस्थितः ॥ अत्रजन्मनिद्विजोजातःकंठेबाहौसचिह्नितः ॥ ४९३ ॥ १।३।१०।१५। १९।२३।२७।३३।३६
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ १०२ अथटोन्नतयोगः ॥ दंडकारण्यनिकटेराजपुत्रोमहाबलः ॥ पूर्वजन्मनिवित्ताढ्यःसहसैन्ये
नराजते ॥ ४९४ ॥ जीतकेतुश्चेतिनामचोग्रदंडःप्रतापवान् ॥ कृतानिशूरकर्माणिदानंदत्तंविशेषतः ॥ ४९५ ॥ एकदाभिक्षुकेणैव
स्वोद्धारेकृतःखलु ॥ अपभ्रंशंवदंस्तस्यतिरस्कारमथाऽकरोत् ॥ ४९६ ॥ तेनविप्रेणक्रोधेनविषंपीतं[illegible]णम् ॥ समृतस्तेनदुःखेनपा
पमापरितंत्विदम् ॥ ४९७ ॥ बहुवर्षसहस्राणिभुक्त्वानरकजंफलम् ॥ धरायांमानुषोभूत्वाप्रथमेद[illegible]र्नीसुखस। [illegible]न्तमेवर्षेपंचत्वंचभ

विष्यति ॥ ४९८ ॥ १०३ अथढोकरयोगः ॥ कश्चिच्छूद्रकुलेपूर्वंकीकटेहितदावसन् ॥ चौरकर्माणि ... पूर्वजन्मनिविप्रो
निर्दयःपापभागीचकृतंकर्मदुरासदम् ॥ एकस्मिन्समयेविप्रपरदेशेतदागतः ॥५००॥ मार्गेवनांतरेचैवप्रसूताचशुनीद्विज॥ ...शुघातनतत्परः ॥ ४९९ ॥
लादीनाचाऽकंदद्विजसत्तम ॥५०१॥ दृष्ट्वातांचसवैशूद्रोदयायुक्तोबभूवह॥शुन्यैतुसक्तून्दत्त्वासजलपानमकारयत् ॥ ५०२ ॥ क्षुत्तृड्भ्यांविक
नैवस्वर्गेयातःसपादजः ॥ ततःपुण्यक्षयेजातेमानुषश्चाऽभवद्भुवि ॥ सर्वसम्पद्युतोप्यत्रपुत्रदारधनैर्युतः ॥५०३ ॥ तेनैवसुकृते
३९ । ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० ॥ १०४ अथढंढमारकयोगः ॥ १। ४।९। १४।१९।२४।
इतिख्यातोलोकाचारेसदारतः ॥ ५०४ ॥ ब्राह्मणानांहृतंक्षेत्रंकीर्तिभंगंतथाऽकरोत ॥ आसीज्जन्मांतरेचैवपापिष्ठःपृथिवीपतिः ॥ मगसिंह
अदंड्योदंडितस्तेनाऽपेयंपीतंचसर्वदा ॥ एवंबहौगतेकालेसराजायंचतांगतः ॥५०६॥ अमेध्यभक्षणंकृत्वाह्यगम्यागमनंकृतम् ॥ ५०५ ॥
हस्तांतेचागतोधरणीतले ॥५०७॥ पुत्रदुःखंचदारिद्र्यंशरीरेकष्टमादिशेत् ॥ सतेनकर्मणायुक्तःप्राप्तस्तुयमशासनम् ॥ बहुवर्षस
तरेमृतिः ॥५०८॥ १०५ अथटवरयोगः ॥ प्रथमेतृतीयेवर्षेह्यष्टमेद्वादशेतथा ॥ षोडशेब्देमहाकष्टंषष्टिवर्षा
महाश्मशाननिलयेजपकर्मसमाचरत् ॥ धुंधमारीचनामाख्यःपूर्वजन्मनिधनेश्वरः ॥ ऐरावतस्यनिकटेन्यवसत्परिवारयुक् ॥ ५०९॥
भूपसहस्राकोटिसूर्य्यसमप्रभा ॥५११॥ कालिकायाःकृतापूजाषोडशैरुपचारकैः ॥५१०॥ बलिंदत्त्वातदाविप्रचार्घमाचमनंतथा॥आविर्भ
भूत्वागंगायाश्चोत्तरेतटे ॥ ५१२ ॥ दृष्ट्वासमूर्छितोभूत्वाचोन्मत्तोपिबभूवह ॥ नग्नःस्फोटनयुग्गात्रोभ्रमतिस्मधरातले ॥ पुनर्वैमानुषो
लोकेषु ॥ १।३।५।९।११।१५।१७।२०।२५।२९।३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७ ॥ १०६ अथटात्का
अथपूर्वेदरिद्रश्चमोदनोनामबाहुजः ॥ शिवसेवाकृतासम्यङ्मनइंद्रियनिग्रहात् ॥ ५१३॥ व्रतानितुप्रदोषस्यकृत्वोद्यापनमा

चरत्॥ तीर्थावगाहनंकृत्वागयाश्राद्धंचकारह॥५१४॥आयुषस्तुसमाप्तित्वात्सविप्रःपंचतांगतः॥ पत्नीतस्यसतीजातास्वर्गलोकमुभौगतौ
॥५१५॥स्वर्गाच्चैवच्युतिर्भूत्वाचागतोधरणीतले॥गौरःसुरूपोमतिमान्धनपुत्रसमन्वितः॥५१६॥चतुर्थेपंचमेवर्षेचातिकष्टेनकष्टितः॥विंश
त्यब्दोत्तरेविप्रचाल्पमृत्युर्भविष्यति॥अष्टवेदाब्दपर्य्यंतंपरमायुरिहोच्यते॥५१७॥१०७ अथटीकटयोगः॥आसीज्जन्मांतरेचैवब्राह्मणःकुरु
जांगले॥नंदलालइतिख्यातःपत्नीतस्यमनोरमा ॥५१८॥नानाधर्मार्जनंकृत्वानानातीर्थावगाहनम्॥एकस्मिन्समयेविप्रभाविनोर्थस्यगौर
वात् ॥५१९॥ भगिनीपुत्रस्यागतस्यह्यादरोबहुधाकृतः ॥ पुत्रवत्स्थापितोगेहेसर्वस्वमददत्पुरा॥ ५२०॥ किंचित्कालांतरेविप्रस्वभार्य्या
पुत्रसंभवः ॥ वाक्यमुक्त्वात्वपभ्रंशंभगिनीपुत्रंप्रतिद्विज ॥५२१॥ भवनान्निष्कासितश्चासौपापमाचरितंत्विदम् ॥ दैवाद्भार्याचपुत्रश्चमृत्युं
यातौदिनांतरे ॥५२२॥ ततःस्वल्पेगतेकालेसद्विजोपिमृतस्तदा ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गंतथानघ ॥ ५२३ ॥ षष्टिवर्षसहस्रांते
चागतोधरणीतले ॥ ईषद्गौरोमध्यदेहोदक्षिणांगेप्रचिह्नितः ॥ ५२४ ॥ प्रथमेपञ्चमेषष्ठेचाष्टमेदशमेपिवा ॥ द्वादशेषोडशेवर्षेमृत्युप्रायः
सकष्टितः ॥ ५२५ ॥ एकोनत्रिंशत्तमेऽब्देचाल्पमृत्युर्भविष्यति ॥ चतुःषष्टितमाब्दांतंकथितंप्राणधारणम् ॥ ५२६ ॥ पुनर्जन्मभवेत्तस्य
नर्मदादक्षिणेतटे ॥ तदामुक्तोनसंदेहःसत्यंसत्यंवदाम्यहम्॥५२७॥ १०८ अथटेमलयोगः॥ पुरातुकच्छकेदेशेब्राह्मणोवेदपारगः॥५२८॥
श्रौतस्मार्तनिरतश्चसत्यव्रतंसमाऽऽचरत् ॥ देवकर्मरतोनित्यंकुंभेकार्तिकमाघयोः ॥ ५२९ ॥ देवशर्मेतिविख्यातःपत्नीचकर्कशाऽधमा॥
पतिद्वेषकरीदुष्टानिष्ठुराकलहप्रिया ॥ ५३० ॥ एकदातस्यविप्रस्यभगिनीगृहमागता ॥ आदरंबहुधाकृत्वास्वर्णंदत्तंतदानघ ॥ ५३१ ॥
श्रुत्वाचकर्कशाचंडीविषभोजनमाचरत् सहस्राणिभुक्त्वानरकान्भेनपुरुषस्याग्रेद्विजोत्तम ॥ ५३२ ॥ अनेनचकृतंकर्मद्विजेनदेवशर्मणा ॥

ततः कोचिद्गतेकालेमृत्युस्तस्यद्विजस्यच ॥ ५२३ ॥ गंगायादक्षिणेकूलेस्वर्गवासस्ततोभवत् ॥ च ॥ पूर्वजन्मर्जितैर्मर्त्यलोकेत्वजायत ॥
॥ ५२४ ॥ धनधान्यसमायुक्तःपुत्रकन्याविवर्जितः ॥ पुण्यकर्मवशादेवतस्यभार्य्याचसाऽभवत् ॥५३५॥ पूर्वजन्मनिवैदेवमृतायापुरुषो
पारि ॥ मध्येमध्येमहत्कष्टंजायतेनात्रसंशयः ॥ ५२६ ॥ गायत्रीमूलमंत्रस्यजपाःकार्याविशेषतः ॥ गोभूहिरण्यदानानिदद्याद्विप्रायवैखलु ॥
पुत्रार्थीलभतेपुत्रंरोगीरोगात्प्रमुच्यते॥५३७॥१।३।५।८।११।१४।१७।२०।३१।३५।३८।४० वर्षेषुरोगादिकष्टम्॥परमायुर्वर्षाणि ७० इति
श्रीयोगसागरेसभार्चितदेशेशुकभृगुसंवादेटवर्गाद्यष्टोत्तरशतयोगकथनंनामषष्ठंप्रकरणम् ॥६॥ अथतवर्गाद्यायोगाःकथ्यन्ते॥१अथतारणी
योगः ॥ कश्चिद्वैश्यकुलेपूर्वंमध्यदेशेतदाऽवसत् ॥ गिरिधरेतिविख्यातःपत्नीपुत्रसमन्वितः ॥ १ ॥ महोद्यमीसाहसीचकृषिवाणिज्यतत्प
रः ॥ द्रव्यंतुविपुलंकृत्वाभूमौहिखननेक्षिपत् ॥ २ ॥ कन्योद्वाहंतथाकृत्वागोदानंचतथानघ ॥ एवंचन्यवसत्तत्रबहुवर्षगतागतैः ॥ ३ ॥
आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ पुनर्वैमानुषोभूत्वाधनधान्यसमन्वितः ॥ देव्याश्चपूजनेनिष्ठःपरोपकरणेतथा॥४॥१।३।१७।
२०।२६। ३२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६१ ॥ २ अथतत्त्वयोगः ॥ आसीज्जन्मांतरेचैवशाककारोऽतिनिष्ठुरः ॥ आंतर्वेद्येवसत्सोपि
मंगलोनामविश्रुतः ॥ ५ ॥ शाकंकरोतिसततंहारिद्राजीरकंतथा ॥ कृषिंकरोतिवैतत्रमहिषीगोधनंभृशम् ॥ ६ ॥ एकदावृषभौदेवयोजि
तौचकालेपिच ॥ एकस्तुवृषभस्तत्रदैवान्मृत्युवशंगतः ॥ ७ ॥ ज्ञात्वादोषंशाककारःप्रायश्चित्तंनचाकरोत् ॥ सतेनकर्मणायुक्तःप्राप्तस्तुयम
शासनम् ॥ ८ ॥ पक्षीकीटोविहंगोन्यायोनीर्भुक्त्वाकथंचन ॥ मानुषत्वंततःप्राप्तः पुत्रकन्याविवर्जितः ॥९ ॥ १।३।८।१४।१८।२३।३१।
२६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ३ अथतत्त्वगोपालयोगः ॥ एकस्तुब्राह्मणः पूर्ववेदवेदांगपारगः ॥ नंदशर्माइतिख्यातस्तस्यप

त्नीतुचंचला ॥ १० ॥ कुलटारूपसम्पन्नावाराणस्यांततोऽवसत् ॥ परपूरुषरतानित्यंपरद्रव्याणिलुंठति ॥ ११ ॥ उपार्जितंबहुद्रव्यंमैथु
नेनतदानघ ॥ वज्रलेपोबभूवापिक्षेत्रस्यैवप्रभावतः ॥ १२ ॥ ब्राह्मणोहर्षसंयुक्तोद्रव्यस्यसंग्रहाच्चवै ॥ ततोबहुतिथेकालेद्विजस्यैवतुपंचता ॥
॥ १३ ॥ मृत्यौजातेतदानारीस्वेच्छयापरगेहिनी । नकरोतितदापुत्रगंगास्नानंकदाचन ॥ १४ ॥ सौगंध्यतैलताम्बूलसेवनंसर्वदाचवै॥
परपूरुषप्रसंगेनवयोऽर्द्धंचगतंद्विज ॥ १५ ॥ मृत्यौजातेततस्तस्याःकाशीवासप्रभावतः ॥ बहुवर्षसहस्राणिस्वर्गवासस्ततोभवत् ॥ १६ ॥
ततःपुण्यक्षयेजातेमर्त्यलोकमुपागतः ॥ मध्यदेशेततोजन्मसुन्दरोगुणसंयुक्तः ॥१७॥ धनधान्यसमायुक्तःपुत्रकन्याविवर्जितः॥रोगराजेन
संयुक्तस्तीव्रज्वरेणपीडितः ॥ १८॥१।४।८।१५।१८।२५।३१।३७ वर्षेषुकष्टम्॥परमायुर्वर्षाणि६५॥४अथतिग्वलयोगः॥ अंगदेशेऽवसत्त्वे
कोबाहुजश्चदुरासदः ॥ पापिष्ठश्चपरद्रोहीनिंदकःपशुबुद्धिकः ॥ १९ ॥ मिथ्याविवादनिरतःपरकार्य्यविनाशकः ॥ तस्यभार्य्याविशाला
क्षीसुशीलारूपसंयुता ॥ २० ॥ देवतापूजनेनिष्ठापातिव्रत्यपरायणा ॥ एकदाश्राद्धसमयेब्राह्मणोवेदपारगः ॥२१॥ राजानमुक्तवान्राजञ्छ्रा
द्धंकुर्यान्नचैवहि ॥ पत्नीरजस्वलायस्माद्गृह्णन्तिपितरोनहि ॥ २२ ॥ बाहुजश्चाऽतिकोपेनकटुवाक्यमवदद्द्विजम् ॥ ब्राह्मणेनतदापुत्रबाहुज
श्चप्रताडितः ॥ २३ ॥ बाहुजेनतुविप्रोऽसौशस्त्रेणचततोहतः ॥ बहुवर्षसहस्रांतेनरकान्निःसृतोद्विज ॥२४ ॥ महिषीवृकसर्पाणांयोनीर्भुक्त्वा
कथंचन ॥ मानुषोभवतिह्यत्रगोधूमाकारवत्तनुः ॥ २५ ॥१।२।५।१०।१३।१८।२५। २९ । ३४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७ ॥ ५
अथतोमरयोगः ॥ तोमरेचनरोजातःपूर्वजन्मनिबाहुजः ॥ कृष्णराजःसमाख्यातःपत्नीतस्यचराधिका॥२६॥धर्माधर्मविवेकीचशूरकर्मणि
तत्परः ॥ दानशीलोमहाप्राज्ञोब्राह्मणानांचसेवकः ॥२७॥ एकस्मिन्समयेविप्रसमरेचसमागतः ॥ कृत्वापरस्परंयुद्धंखड्गैरपितुमुद्गरैः॥२८॥

वा। ततस्तेनबहुभिःप्रहाररतिदारुणैः ॥ संग्रामभूमौसमृतःस्वर्गंगत्वाचबाहुजः ॥ २९ ॥ पत्नीत्व ॥ पूर्वजन्मनिविप्रौ यातावुभावपि ॥ षष्टि
वर्षसहस्रांतेचागतौभूमिर्मंडले ॥ ३० ॥ मध्यदेशेधुनाजातःसर्वसौख्यसमन्वितः ॥ नानाविचारकुशलःपरकार्य्यस्यसाधकः ॥ ३१ ॥ प्रथ
मेद्वितीयेवर्षेषष्टेऽष्टमकेपिवा ॥ विश्वाब्देषोडशेविंशेकष्टेनातिप्रपीडितः ॥३२॥ खवेदाब्देगतेविप्रचाल्पमृत्युर्भविष्यति ॥ यदिधर्मःसहायः
स्याज्जीवेद्वर्षाष्टषष्टिकम् ॥ चैत्रेमासिसितेपक्षएकादश्यांमृतिर्भवेत् ॥ ३३ ॥ ॥ ६ अथतोषणयोगः ॥ बंदरेनगरेविप्रबाहुजस्तत्रकीर्त्ति
मान् ॥ तस्यपत्नीप्रभानाम्नीसुशीलापरमासती ॥ ३४ ॥ वैश्यकर्मरतःसोपिच्छात्रधर्मविवर्जितः ॥ मद्यपानरतोनित्यंमत्स्यमांसंतुभुज्यते
॥ ३५ ॥ परस्त्रीरतिसंतोषश्चागम्यागमनेरतः ॥ संचितंबहुधाद्रव्यंरत्नसागरसंज्ञकम् ॥ ३६ ॥ तस्यमित्रंद्विजस्त्वेकोमहाद्रव्येणसंयुतः ॥
आगतोनिकटेतस्यपुत्रदारैश्चसंयुतः ॥ ३७ ॥ आदरंबहुधाकृत्वावासंचस्वगृहेददौ ॥ वर्षमात्रंततः स्थित्वाकथाप्रीतिरजायत ॥ ३८ ॥
वैश्योहिदुष्टबुद्धिश्चब्राह्मणायविषंददौ ॥ समृतस्तेनदुःखेनसर्वस्वंतस्यनीतवान् ॥ ३९ ॥ क्षत्रियोनरकेगत्वामन्वन्तरंतथास्थितः ॥ अत्रतु
मानुषीयोनौदुःखभारसमन्वितः ॥ ४० ॥१।२।४।७।८।१६।२९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ ७ अथतेजायोगः ॥ आसीज्ज
न्मांतरेचैवब्राह्मणः शास्त्रकोविदः ॥ देशेहिकीकटेचैवन्यवसत्पूर्वजन्मनि ॥ ४१ ॥ नंदकेश्वरनामाख्यःपत्नीतस्यकिशोरिका ॥ धनधा
न्यसमायुक्तःपुत्रकन्यासमन्वितः ॥ ४२ ॥ परदेशेगतोदैवात्तत्रद्रव्यंहिचार्जितम् ॥ स्वदेशेपुनरागत्यहर्षगद्गदमानसः ॥ ४३ ॥ एकस्मि
न्समयेविप्रब्राह्मणःस्त्रीवशंगतः ॥ परस्त्रीलोलुपोभूत्वाबहुवर्षंतथाऽनघ॥४४॥ ब्राह्मणस्यततोमृत्युर्बभूवद्विजसत्तम ॥ पुनरागत्यमेदिन्यांसु
खसौभाग्यसंयुतः ॥ ४५ ॥ यदाकदाभवेत्पीडामासिवर्षेद्विजोत्तम ॥ पंचषष्टिस्तुवर्षाणिकथितंदेहधारणम् ॥ ४६ ॥ ८ अथतर्कयोगः॥

आसीज्जन्मांतरेचैवबभूवमुखजस्तदा ॥ हेमदेवइतिख्यातः पत्नीपुत्रसमन्वितः ॥४७॥ देशेहिकीकटेचैवपरिवारेणसंयुतः ॥ वेदशास्त्रविही
नश्चकृषिकर्मोद्यमेरतः ॥ ४८ ॥ धान्यंतुविविधंकृत्वातत्सकाशाच्चजीवनम् ॥ एकदाचंद्रमोग्रस्तेविधिवद्दानमाचरत् ॥ ४९ ॥ ब्राह्मणाय
विधिज्ञायदत्तंस्वर्णमुद्रान्वितम् ॥ तस्यगेहेस्थितः सर्पोदष्ट्वातंचैवब्राह्मणः ॥५० ॥यत्नेनहतवान्सर्पपापमाऽऽचरितंत्विदम् ॥ पापात्पाप
फलंभुक्त्वापुण्यात्स्वर्गंतथानघ ॥ पुनरागत्यमेदिन्यांधनधान्यसमृद्धिमान् ॥५१॥१।३।८।१५।२०।२८।३२वर्षेषुकष्टम् ॥ परमायुर्वर्षा
णि ९८ ॥ ९ अथताडनयोगः ॥ कश्चिद्द्विजोमहाभागकौशिक्याश्चशुभेतटे ॥ बिल्वदेवःसमाख्यातः पत्नीद्वयसमन्वितः ॥ ५२ ॥
ब्राह्मणोदैवयोगेनयजमानगृहेगतः ॥ यजमानोददौप्रीत्यास्वर्णमुद्रासहस्रकम् ॥ ५३ ॥ स्वगृहेचागतोविप्रो हर्षगद्गदमानसः ॥ पत्नीभ्यां
तुकृतंयुद्धंकथंस्वर्णंनदेहिमाम् ॥ ५४ ॥ ज्येष्ठयातुकृतंयुद्धंमहाघोरंद्विजंप्रति ॥ तेनविप्रेणक्रोधेनस्थूलेनलकुटेनवै ॥ ५५ ॥ ज्येष्ठाहता
शिरोभग्नंसामृतातेनकष्टिता ॥ किंचित्कालांतरेचैवसविप्रः पंचतांगतः ॥ ५६ ॥ षष्टिवर्षसहस्राणिभुक्त्वानरकजंफलम् ॥ ततोवैमानुषो
जातोधनधान्यसमन्वितः ॥ ५७ ॥ १।४।९।१२।१७।२२।२८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५५ ॥ १० अथतुंदिलयोगः ॥ क
श्चिद्धर्मपुरेरम्येब्राह्मणःशास्त्रकोविदः ॥ गुणीमानीयशस्वीचशिवस्याऽऽराधनेरतः ॥ ५८ ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यगौरवात् ॥
ब्राह्मणस्यहृतंद्रव्यंलोभोपहतचेतसा ॥ ५९ ॥ नदत्तंतस्यवैद्रव्यंबहुकालगतागतैः ॥ तत्रराजावसत्त्वेकस्तत्सकाशात्कृतश्छलः ॥ ६० ॥
तेनपापानुसारेणनानानरकेषुसंस्थितः ॥ किंचित्पुण्यवशात्पुत्रसजातोमानुषोऽधुना ॥ ईषद्गौरोदीर्घदेहोदक्षिणांगेप्रचिह्नितः ॥ ६१ ॥१।
१।७।११।१७।२०।२३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७॥ ११ अथतिरस्कारयोगः ॥ आसीज्जन्मांतरेचैवबाहुजःकोंकणेवसन् ॥

ग्रामाढ्यः समाख्यातः सपत्नीकः सपुत्रकः ॥ ६२ ॥ मैथिलेनगरेगत्वादेवाचपरिवारयुक् ॥ मातापितृतिरस्कारःकृतस्तेनतदानघ ॥६३॥
तेनपातंतदासम्यग्द्रव्यंतुविविधंद्विज ॥ पितरौतौमृतौतस्यक्षुत्तृड्भ्यांचप्रपीडितौ ॥ ६४ ॥ तेनपापानुसारेणनरकेबाहुजोगतः ॥ महि
षस्यवराहस्यकुक्कुटस्याथयोनिषु ॥ ६५ ॥ गंगामध्येताम्रचूडोमृत्वास्वर्गंततोगतः ॥ अत्रवैमानुषीयोनौचागतोभूमिमण्डले ॥ ६६ ॥
कृशत्वंदक्षिणेचिह्नंचंचलश्चतुरोदृढः ॥ प्रथमेपञ्चमेवर्षेह्यग्निनादह्यतेतनुः ॥ ६७ ॥ दशमैकादशेवर्षेपीडाभवतिदारुणा ॥ चतुर्वेदोत्तरे
कष्टंजीवनंसप्तषष्टिकम् ६८ ॥ १२ अथतलंचाख्ययोगः ॥ आसीज्जन्मांतरेचैववैश्योनामसुदर्शनः ॥ पुरेवैशदनेचैवन्यवसत्पूर्वजन्मनि
॥ ६९ ॥क्रयविक्रयकर्ताचद्रव्यान्वितगृहंशुभम् ॥ पत्नीमनोहरातस्यसुंदरीगुणवत्सला ॥ ७० ॥ आरामोनिर्मितस्तेनपथिकूपाश्चवै
तदा ॥ एकस्मिन्समयेविप्रक्तंकर्मतुदारुणम् ॥ ७१ ॥ स्वभ्रात्रेचकनिष्ठायभागस्तस्मैनदापितः ॥ एवंबहुगतेकालेवैश्योमृत्युवशंगतः
॥ ७२ ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गंतथाभृशम् ॥ ततोवैमानुषीयोनौचांतर्वेद्यांसमुद्भवः ॥ ७३ ॥ १ । ४ । ७ । १४
१८ । २० । ३१ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ १३ अथतीतरयोगः ॥ कश्चिद्रेवातटेपूर्वंबाहुजोबहुधार्मिकः ॥ पत्नीहुताश
नीतस्यगृहपालनतत्परा ॥ ७४ ॥ बाहुजश्चतदापुत्रशक्त्यादानंददौपुरा ॥ तोषितास्त्रिदशाःसर्वेदानेनतोषिताद्विजाः ॥ ७५ ॥ एक
स्मिन्समयेतत्रकृतंकर्मजुगुप्सितम् ॥ ब्राह्मण्यांधारितोगर्भपापमाचरितंद्विज ॥ ७६ ॥ आयुषस्तुसमाप्तत्वान्ममारसचबाहुजः ॥ नाना
जन्मान्यभूवंश्चतिर्यग्योनौपुनःपुनः ॥ मनुष्यत्वंततोयातस्तुर्येब्देनवमेरुजा ॥ ७७ ॥ १५ । २० । २५ । ३१ । ३६ । ४० । ४८
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ १४ अथथलसंज्ञकयोगः ॥ थलसंज्ञेचयोजातस्तपस्वीपूर्वजन्मनि ॥ आयुषस्तुसमाप्त

त्वाद्देवाद्गंगातटेमृतः ॥ ७८ ॥ गतोऽसाविंद्रलोकेचनंदनेहिवनेतदा ॥ ततःपुण्यक्षयेजातेमानुषत्वमिहागतः ॥ ७९ ॥ १ । ३ संहि.
५ । ९ । १४ । १७ । २० । २२ । २८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० ॥ १५ अथदीर्घयोगः ॥ आसीत्पूर्वभवेकापि
शल्लकीगह्वरेवने ॥ महामतंगयूथानामधिकारोबृहत्तनुः ॥ ८० ॥ गंडकीजलमध्येचदैवात्तत्रमृताखलु ॥ स्वर्गाच्चैवच्युताभूत्वा
मानुषत्वंततोऽलभत् ॥ बाहुजस्यकुलेजातःसर्वसम्पद्युतोऽधुना ॥ ८१ ॥ १ । ३ । ४ । ८ । १७ । २७ । ३७ वर्षेषु
कष्टम् ॥ परमायुर्वर्षाणि ४९ ॥ १६ अथदतायोगः ॥ पूर्वजन्मनियानारीकुरुदेशेतदावसत् ॥ स्वैरिणीरूपसम्पन्नानाम्नावेसातिलो
त्तमा ॥ ८२ ॥ स्वपतेश्चविषंदत्त्वापरपुंसिरताचसा ॥ द्रव्यंचोपार्जितंप्राज्यंमैथुनेनतदानघ ॥ ८३ ॥ एकदासूर्य्यग्रस्तेचप्रयागेमकरे
द्विज ॥ दैवाद्वेण्यांचमग्नाऽभूद्गतासापरमंपदम् ॥ ८४ ॥ बहुवर्षसहस्रांतेचागताभूमिमण्डले ॥ ८५ ॥ १ । ३ । ५ । ८ । १२ । १६ ।
२० । २५ वर्षेष्वेतेषुवैकष्टंजातःपुत्रोविनश्यति ॥ बहुदुःखंचानुभूयपश्चाद्रंडाभविष्यति ॥ ८६ ॥ परमायुर्वर्षाणि ५८ ॥ १७ अथदया
धारयोगः ॥ खानदेशेवसत्पूर्वमाभीरःपादजस्तदा ॥ धनधान्यसमृद्धस्तुदानधर्मेसदारतः ॥ ८७ ॥ दत्तानितेनदानानिपर्वस्वपिविशे
षतः ॥ तुलादानंगोशतंचगजवाजिसहस्रकम् ॥ ८८ ॥ जलोत्सर्गंवनोत्सर्गंद्विजगेहान्यकारिच ॥ एवंनिवसतस्तत्रपापमाचरितंक्वचि
त् ॥ ८९ ॥ गृहान्निराशोह्यतिथिर्यातोदुःखीपरत्रतत् ॥ स्वर्गापवर्गभोगश्चबभूवबहुवार्षिकः ॥९० ॥ ३ । ६ । ९ । १४ । २० । २८ । ३५
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि॥७५॥१८अथदारणयोगः ॥ आसीज्जन्मांतरेचैवशूद्रोनाममहीधरः ॥ मैथिलेनगरेचैवन्यवसत्परिवारयुक् ९९
॥ ९१ ॥ कृषिकर्मोद्यमेमग्नःपरिवारस्यपोषकः ॥ एकस्मिन्समयेविप्रकृतंकर्मजुगुप्सितम् ॥ ९२ ॥ गृहाश्रितःश्वावैतेनविनाघंतुहतस्तदा ॥

समृतस्तेनदुःखेनपापमाचरितंत्विदम् ॥ ९२ ॥ ततःशूद्रोमृतोविप्रगतोऽसौनरकेतदा ॥ पुनरागत्य [illegible] पुत्रहीनेनन्यधीः ॥ ९४ ॥
प्रथमेपंचमेवर्षेद्वादशेषोडशेपिवा ॥ कष्टंतस्यभवेच्चाथषष्ठिवर्षान्तरेमृतिः ॥ ९५ ॥ १९ अथतारणयोगः ॥ नैमिषारण्यनिकटेच
ककारोऽवसत्पुरा ॥ गुणीदासइतिख्यातःपत्नीतस्यपतिव्रता ॥ ९६ ॥ नानाकर्मकृतंतत्रसदावैपापबुद्धिना ॥ एकस्मिन्समयेवत्सतरी
तत्रसमागता ॥ ९७ ॥ परक्षेत्रगताविप्रपादजेननिवारिता ॥ पापमाचारितंतेनबहुवर्षगतागतैः ॥ ९८॥ समृतःकुष्ठरोगेणपत्नीजातासती
तदा ॥ स्वर्गवासःकृतोद्वाभ्यांपितृवर्षसहस्रकम् ॥ स्वर्गाच्चैवच्युतोभूत्वामर्त्यलोकेचमानुषः ॥ ९९ ॥ १।३।५।९।१२।१७।२०।२५ वर्षेषु
कष्टम् ॥ परमायुर्वर्षाणि ८१॥२० अथद्रष्टुयोगः ॥ द्रष्टुयोगेचयोजातःपूर्वजन्मनिसर्पजः ॥ महाकरालवदनोविषेणपरिवेष्टितः॥१००॥
देशेहिकीकटेचैवराजहर्म्यस्यसन्निधौ ॥ दैवाद्गंगातटेसर्प्पःसमृत्वाचदिवंगतः ॥१०१॥ गंगामृत्युवशात्पुत्रसजातोभुविमानुषः॥सर्वाभीष्ट
प्रदाताचसर्वसम्पद्युतोधुना ॥ मध्येमध्येभवेत्कष्टंतच्छान्त्याचसुखंभवेत् ॥ १०२ ॥ २।४। ८ । १५ । २० । ३९ वर्षेषुकष्टम् ॥ परमा
युर्वर्षाणि ६१ ॥ २१ अथदंलह्वयोगः ॥ पूर्वंतुगिरिरम्यस्यविंध्यस्यनिकटेतदा ॥ हयग्रीवेतिनामाढ्योविप्रोवसतिवैतदा ॥१०३॥ बहु
पुत्रभ्रातृबंधुश्चंडक्रोधानलःसदा ॥ एकस्मिन्समयेविप्रगंगास्नानंतदाकरोत् ॥ १०४ ॥ पापानिविलयित्वाचस्वर्गवासीबभूवह॥पुनर्वैमा
नुषीयोनौसर्वसौख्यसमन्वितः ॥१०५॥ १।३।५।८।१३।२०।२८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १००॥ अथतरकयोगः॥आसीज्जन्मां
तरेचैवबाहुजोमगधेवसन् ॥ राजसेवीमहाशूरःकिंचिद्ग्रामाधिपस्तदा ॥ १०६ ॥ एकंतस्यभवेन्मित्रंभूपतिर्बहुधार्मिकः॥तस्याऽऽज्ञयाकृतं
पापंशृणुशुक्रयथामति ॥ १०७ ॥ पूर्वंदत्त्वातुविश्वासंराज्ञश्चहतवान्सवै ॥ सराजयक्ष्मरोगेणपीडयमानकलेवरः ॥ १०८ ॥ १।३ । ८ ।

स्वज्ञातीयस्यचाऽन्यस्यवृत्तिलोपंतथाऽकरोत् ॥ १०९ ॥ तेनपापानुसारेणवंशवृद्धिर्नजायते ॥ दशवर्णास्ततोगावः संकल्प्यब्राह्मणार्पणम ॥ ११० ॥ ततः श्रेयोभवेत्तस्यपुत्रोजीवतिनिश्चितम् ॥ पापानिविलयंयांतिनात्रकार्य्याविचारणा ॥ १११ ॥ २३ अथदरणीयोगः ॥ वैश्योऽभवद्वंगदेशेकृषिवाणिज्यतत्परः ॥ व्यापारेसंचितालक्ष्मीस्तेनवैश्येनवैद्विज ॥ ११२ ॥ दानंनदत्तवान्कापिपर्वस्वपिद्विजायच ॥ तेनदोषेणदारिद्र्यंलभतेऽस्मिन्हिजन्मनि ॥११३॥ कुरुक्षेत्रेकृतेदानेवित्तसौख्यसमन्वितः॥अन्यथानहिमुच्येतदारिद्र्याद्येनकेनचित् ॥११४॥ ९।१९।२०।२४ वर्षेषुकष्टम्॥परमायुर्वर्षाणि७९॥२४अथदीर्घकेशयोगः॥कुलद्वयाऽऽनंदकरीपूर्वजन्मनिवैश्यजा॥ बभूव भर्तृसुहृदातदाज्ञापालिनीसती॥११५॥ अत्रजन्मनिब्राह्मण्याकाश्यांवैगमनंकृतम्॥व्रतैर्दानैश्चतत्रापिकृतंद्धाराधनंतया ॥११६॥पंचपंचाशदब्दांतेमृत्युंयातापतिव्रता॥साऽगमिष्यद्वैस्वर्गंचात्रजन्मनिवैनरः ॥भविष्यतिमहाराजकुलेराजातिधार्मिकः॥११७॥२५अथदलाकारयोगः॥क्षात्रेकुलेसमुत्पन्नोगुल्मवातोदरामयी॥वित्तपः कृपणश्चैवमदोदरसमन्वितः ॥ ११८ ॥ धनधान्यसमायुक्तः किंचिद्व्यापारवान्भुवि॥ दायादशत्रुपीडाचमिथः क्लेशश्चदारुणः ॥११९॥ तस्यनारीद्वयंचास्तिसंजातंचात्रजन्मनि ॥ बहुपुत्र्यः प्रसूताश्चनतुपुत्रः प्रजायते ॥१२०॥ कदाचिज्जातमात्रस्तुमृतः पुत्रोग्निमासकः ॥ एकापुष्टिवतीभार्य्यासंजातस्तत्रभार्गव ॥१२१॥ इति ॥ २६ अथदंडयोगः॥पूर्वजन्मनिसोन्त्यः किंचिद्भूमिपतिस्तदा ॥ अर्थलुब्धः प्रवर्त्तेतग्रामाधीशः प्रतापवान्॥१२२॥ग्राममध्येस्तुतिंचक्रेब्राह्मणोज्ञानसत्तमः॥ पुत्राः पंचतथासप्त ...पुत्रोवित्तसंयुतः ॥ १२३ ॥ कालेनमृत्युमापन्नोधनलुब्धोनराधिकः ॥ तस्यभार्य्यामहासाध्वीसाहसंचाकरोद्धशम् ॥ १२४ ॥

…पुत्रायुतः सदा ॥ पुराकृतानिकर्माणिभुज्यंतेमानवैःसदा ॥ (१२५) ॥ १।३।५।८।१५।२०।३१। ३६ वर्षेषुकष्टम् ॥ परमायु
वर्षाणि ६५ ॥ २७ अथदोलनयोगः ॥ अथशूद्रकुलेपूर्वमासीत्पुण्यावरांगना ॥ तदादानरतायाताकुरुक्षेत्रेद्विजोत्तम ॥१२६॥ सर्वैःसुखैः
सदोपेतासर्वसंपत्तिसंयुता ॥ तयाकृतंमहापापंभाविनोर्थस्यवैबलात् ॥ १२७ ॥ समीपेवसतोविप्रब्राह्मणस्यनवंगृहम् ॥ निर्दग्धंचाग्निदाहे
नवैरभावेनवैतदा ॥ १२८ ॥ गृहदाहरूपपापाच्चनरकेसागताध्रुवम् ॥ नरकान्दारुणान्भुक्त्वाआगताऽत्रमहीतले ॥ १२९ ॥ दानधर्मकृ
तात्पुण्यात्सोत्रजातोद्विजोत्तमः ॥ सुखदुःखसमाक्रांतःसंततिश्चविनश्यति ॥ १३० ॥ १।२।४।८।१२।२०।२६। ३१।३६
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ २८ अथदत्तकयोगः ॥ असौजन्मांतरेचैवबभूवब्राह्मणःसच ॥ गौरीकुमारिकाखंडेन्यवसत्परि
वारयुक् ॥ १३१ ॥ धर्मदेवइतिख्यातःपत्नीपुत्रसमन्वितः ॥ देशेकारूषकेचैवनिवसन्परिवारयुक् ॥१३२ ॥ सत्यव्रतपरोनित्यंशुक्लवृत्ते
श्चजीवनम् ॥ एकस्मिन्समयेविप्रभागिनेयःसमागतः ॥ १३३ ॥ आदरश्चकृतोनास्यतिरस्कारमथाकरोत् ॥ सविप्रःपंचतांप्राप्तःपापात्पाप
फलंभृशम् ॥ इदंजन्मद्वितीयंतुमहारोगैःप्रपीडितः ॥ १३४ ॥ १।३।५।८।१४।२०।२६।३१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
६० ॥ २९ अथदीनयोगः ॥ कश्चिद्दासकुलेपूर्वंचारणोज्ञानदुर्बलः ॥ शिवभक्तिपरोनित्यंदेवताऽतिथिपूजकः ॥ १३५ ॥ देशे
मालवकेपुण्येस्थलेचपरिवारयुक् ॥ तत्रदानानिदत्तानिब्राह्मणस्यकरग्रहे ॥ १३६ ॥ सकदाचिन्महाभागपापंतुकृतवानिदम् ॥
स्वभार्यांधारितोगर्भःकामलोभेननिश्चितम् ॥ १३७ ॥ यत्नेकृतेपितेनैवनासीद्गर्भस्यपातनम् ॥ मृतासातेनदुःखेनगर्भपातेनभोनघ ॥

॥ १२८ ॥ एवंबहुतिथेकालेगतोऽसौयमशासनम् ॥ भुक्त्वापापफलाद्दुःखंपुण्याँल्लोकान्छुभानिह ॥ पूर्वपुण्यप्रभावेणसजातः
पादजोधुना ॥ १२९ ॥ १ । ३ । ५ । ७ । १५ । २१ । २४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५८ ॥ ३० अथदि
व्ययोगः ॥ काचिन्नारीचारणस्यबभूवप्रियवादिनी ॥ व्रतदानरतासाध्वीपूर्वजन्मनिभार्गव॥१४०॥साचग्रामांतरेगत्वाचादहद्दुह्वरंवनम्॥
विनिर्दग्धेवनेतत्रबहुजीवाः क्षयंगताः ॥ ततोबहुतिथेकालेतज्जंदुःखंतुप्राप्यच ॥ तत्रदानवशात्पूर्वादत्रसापादजास्मृता ॥ १४१ ॥
जीवघातात्तथापूर्वात्पापादत्रैवजन्मनि ॥ जातासंततिहीनासाकुष्ठरोगेणपीडिता ॥ १४२ ॥ १ । ३ । ४ । ८ । ९ । १८ । २२ ।
२७ । २८ । ४४ वर्षेषुकष्टम् ॥ परमायुःशतार्द्धंचतथात्वेकोनषष्टिकम्॥नवम्यांचार्द्धरात्रेचगंगातीरेविनश्यति ॥१४३॥३१ अथदीनार्द्रयो
गः ॥ अथातःसंप्रवक्ष्यामिविस्तरेणसमासतः ॥ आसीज्जन्मांतरेचैवब्राह्मणोज्ञानसंयुतः ॥ १४४ ॥ पत्नीतस्यमहादुष्टाकर्कशाकटुवादिनी॥
ऐरावतस्यनिकटेन्यवसत्पूर्वजन्मनि ॥ १४५॥ एकस्मिन्समयेविप्रब्राह्मणः परदेशके॥ धनस्यकृतवान्प्राप्तिंनानायुक्तिसमन्वितः॥१४६॥
स्वगृहेद्रव्यमानीयभार्यायैचनिवेदितम् ॥ साचदुष्टाऽथयंकृत्वाजारस्यापिददौधनम् ॥ १४७ ॥ पत्यासहकृतंयुद्धंब्राह्मणेनविपाटिता ॥
एवंस्वल्पेगतेकालेसविप्रःपंचतांगतः ॥ १४८॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्यफलंतथा ॥ बहुवर्षसहस्रांतेचागतोधरणीतले ॥१४९॥
१ । ३ । ५ । ८ । १६ । २० । २७ । २८॥ वर्षेषुकष्टम्॥परमायुर्वर्षाणि ५७ ॥ ३२ अथ दंडपाणियोगः ॥ पूर्वजन्मनिसौराष्ट्रेनगरेबहवोज
नाः ॥ तत्रवैश्योऽवसत्त्वेकआराधनयुतोहरेः ॥ १५० ॥.एकदावृन्दकारण्येब्राह्मणस्यशुभाद्विज ॥ बहुक्षीरप्रदात्रीचपरिवारस्यपालिका ॥ १०१
॥ १५१ ॥ तेनवैश्येनवैतस्यांगोर्वत्सश्चहृतस्तदा ॥ तद्दुःखेनतुगौस्तत्रक्रंदंतीप्रतिवासरम् ॥ १५२ ॥ व्याकुलावत्सशोकेनमरणंचापवै

ध्रुवम् ॥ प्रायश्चित्तंकृतंनैवंगोपितंवस्मरद्विज ॥१५३॥ ततोमृत्युवशंप्राप्तोवैश्योयातोयमालयम् ॥ लोकाच्चैवपरिभ्रष्टःषष्टिवर्षसहस्रकम् ॥
पुनर्वैमानुषोभूत्वामर्त्यलोकेद्विजोत्तम ॥१५४॥ १ । ४ । ८ । १३ । १७ । २१ । २७ । ३१ । ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७७
॥ ३३ अथ दुर्गायोगःप्रकथ्यते ॥ नीलकंठध्वजोराजाह्यजीतपुरसंस्थितः ॥ तस्यपत्नीस्वधाख्यातापा तिव्रत्यपरायणा ॥ १५५ ॥
सराजाधर्मशास्त्रज्ञोगोसुरार्चनतत्परः ॥ सार्वभौमपतिर्भूत्वाचोग्रदंडःप्रतापवान् ॥ १५६ ॥ तोषितास्त्रिदशाःसर्वेदानेविप्राश्चतोषिताः ॥
नानाविलासविभवैःपुत्रकन्याविवर्जितः॥१५७॥दुर्गार्चनंकृतंसम्यक्कोटिजापास्ततःपरम्॥होमकुंडेतदादेवीप्रादुर्भूयाऽवदत्त्विमम्॥१५८॥
पुत्रस्तेभविताराजन्सर्वलक्षणसंयुतः ॥ एवंदेवीवरंदत्त्वाचान्तर्धानंगतातदा ॥१५९॥ किंचित्कालांतरेचैवबभूवसुन्दरःसुतः ॥ सराजापंच
तांप्राप्तइंद्रलोकेतदागतः ॥ इन्द्रलोकात्परिभ्रष्टश्चागतोधरणीतले ॥ १६० ॥ १ । ३ । ५ । ८ । १२ । १८ । २२ । २७ । ३५ । ३८ ।
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६६ ॥ ३४ अथदंपतियोगः ॥ देशेपुण्यतमेचैवह्यवात्सीद्बहुसुन्दरः ॥ ब्राह्मणोवेदविभ्रष्टोवेदशास्त्रस्य
निंदकः ॥ १६१ ॥ समांसस्यैववैभोक्तामत्स्योनित्यंप्रभुज्यते ॥ तस्यस्त्रीपरमानाम्नाभ्रष्टाचातीवसुन्दरी ॥ १६२ ॥ परपुंसिरतानित्यं
निर्भयापतिवंचिका ॥ एवंहिन्यवसत्तत्रबहुवर्षगतागतैः ॥ आयुषस्तुसमाप्तत्वाद्गंगातीरेमृतौद्विज ॥ १६३ ॥ स्वर्गवासःकृतोद्वा
भ्यांबहुवर्षसहस्रकैः ॥ ततोवैमानुषीयोनौसर्वसौख्यसमन्वितः ॥ १ । २ । ३ । ४ । ७ । १२ । १५ । २० । २७ । ३२ ।
३७ । ४० । ४५ एतद्वर्षेभवेत्कष्टंपीड्यमानोमुहुर्मुहुः ॥ १६४ ॥ परमायुर्वर्षाणि ५९ ॥ ३५ अथदारुणयोगः ॥ अन्तर्वेद्यां
द्विजस्त्वेकः सर्वपूज्योधनेश्वरः ॥ माहेश्वरः समाख्यातः पत्नीतस्यप्रभावती ॥ १६५ ॥ क्रयविक्रयणेनिष्ठोबहुशिष्यैश्चशोभितः ॥

शिष्यद्रव्यंहरेन्नित्यंसदादानंचदत्तवान् ॥ सदाऽभिमानयुक्तश्चदंभवृत्तिंकरोतिसः ॥ १६६ ॥ एवंसर्ववयोयातंब्राह्मणस्यैवपंचता ॥ शिष्यद्रव्यापहारेणवंशहीनोऽभवत्खलु ॥ मध्येभवेत्सवैरोगैः पीडचमानकलेवरः ॥ १६७ ॥ १ । ३ । ८ । १३ । १७ । २२ । २५ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० ॥ ३६ अथदारिद्र्ययोगः ॥ गोदावरीनदीतीरेबाहुजोन्यवसत्तदा ॥ हेमकर्णइतिख्यातोबहुपत्नीभिरन्वितः ॥ १६८ ॥ बहुपुत्रोबहुभ्राताबहुराज्योपशोभितः ॥ द्रव्यलोभेनतेनैवप्रजाश्चव्याकुलीकृताः ॥ १६९ ॥ अदंड्योदंडितस्तेनचागम्यागमनंकृतम् ॥ स्वभार्य्यांचपरित्यज्यवेश्यायांप्रीतिमुद्वहन् ॥ १७० ॥ प्राप्तेवार्द्धक्यसमयेकिंचिद्दानार्चनंकृतम् ॥ सगत्वा यमलोकेचपुण्यपापफलंगतः ॥ पुनरागत्यमेदिन्यांसुखसौभाग्यसंयुतः ॥ १७१ ॥ १ । २ । ५ । ८ । ११ । १५ । २७ । ३१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ॥ १०५ ॥ ३७ अथदानवेंद्रयोगः ॥ न्यवसन्मध्यदेशेतुवैश्यस्त्वेकोपिगर्वितः ॥ हरिदासेतिविख्यातोगोविंदेतिपुरेऽवसत् ॥ १७२ ॥ तस्यपत्नीप्रभानाम्नीसुन्दरीरूपगर्विता ॥ नमन्यतेद्विजान्देवान्नातिथीन्पितरावपि ॥ १७३ ॥ पतिसेवारतानित्यं पतिनासहमोदते ॥ वैश्येनबहुधाद्रव्यंस्वर्णमौक्तिकमर्जितम् ॥ १७४ ॥ वल्लभोनामवैश्योपितस्यमित्रंबभूवह ॥ परदेशाच्चव्यापारात्कृत्वा प्राप्तिनिरंतरम् ॥ १७५ ॥ आगतोविप्रकष्टेनहरिदासश्चवैगृहे ॥ आदरंबहुधाकृत्वास्वगृहेस्थापयद्द्विज ॥ १७६ ॥ लक्षद्वयंस्वर्णमुद्रामित्रहस्तेप्रदापितम् ॥ स्नानार्थंचगतोवैश्योवाराणस्यांविचक्षणः ॥ १७७ ॥ तत्रतस्याभवन्मृत्युर्गतःस्वर्गंद्विजोत्तम ॥ तत्स्वर्णंचव्ययंकृत्वाभार्य्ययासहितश्चसः ॥ १७८ ॥ ततोमृत्युवशंयातोभार्य्ययासहितोऽपिवा ॥ सत्यलोकाच्च्युतौभूत्वामर्त्यलोकंसमागतौ ॥ १७९ ॥ १ । २ । ५ । ६ । ९ । १३ । १६ । २३ । २९ । ३३ । ३८ । ४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ३८ अथदर्वीयोगः ॥ इन्द्रप्रस्थ

पुरेचास्तिशूद्रस्त्वेकोविचक्षणः ॥ रेवेसर्वरमणोनामगुणवान्भक्तिसंयुतः ॥१८०॥ तस्यचंद्रवतीनाम्नीप्रियाभक्तिसमन्विता ॥ तेनकन्यातु
युवतिर्दत्तावृद्धवरायच ॥ १८१ ॥ द्रव्यलोभेनभोविप्रकृतंकर्मजुगुप्सितम् ॥ जामाताचमृतःशीघ्रंकन्याजातासतीतदा ॥ १८२ ॥ तस्या
द्रव्याणिसर्वाणिव्ययंकृत्वादिनेदिने ॥ समृत्वाचातिकष्टेननरकेरौरवेगतः ॥ ततोवैमानुषीयौनौबहुदुःखेनदुःखितः ॥१८३॥ १।३।१०।
१८। २५। ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ३९ अथद्वीपकयोगः ॥ कश्चिद्वैश्यकुलेपूर्ववंगदेशेवसन्नपि ॥ यदुवीरइतिख्यातः
पत्नीपुत्रसमन्वितः ॥ १८४ ॥ देशेहिरामक्षेत्रेचवाणिज्येचरतः सदा ॥ द्रव्यस्योत्पादनंकृत्वाबहुयुक्त्यातथैवच ॥ १८५ ॥ एकस्मिन्स
मयेविप्रकृतंकर्मसुदारुणम् ॥ बाहुजस्यप्रसंगेनमृगंहत्वाविशेषतः ॥ १८६ ॥ तेनपापानुसारेणसंप्राप्ययमशासनम् ॥ ततोवैमानुषोभूत्वा
सर्वसम्पद्युतोधनी ॥ १८७ ॥ १। ३। ६। २०। २५। ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८५ ॥ ४० अथदीनकयोगः ॥ सर्वधारी
समाख्यातोब्राह्मणोधनवर्जितः ॥ दानंप्रतिग्रहंचासावग्रहीह्लोभसंयुतः ॥ १८८ ॥ गृहदानंस्वर्णदानंमहिषीगजवाजिनाम् ॥ एवंगतेषु
वर्षेषुब्राह्मणस्यैवपंचता ॥ १८९ ॥ पापाच्चनरकंगत्वासर्पयोनिंततःपरम् ॥ काकोलूकवृकानांचयोनीर्भुक्त्वापृथक्पृथक् ॥ १९० ॥ पश्चा
च्चमानुषीयोनिःसरय्वाश्चोत्तरेतटे ॥ कन्यायावंशवृद्धिश्चपुत्रोनैवतुनैवच ॥ १९१ ॥ गोसहस्रप्रदानाच्चवंशवृद्धिर्भविष्यति ॥ १९२ ॥
१। ३। १०। १५। २०। २७। ३०। ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८८ ॥ ४१ अथधर्मारियोगः ॥ अयोध्यानगरेपूर्वंका
यस्थोवैष्णवस्तथा ॥ तत्रतिष्ठतिभोविप्रनंददासेतिविश्रुतः ॥ १९३ ॥ तस्यपत्नीसमाख्यातानाम्नासत्यवतीशुभा ॥ पातिव्रत्यरताचोग्रा
पतिशुश्रूषणेरता ॥ १९४ ॥ तस्यमित्रमभूदेकोमहाधनसमन्वितः ॥ ततोबहुगतेकालेतीर्थयात्रांगतःसवे ॥ १९५ ॥ कायस्थेस्थाप्यत

द्रव्यंस्नानार्थंचपतिर्गतः ॥ कायस्थेनश्रुतंतस्यपतेश्चमरणंह्यभूत् ॥ १९६ ॥ तस्यद्रव्याणिसर्वाणिव्ययंकृत्वातदानघ ॥ कायस्थस्यभवे तंहि-
न्मृत्युर्यमलोकेप्रपीडितः ॥ १९७ ॥ पुनर्वैमानुषीयोनौमर्त्यलोकेद्विजोत्तम ॥ १९८ ॥ १।४।८।१३।१७। २० वर्षेषुकष्टम् ॥ परमायु
र्वर्षाणि ६९ ॥ ४२ अथतानरंगयोगः ॥ अयोध्यानगरात्पूर्वंक्रोशमात्रेचवैपुरे ॥ धनधान्यसमायुक्तोमहिषीपालनेपरः ॥१९९॥ कृषिवृ
त्तौचनिरतोवेदनिंदापरायणः ॥ वेश्यासुरतसंतुष्टोदेवतातीर्थनिंदकः ॥ २०० ॥ एवंबहुतिथेकालेसमृतोगदपीडितः ॥ तिर्य्यग्योनिसमु
त्पन्नःसतदाचमहीतले ॥ २०१ ॥ १ । ३ । ६ । १४ । २० । ३२ । ३८ । ४१ । ४२ वर्षेषुमहत्कष्टम् ॥ परमायुर्वर्षाणि ९९ ॥ ४३
अथधोधकयोगः ॥ मांडव्येचपुरेदेवसूदएकोपितिष्ठति ॥ यादवेतिसमाख्यातस्तस्यभार्य्याचयादवी ॥२०२॥ प्रत्यहंगोधनेनैवक्रयविक्रय
मांचरत् ॥ ब्राह्मणोमित्रमेकंचतत्समीपेगतोऽवसत ॥ २०३ ॥ तस्यपत्नीविशालाक्षीपुंश्चलीपतिवंचिका ॥ बलादाकृष्यतांशूद्रःकृतंसु
रतिसंगमम् ॥ २०४ ॥ एवंस्वल्पेगतेकालेशूद्रोमृत्युवशंगतः ॥ पापात्पापफलंभुक्त्वाकुंभीपाकेचभोनघ ॥ षष्टिवर्षसहस्रांतेमानुषोपिततो
भवत ॥ २०५ ॥ १ । ४ । ११ । १७ । २० । २५ । २९ वर्षेषुकष्टम ॥ परमायुर्वर्षाणि १०० ॥ ४४ अथधर्मकाशयोगः ॥ पैठने
नगरेपूर्वंक्षात्रस्तुकृषिकर्मकृत् ॥ भीमसेनःसमाख्यातःपत्नीपुत्रसमन्वितः ॥ २०६ ॥ एकस्मिन्समयेविप्रकृतंकर्माऽतिदारुणम् ॥ ब्राह्मण
स्यहृतंक्षेत्रंसधान्यंचतदानघ ॥ २०७ ॥ एवंनिवसतस्तत्रबहुवर्षगतागतेः ॥ ततोमृत्युवशंयातोनानानरकसंस्थितिः ॥ २०८ ॥ ततोवै
मानुषीयोनौकीकटेहिसमागतः ॥ पुत्रवृद्धिर्नजायेत २८ नैवविशेषतः ॥ २०९ ॥ १ । ३ । ६ । २० । २५ । ३९ वर्षेषुकष्टम् ॥ १०३
परमायुर्वर्षाणि ६८ ॥ ४५ अथधंधमारी [illegible] थकेदारदेशेतुब्राह्मणःशास्त्रकोविदः ॥ देवनंदननामाख्यःसहशिष्ये

णराजते ॥ २१० ॥ एकस्मिन्समयेगेहंत्यक्त्वाचब्राह्मणः ॥ वनाद्रिनिकटेस्थित्वाकृत्वाजाप्यंनिरंतरम्॥२११॥ तत्रभूपःसमायातोदृ
ष्ट्वाविप्रश्चसत्कृतः ॥ विप्रंगृहंसमानीयदशग्रामाःप्रदापिताः ॥ २१२ ॥ तपश्चर्य्यांपरित्यज्यविषयानन्वभूदसौ ॥ पापाच्चनरकेगत्वापुण्या
त्त्वत्रसुखान्वितः ॥ २१३ ॥ १ । ४ । ८ । १६ । २६ । ३६ । ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७७ ॥ ४६ अथधंधयोगः ॥ नर्मदा
दक्षिणेभागेभूयोऽभूद्रामासिंहकः ॥ चौर्येणकर्मणाद्रव्यंसंचितंप्राणवद्विज ॥ २१४ ॥ नदानंनचभोगश्चनतीर्थेषुव्ययःकृतः ॥ एवंनिवस
तस्तत्रबहुवर्षगतागतैः ॥२१५॥ अरातिश्चसमायातस्तद्द्रव्यंलुंठितंभृशम् ॥ एवंस्वल्पेगतेकालेसराजापंचतांगतः ॥ २१६ ॥ तिर्य्यग्यो
नौसमुत्पन्नःशृगालकच्छपादिषु ॥ इदंतुमानुषंजन्मधनधान्यसमन्वितः ॥ २१७ ॥ १।३।८।१३।२१। २३ । ३६ । ३६ वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ६८ ॥ ४७ ॥ अथधौमाख्ययोगः ॥ कश्चिद्वेश्याकुलेजातःपूर्वजन्मनिभूमिपः ॥ परदारासमासक्तोवेश्यायांप्रीतिमुद्वहन्
॥ २१८ ॥ धर्मकर्मनजानातिकुकर्मणिसदारतः ॥ वेश्याज्ञयाकृतंदानंचन्द्रग्रस्तेचपर्वणि ॥ २१९ ॥ गोशतंब्राह्मणेदत्तंसर्वालंकरणैर्यु
तम् ॥ मृतोयमपुरंप्राप्तःससहायोद्विजोत्तम ॥ वेश्यागर्भसमुत्पन्नोधनधान्यसमन्वितः ॥ २२० ॥ १ । ३।८।११।१५।२०।२७।३५।३७
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ ४८ अथधान्यकयोगः ॥ कंदर्पदेशेवनगह्वरेचाऽवसत्तुविप्रोबहुधर्मसाधकः ॥ सत्यात्मकंसत्यसमा
धिनिष्ठःपरोपकर्त्ताबहुशास्त्रपाठकः ॥ २२१ ॥ एकदादैवयोगेनवेश्यातत्रसमागता ॥ शोषेणमोहनोन्मादैर्वशेवैकृतवत्यमुम् ॥ २२२ ॥
तपश्चर्य्यांपरित्यज्यव्यसनेषुरतश्चसः ॥ कालयोगेनवैमृत्युःपुनरागत्यभूतले ॥ २२३ ॥ १ । ३ । ६ । ९ । १६ । २२ वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ७५ ॥ ४९ अथधारकयोगः ॥ अथातःसंप्रवक्ष्यामियत्कृतंपूर्वजन्मनि ॥ पुष्करंरमणंक्षेत्रंतत्रविप्रोऽवसत्त्वसौ ॥

॥ २२४ ॥ राघवेन्द्रइतिख्यातःपत्नीतस्यकलाभिधा ॥ ब्रह्मकमपरिभ्रष्टोधूर्तविद्योपजीवनम् ॥२२५॥ एकस्मिन्समयेविप्रशूद्रेणदुष्कृतं
कृतम् ॥ पुस्तकंचाक्षमालांचब्राह्मणस्यहृतंद्विज ॥ २२६ ॥ चोरितंचार्द्धरात्रेचपापमाचरितंत्विदम् ॥ आयुषस्तुसमाप्तत्वात्सविप्रः पंच
तांगतः ॥ २२७ ॥ सतेनकर्मणायुक्तःप्राप्तस्तुयमशासनम् ॥ ततोवैमानुषीयोनौमर्त्यलोकेसमागतः ॥ २२८ ॥ १ । २ । ४ । ८ । १२ ।
१५ । २० । २७ । ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६८ ॥ ५० अथ नृसिंहयोगः ॥ अन्तर्वेद्यांवसन्पूर्वंबाहुजोधनवर्जितः ॥ भिक्षुके
तिसमाख्यातः पत्नीतस्यसुधाकरी ॥ २२९ ॥ पतिसेवारतानुग्रापातिव्रत्यपरायणा ॥ शिवार्चनंकृतंसम्यक्कायवाचिकमानसैः ॥ २३० ॥
शिवेनविभवोदत्तःसर्वसौख्यंबभूवह ॥ परस्वंचोरितंतेनकृतंकर्मजुगुप्सितम् ॥ २३१ ॥ भागिनेयस्ययद्द्रव्यंहृतंतेनचवैबलात् ॥
दैवान्मृत्युवशंप्राप्तःपापाच्चनरकंगतः ॥ २३२ ॥ पुण्याद्वैमानुषीयोनौधनधान्यैश्चसंयुतः ॥ १ । ३ । ६ । १० । १५ ।
१९ । २७ । ३२ । ३६ । ४० । एतद्वर्षेमहाकष्टंजायतेनात्रसंशयः ॥ २३३ ॥ परमायुर्वर्षाणि ६२ ॥ ५१ अथनद
ननामयोगः ॥ अन्तर्वेद्यांवसन्पूर्वंविपाशानिकटेऽपिच ॥ आनंदइतिविख्यातः पत्नीतस्यमनोरमा ॥ २३४ ॥ ब्रह्मावर्त्तस्य
निकटेन्यवसत्परिवारयुक् ॥ बाहुजोधर्मवान्सोपिपितृश्राद्धपरायणः ॥ २३५ ॥ पत्नीतस्यमहाभ्रष्टापत्यवज्ञाकरीसदा ॥ एवंनिव
सतस्तत्रबहुवर्षंगतागते ॥ २३६ ॥ आयुषस्तुसमाप्तत्वात्समृतोगदपीडितः ॥ पापात्पापफलंभुक्त्वाषष्टिवर्षसहस्रकम् ॥ पुनर्वैमानुषो
जातःपीड्यमानकलेवरः ॥२३७॥ १ । ४ । ७ । १२ । १७ । २१ । ३३ । ३६ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७४ ॥ ५२ अथनादी
तायोगः॥ कुमारीखंडनिकटेपूर्वंजन्मनिपादजः॥ किशोरइतिनामाढ्यः पत्नीपुत्रविवर्जितः॥२३८॥ तस्मिन्ग्रामेऽवसत्त्वेकोवैश्यःपरमधा

र्मिकः ॥ तस्यपुत्रीविशालाक्षीसुंदरीचातिशोभना ॥२३९॥ बलादाकर्षितातस्यांहठाच्चैवरतिः कृता ॥ साबालाचविषंपीत्वामृताचलोक
शंकया ॥२४०॥ किंचित्कालांतरेविप्रपादजोमृत्युमाप्तवान् ॥ नानाकष्टंबभूवाऽपियमदूतैर्निपीडितः॥२४१॥पश्चाद्वैमानुषीयोनौचागतो
भूमिमंडले॥१।४।८।११।१९।२०। वर्षेषुकष्टातुरःसोथजपदानार्चनात्सुखम् ॥२४२॥ परमायुर्वर्षाणि ७३॥९३ अथनेतायोगःप्रकथ्यते ॥
काश्मीरेवैततोदेवब्राह्मणोनामगौतमः॥पठितंबहुलंशास्त्रंसंध्योपासनसंयुतः॥२४३॥ म्लेच्छभाषाप्रभाषीचमांसाहारीचकुत्सितः ॥ तस्य
भार्य्यामहालुब्धावाणीमात्रंनदापयेत्॥२४४॥कोटिद्रव्यंकृतंतेननिःक्षिप्तंवसुधातले ॥ अतैकदागतस्तत्रदारिद्र्येणप्रपीडितः॥२४५॥अना
दरःकृतोऽत्यंतंनदत्तंभोजनंक्वचित् ॥ एवंस्वल्पेगतेकालेब्राह्मणःपञ्चतांगतः ॥ २४६ ॥ पत्नीतस्यसतीजातास्वर्गलोकमुभौगतौ ॥ अव
तीर्णःपुनःसोपिब्राह्मणस्यकुलेधुना ॥ २४७ ॥ १ । ४।८।१७।२१।३१।३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ९४ अथनेतायोगः ॥
मध्यदेशेतदाविप्रवसंतिबहवोजनाः ॥ सतत्रतिष्ठतिद्विजस्त्वेकोधर्मरतःसदा ॥२४८॥ तस्यपत्नीमहादुष्टाकर्कशानिष्ठुराधमा ॥ पापकर्म
रतानित्यंपुंश्चलीपतिवंचिका ॥२४९॥ पतिंत्यक्त्वाचसानारीमृताचगिरिगह्वरे ॥ ब्राह्मणःस्वर्धुनीतीरेपंचत्वंवशमाप्तवान् ॥ २५० ॥ बहु
वर्षसहस्रांतेपुनरागत्यभूतले ॥ धनधान्यसमायुक्तःपूर्वांस्त्रीमत्रप्राप्तवान् ॥ मध्येमध्येभवेत्पीडाचोदरेकरपृष्ठयोः ॥२५१॥ १ । ८ । १९ ।
२० । २७ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ९५ अथनोहरयोगः ॥ महाराष्ट्रेनगरेदेवसोमकोनामब्राह्मणः ॥ तस्यपत्नीविशा
लाक्षीमनोज्ञाचातिसुंदरी ॥२५२॥ अतिथिंपूजयेन्नित्यंपतिसेवांतथाऽकरोत् ॥ ब्राह्मणोवेदनिरतस्तत्सकाशात्कृतंधनम् ॥ २५३ ॥ एक
स्मिन्समयेविप्रह्यतिथिश्चसमागतः ॥ संध्याकालेतदापुत्रनदत्तंतस्यवैक्वचित् ॥२५४॥ तिरस्कारःकृतस्तस्यपापमाचरितंत्विदम् ॥ पापा

त्वापफलंभुक्त्वापुण्यात्स्वर्गंतथाऽनघ ॥ ततोवैमानुषीयोनौधनधान्यसमन्वितः ॥ २५५ ॥ १ । २ । ५ । ८ ।२०।२७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७ ॥ ५६ अथनैष्ठचयोगः ॥ वसतेम्लेच्छदेशेतुकायस्थोहितदानघ ॥ वैदिकानांचविद्वेषीवेदानांतुविनिंदकः ॥२५६॥ ब्रह्मस्वहरणंकृत्वाब्राह्मणीगमनंकृतम् ॥ ततोबहुतिथेकालेकायस्थोमृत्युमाप्तवान् ॥२५७॥ कुम्भीपाकेचनरकेयमदूतैर्निपातितः ॥ काकयोनिःपुनर्भूत्वाकुक्कुटोवृषभस्तथा ॥ पुनर्वैमानुषींयोनिंचागतोधरणीतले ॥ २५८ ॥ २।५।७।१२।१७।२०।२५।२८।३० वर्षेषुकष्टम्॥ परमायुर्वर्षाणि ७५ ॥ ५७ अथनाराचयोगः ॥ अयोध्यानगरेपूर्वंवैश्यस्त्वेकोवसन्नपि ॥ धनधान्यसमायुक्तः पत्नीद्वयसमन्वितः ॥ २५९ ॥ कनिष्ठातस्यवैपत्नीसुशीलारूपसंयुता ॥ ज्येष्ठातुदुर्भगातस्यपरपुंसुरताधमा ॥ २६० ॥ महाधनस्यगर्वेणभार्य्यात्यागः कृतस्तदा ॥ एवंकृतेनगोदानंनातिथिर्नचतर्पणम् ॥ ३६१ ॥ मरणंतस्यवैजातंयमदूतैर्यमाज्ञया ॥ रौरवंनरकंविप्रषष्टिवर्षसहस्रकम् ॥ ॥ २६२ ॥ भुक्तंबहुविधंदुःखंपूर्वपापाऽनुसारतः ॥ शृगालोमर्कटोभूत्वाततोवैमानुषोभुवि ॥ २६३ ॥ १ । ३ । ५ । ८ ।१४।१८।२२।२७ ३८ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ ५८ अथनेमीनयोगः ॥ शृंगवेरपुरेदेवहेमकारस्तदाऽवसत् ॥ स्वकर्मनिरतोधीरःकुटुम्बपरिपोषकः ॥ २६४ ॥ भार्य्यातस्यमहाशीलासुंदरीचवरांगना ॥ गंगायांमरणंजातंस्वर्गलोकेतदाऽवसत् ॥ २६५॥ षष्टिवर्षसहस्राणिबहुसौख्यसमन्वितः ॥ ततःपुण्यक्षयेजातेमानुषोह्यत्रजन्मनि ॥१६६॥ धनधान्यसमायुक्तःपुत्रदारसमन्वितः ॥ रोगेणमहताविष्टोयुवभावेद्विजोत्तम ॥ २६७ ॥ १।३।८।११।१६।२२।२७।३१।३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ ५९ अथनेमाख्ययोगः ॥ कदाचिद्विपिनेरम्येहिमव[illegible] धौ ॥ नीतिदेवेतिनाम्नावैपत्नीतस्यंकलाभिधा ॥ २६८ ॥ धनधान्यसमायुक्तोवैश्यवृत्तिरतः सदा ॥ क्रयविक्रयक-

तांचकार्पे[illegible]यमाहितः ॥ २६९ ॥ एकस्मिन्समयेविप्रगुरुपुत्रःसमागतः ॥ नदत्तंतस्यवैकिंचिद्भोजनंछादननच ॥ २७० ॥ निराशोपि
गतश्चासौपापमाचरितंत्विदम् ॥ आयुषस्तुसमाप्तित्वान्ममारपथिभूसुरः ॥ पुण्यात्पुण्यफलंभुक्तंपापात्पुत्रविवर्जितः ॥ २७१ ॥१।३।९।
१२।१७।२०।३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि७८॥६० अथनमामियोगः ॥ मकेश्वरपुरेदेवब्राह्मणस्तत्रतिष्ठति ॥ ब्रह्मकर्मपरिभ्रष्टोदेवपूजा
विनिर्गतः ॥ २७२ ॥ शिवनिर्माल्यभोजीचप्रत्यहंचतदानघ ॥ शिवशर्मेतिविख्यातस्तस्यपत्नीप्रभावती ॥ २७३ ॥ कुलटाचंचलानि
त्यंपतिवंचनतत्परा ॥ ब्राह्मणोमूढसंचेताः परद्रव्यापहारकः ॥ २७४ ॥ मिथ्यापवादनिरतःपशुपीडनतत्परः ॥ किंचिद्दानार्चनंकृत्वावा
द्धक्येऽपितदानघ ॥ २७५ ॥ मरणंतस्यवैजातंयमदूतैर्निपीडितः ॥ नरकाच्चैवनिर्गत्यमानुषत्वंगतोधुना ॥ २७६ ॥ मस्तकेव्रणचिह्नंचमु
खेपार्श्वेतथाकरे ॥ कुनखीरोगसंयुक्तः पूर्वपापप्रभावतः ॥ २७७ ॥ १।३।५।१२।१६।२४।२९। ३३ वर्षेषुकष्टम् ॥ परमायु
र्वर्षाणि ८१॥६१ अथनित्यानंदयोगः ॥ आसीज्जन्मांतरेचैवबाहुजः सर्वजित्खलु ॥ पत्नीमनोहरातस्यपतिसेवापरायणा ॥२७८॥ राम
भक्तिरतः सोपिपूजनध्याननैष्ठिकः ॥ तस्यमित्रंद्विजस्त्वेकोमहाभक्तोऽतिवैष्णवः ॥ २७९ ॥ स्वर्णलक्षंततोदेवस्थापितंबाहुजेगृहे ॥
स्थापयित्वातुतद्द्रव्यंकाश्यांयातस्तदानघ ॥ वाराणस्यांमृतोविप्रोगतोऽसौपरमंपदम् ॥ २८० ॥ ततोबहुदिनेयातेबाहुजस्यापिपंचता ॥
भुक्त्वातुवैष्णवंद्रव्यंतेनयातोयमालयम् ॥ पुनरागत्यमेदिन्यांमानुषत्वंततोऽगमत् ॥ २८१ ॥ १।४।८।१५।२२।३८ वर्षेषुकष्टम्
परमायुर्वर्षाणि ८७ ॥ ६२ अथनिमावत्ययोगः ॥ मथुरायांवसत्पूर्वमाभीरोधनसंयुतः ॥ महिषीगोधनैश्चैवसंकुलंतस्यवेश्मच ॥ २८२॥
कृष्णभक्तिरतोनित्यंपरदाराभिलाषुकः ॥ एकस्मिन्समयेविप्रकृतंकर्मसुदारुणम् ॥ २८३ ॥ देवागारेचयद्द्रव्यंभूषणंपात्रवस्त्रकम् ॥ सर्वं

स्वंचोरितंतेनपापमाचरितंत्विदम् ॥ २८४ ॥ ब्राह्मणस्यसुताश्रेष्ठाहठाच्चैवाऽकरोद्रतिम् ॥ तेनपापानुसारेणदारिद्र्येणप्रपीडितः ॥२८५॥ संहि.
मृतोयमपुरेगत्वानानानरकेषुसंस्थितः ॥ नानायोनौभ्रमन्सोपिमानुषोह्यत्रजायते ॥ २८६ ॥ १ । ३ । ५ । ८ । १३ । १७ । २० ।
३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८३ ॥ ६३ अथनिंदयोगः ॥ मदांधोबाहुजःपूर्वेकान्यकुब्जेऽवसत्पुरा ॥ शौचाचारविहीनश्चमलिनः
कोपसंयुतः ॥ २८७ ॥ पूर्वंह्युपार्जितंद्रव्यंव्ययंकृत्वादिनेदिने ॥ द्यूतमार्गेतदाविप्रवेश्यायांप्रीतिमुद्वहन् ॥ २८८ ॥ एकस्मिन्समयेविप्रत
त्रविप्रःसमागतः ॥ तस्मिन्ग्रामेकथाऽकारिश्रुतासाबाहुजेनवै ॥ २८९ ॥ पूर्वकर्मपरित्यक्त्वाधर्ममार्गेरतःसदा ॥ कालांतरेमृतःसोपिबभ्रु
र्भल्लुकोपिसः ॥ पश्चाद्वैमानुर्षीयोनौचागतोधरणीतले ॥ २९० ॥ १ । ३ । ७ । ९ । १४ । १८ । २२ । २८ वर्षेषुकष्टम् ॥ परमायु
र्वर्षाणि ६९ ॥ ६४ अथनिंदावलीयोगः ॥ कांधारेनगरेपूर्वंब्राह्मणःसर्वभक्षकः ॥ अपेयमपिपीतंचह्यगम्यागमनंकृतम् ॥ २९१ ॥ एकस्मि
न्समयेविप्रब्राह्मणस्यप्रसंगतः ॥ तीर्थावगाहनंकृत्वासभार्य्योपितदानघ ॥ २९२ ॥ नानातीर्थाटनंकृत्वागोदानंवाजिस्वर्णकम् ॥
गयाश्राद्धंततःकृत्वाह्यन्नदानंततःपरम् ॥ २९३ ॥ व्यचरद्बहुतीर्थेषुश्रद्धायुक्तेनचेतसा ॥ पथिचासौमृतस्तत्रपत्नीजातासतीतदा ॥
॥ २९४ ॥ षष्टिवर्षसहस्रांतेमानुषोजायतेऽधुना ॥ गौरांगोमध्यदेहश्चचतुःषष्ट्यब्दजीवनम् ॥ २९५ ॥ ६५ अथनरयोगः ॥ अथकेर
लदेशेवैह्यतिथिश्चतदाऽवसत् ॥ परस्त्रीरमणेधूर्तःपाखण्डाऽऽचरणेरतः ॥ २९६ ॥ एवंनिवसतस्तत्रबहुवर्षगतागतेः ॥ आयुषस्तु
समाप्तित्वात्[illegible]रोगदपीडितः ॥ २९७ ॥ कृमियोनिशतंभुक्त्वानरकेभृशदारुणे ॥ पश्चान्मानुष्यमापन्नोधनधान्यविवर्जितः ॥ पूर्वपापप्र १०६
भावेणचेद[illegible] ॥ २९८ ॥ १ । ३ । ५ । १० । १४ । २० । ३६ वर्षेषु[illegible]ष्टम् ॥ परमायुर्वर्षाणि ६५ ॥ ६६ अथ

नाकयोगः ॥ पुरवैमैथिलेदेवब्राह्मण[illegible]कोविदः ॥ हेमदत्तःसमाख्यातःपत्नीपुत्रसमन्वितः ॥ २९९ ॥ ससद्विद्योपजीवीचद्रव्यस्या
त्पादनेदृढः ॥ एवंनिवसतस्तत्रबहुवर्षगतागतैः ॥ ३०० ॥ एकस्मिन्समयेविप्रस्वगुरुस्तत्रचागतः ॥ कार्य्यार्थंयाचितंद्रव्यंनदत्तापि
वराटिका ॥ ३०१ ॥ निराशश्चगतःसोपिपापमुग्रमुपार्जितम् ॥ सविप्रःपंचतांप्राप्तःपत्नीभूतासतीद्विज ॥ ३०२ ॥ सत्यलोकात्परिभ्रष्टः
षष्टिवर्षसहस्रके ॥ १ । ३ । ५ । ८ । १३ । १५ । २० वर्षेषुकष्टंमृत्युतुल्यं जपदानार्चनेसुखम् ॥ ३०३ ॥ परमायुर्वर्षाणि ९३ ॥ ६७
अथनाकावलीयोगः ॥ अथकुक्कुरदेशेचबाहुजोनिर्दयोवसन् ॥ भारद्वाजइतिख्यातःपत्नीतस्यकलेवरा ॥ ३०४ ॥ मद्यमांसेनजी
वन्सप्रजानांक्लेशदायकः ॥ मृतोयमपुरंगत्वास्थित्वावर्षसहस्रकम् ॥ ततोवैमानुषीयोनौमातृकुक्षेःसमुद्गतः ॥ ३०५ ॥ १ । ३ । ६
९ । १३ । १७ । १९ । २० । २२ । २३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८५ ॥ ६८ अथनाकीवयोगः ॥ आसीज्जन्मांतरेचैववित्तवा
न्वर्णसंकरः ॥ कीकटेहिवसन्सोपिदासकर्मरतःसदा ॥ पत्नीतस्यदुराधर्षापत्युराज्ञानुपालिनी ॥ ३०६ ॥ दत्तानितेनदाननिपर्वस्वपि
चशक्तितः ॥ मरणांतेसतीजातापत्नीतस्यसुकर्मणा ॥ दिव्यवर्षसहस्रांतेपुनरागत्यभूतले ॥ ३०७ ॥ १ । ३ । ५ । ९ । १३ । २० । २४ ।
३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८३ ॥ ६९ अथनैर्ऋतियोगः ॥ कारुण्यपात्रःसचदेवभक्तोलोकेप्रसिद्धःपुरुषोत्तमाख्यः ॥ निव
र्त्तितर्कैःपरिसेव्यमानःशास्त्रस्यवार्त्ताप्रतिवासरेषु ॥ ३०८ ॥ दत्तंचदानंबहुभूमिरत्नंतथाऽश्वधेनुःप्रतिपूर्णिमायाम् ॥ चांद्रायणेकुशलःकंद
भोजीद्विजार्चनंसम्यक्कृतत्रवासः ॥ समध्यदेशेह्यवसच्चनूनंक्षात्रक्रियासाधनतत्परश्च ॥ ३०९ ॥ एकस्मिन्समयेविप्रराजदोषेणवैतदा ॥ सा
ध्वीचस्त्रीगुणातीतातस्यैदंडःप्रदापितः ॥ ३१० ॥ एवंस्वल्पतिथेकालेबाहुजोमृत्युप्राप्नुयात् ॥ पुनरागत्यमेदिन्यांपुण्यपापफलंशृणु ॥ ३११ ॥

गौरस्वरूपोमतिमान्यशस्वीप्रीतिमानपि ॥ विनश्यतिजातपुत्रोदद्रुकुष्टसमन्वितः॥३१२॥१।४।८।११। १७।२६।३१।३७ संहि-
४०।४६ वर्षेमहाऽरिष्टम्॥यदिजीवतितदायुःसप्तषष्टिकम् ॥७० अथथलयोगःप्रकथ्यते॥द्राविडेनगरेपूर्वंब्राह्मणोन्यवसत्तदा॥ हेमदेवइति
ख्यातःपत्नीतस्यचमत्कृतिः ॥ ३१३॥ गंगास्नानायप्रीत्यर्थंदम्पतीचगतौतदा ॥ तत्रपत्नीमृतातस्यचोन्मत्तःसबभूवह॥३१४॥चौरेणा
पिहृतंसर्वंव्याकुलोपिबभूवह॥ इतस्ततश्चविचरन्नुर्व्यांचैवचतुर्दशः ॥ ३१५ ॥ आयुषस्तुसमाप्तित्वान्ममारपथिभूसुरः ॥ स्वर्गांचैवच्यु
तिर्भूत्वामर्त्यलोकेसुखान्वितः ॥ ३१६॥ २।५।९।१४।२०।२९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ७१अथदीर्घयोगः॥ क
श्चिद्वैश्यकुलेपूर्वंदेवनद्याश्चसन्निधौ ॥ क्रयविक्रयकर्त्ताचशंकरेतिचविश्रुतः॥३१७॥शिवसेवाकृतातत्रषोडशैरुपचारकैः ॥ गंगाम्भसातु
वैसम्यग्वैद्यनाथार्चनंकृतम् ॥ ३१८॥ नदत्तंब्राह्मणेदानंनभोज्यंश्राद्धकर्मणि ॥ एवंहिन्यवसत्तत्रबहुवर्षगतागतैः॥ ३१९॥ आयुषस्तुस
माप्तित्वात्समृतोजाह्नवीतटे ॥ इंद्रलोकेऽभवद्वासोह्यपिवर्षसहस्रकम् ॥ ३२०॥ ततःपुण्यक्षयेजातेचागतोधरणीतले॥ इंद्रप्रस्थस्यनिकटे
बाहुजस्यगृहेऽधुना॥ ३२१॥ श्यामारुणश्चह्रस्वश्चदक्षिणांगेसचिह्नितः ॥ क्षिप्रक्रोधीप्रवक्ताचशिवभक्तिदृढश्चसः॥३२२॥ १।२।
८।१३।१७।२०।२५।३१।३७॥ ४५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५॥ कार्त्तिकेधवलेपक्षेचतुर्दश्यांचपंचता ॥ काश्यां
मृत्युवशात्पुत्रपुनर्जन्मनजायते ॥ शावाकारोभवेत्सोपिह्येतत्सत्यंवदाम्यहम् ॥३२३॥ ७२॥ अथदीस्वरयोगःप्रकथ्यते ॥ विंध्याद्रिनि
कटेपूर्वंपादजोन्यवसत्तदा ॥ हिरण्येतिसमाख्यातःपत्नीतस्यवरांगना ॥ ३२४ ॥ गोघृतक्रयविक्रयंप्रत्यहंचतदाकरोत् ॥ एकस्मि १०७
न्समयेविप्रप्रयागेमकरेवसन् ॥ ३२५ ॥ सस्नातोमृगगेभानौमासमेकंनिरंतरम् ॥ सप्राप्यभवनेशीघ्रंकृतवान्कर्मदारुणम् ॥ ३२६॥

मातृघातःकृतंपापंभाविनोर्थस्यगौरवात् ॥ एवंबहौगतेवर्षेतस्यमृत्युर्बभूवह ॥ ३२७ ॥ लक्षवर्षांतरेविप्रनरकान्निःसृतःपुनः ॥ ततोवै
मानुषीयोनौचागतोभूमिमंडले ॥ ३२८ ॥ १ । २ । ५ । ८ । १४ । २० । २९ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७४ ॥ ७३ अथ
दारोहयोगः ॥ अथकेदारदेशेतुबाहुजोधनगर्वितः ॥ प्रतापलंकेश्वरोनामसहसैन्येनराजते ॥ ३२९ ॥ कृत्वावसुन्धराभोगंचोग्रदंडः
प्रतापवान् ॥ एकस्मिन्समयेविप्रपापमाचरत्तिंभृशम् ॥ ३३० ॥ अरातिनासहमैत्रींकृत्वाकार्पण्यसंयुतः ॥ पश्चात्तस्यशिरश्छित्त्वापापमा
चरितंतदा ॥ ३३१ ॥ गतोसौयमलोकेचभुक्त्वानरकजंफलम् ॥ पुनर्वैमानुषीयोनौधूर्तउज्झितसत्क्रियः ॥ राजरोगेणविकलःपूर्वपापस्य
दोषतः ॥ ३३२ ॥ २ । ८ । ११ । १५ । २१ । २४ । २९ । ३१ । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ११० ॥ ७४ अथदीनानाथ
योगः ॥ मथुरानगरीमध्येवैश्यस्त्वेकोपितिष्ठति ॥ महालोभेनसंयुक्तोद्रव्यस्योत्पादनेरतः ॥ ३३३ ॥ नज्ञातिभ्योददौभोज्यमतिथिभ्यो
पिनक्वचित् ॥ गुणीदासेतिविख्यातस्तस्यपत्नीशुभानना ॥ ३३४ ॥ लुब्धस्तथामहाधूर्तोजीवेष्वन्नंप्रदत्तवान् ॥ एकस्मिन्समयेविप्र
नृपेणलुंठितंधनम् ॥ धनशोकान्मृतोवैश्योगतोऽसौयमशासनम् ॥ ३३५ ॥ तिर्यग्योनिशतंभुक्त्वाबहुवर्षसहस्रकम् ॥ पश्चान्मानुष्य
मापन्नोदुःखैरपिसमन्वितः ॥ ३३६ ॥ १ । ३ । ६ । १३ । १७ । २० । २९ । ३४ । ४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८९ ॥ ७५
अथदामोदरयोगः ॥ अग्रजेवैपुरेदेवपादजस्तत्रतिष्ठति ॥ विष्णुनामसदापाठीविष्णुदासस्यसेवकः ॥ ३३७ ॥ गंगादासइतिख्यातस्तस्य
पत्नीप्रभावती ॥ युवतींस्त्रींपरित्यक्त्वागतोऽसौगह्वरेवने ॥ ३३८ ॥ तत्रस्थित्वाजपंकृत्वाराामनामनिरंतरम् ॥ आयुषस्तुसमाप्तित्वात्सशूद्रः
पंचतांगतः ॥ गतोऽसौपरमंस्थानंनंदनेचवनेशुभे ॥ ३३९ ॥ बहुवर्षसहस्राणिभुक्त्वास्वर्गभवंफलम् ॥ ततःपुण्यक्षयेजातेमानुषत्वमिहा

गतः ॥ ३४० ॥ १ । ३ । ५ । ८ । १३ ।१६।२०।२५।२९।३१।३५ । ३९ ॥ एतद्वर्षेमहाकष्टंदैवाज्जीवतिमानवः ॥ प्रायश्चित्तेकृतेविप्र
षष्टिमब्दांश्चजीवति ॥ ३४१ ॥ ७६ अथदालभ्ययोगः ॥ कालिंजरपुरेशुभ्रेतत्रक्षत्रीवसत्यसौ ॥ व्याधरूपीमहाधूर्तोदेवब्राह्मणनिंदकः ॥
॥ ३४२ ॥ प्रत्यहंमृगयांकृत्वामृगमांसेनजीवति ॥ शिवशर्मेतिविख्यातःपत्नीतस्यकुमारिका ॥ ३४३ ॥ कुलटारूपसम्पन्नारूपगर्वेण
गर्विता ॥ नमन्यतेदुराचारादेवंचभूसुरंतथा ॥ ३४४ ॥ तस्यमित्रंद्विजस्त्वेकोवेदविद्यापरायणः ॥ आगतोब्राह्मणस्तत्रमित्रदर्शनलालसः
॥ ३४५ ॥ बहुस्वर्णसमायुक्तआशयातत्रमूढधीः ॥ मासमेकंततःस्थित्वापुनःकाश्यांगतःसवै ॥ ३४६ ॥ स्वर्णसर्वंततोधृत्वामित्रगेहेत
दाद्विज ॥ तत्रकाश्यांमृतःसोपिब्राह्मणोब्रह्मकर्मणा ॥ ३४७ ॥ रतिंकृत्वातदातेनप्रत्यहंभार्य्ययासह ॥ नदत्तंतस्यपुत्रस्यवित्तंकर्मजुगु
प्सितम् ॥ ३४८ ॥ एवंबहुगतेकालेतस्यमृत्युरभूत्पुरा ॥ गतोऽसौनरकेघोरेयमदूतैर्यमाज्ञया ॥ ३४९ ॥ नरकान्निःसृतोजातस्तिर्यग्यो
नौपुनःपुनः ॥ पश्चाद्वैमानुषीयोनौचागतोधरणीतले ॥ ३५० ॥ १ । ३ । ५ । ९ । ११ । १८ । २० । २७ । ३७ वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ८५ ॥ ७७ अथद्रष्टयोगः ॥ कश्चिद्द्विजोमहाभागतथाचर्मण्वतीतटे ॥ केशवेतिपुरेरम्येब्राह्मणःशास्त्रपारगः ॥ ३५१ ॥
महाभिमाननिरतोदुष्कर्माणितुचाचरत् ॥ गुरुनिंदाकृतैर्दोषैर्नरकेभृशदारुणे ॥ ३५२ ॥ निःक्षिप्तोयमदूतैश्चह्यशीत्यब्दसहस्रकम् ॥
पुनर्जन्मपुनर्मृत्युर्जन्ममृत्युः शतंखलु ॥ ३५३ ॥ पश्चाद्वैमानुषीयोनौमातृकुक्षेः समुद्गतः ॥ अधर्मीदीर्घरोगीचव्याकुलश्चसदात्वसौ ॥
॥ ३५४ ॥ १ । २ । ४ । ६ । ८ । १० । १२ । १५ । २० । २५ ॥ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७८ ॥ ७८ अथधनसंज्ञक 
योगः ॥ कान्यकुब्जेशुभेदेशेब्राह्मणोह्यवसत्तदा ॥ पुरेनारायणेतत्रकृषिकर्मरतः सदा ॥ ३५५ ॥ शिवरामइतिख्यातः पत्नीतस्यप्रभा

वती ॥ सुशीलापतिभक्ताचदेवभक्तिरतातथा ॥ ३९६ ॥ गोमहिषीधनधान्यादिक्रयविक्रयतत्परा ॥ कोटिद्रव्यंतथाशुक्रसंचितंब्राह्मणेनवै ॥ ३९७ ॥ पत्नीतस्यसतीजातामर्त्यलोकेचमानुषः॥ बहुद्रव्ययुतोप्यत्रकार्पण्येनविमोहितः॥३९८॥शरीरेमहतीपीडामेहाश्चविविधास्तथा ॥ शांतिंकृत्वाभवेत्सौख्यंसंशयोनात्रभार्गव ॥ ३९९ ॥ १ । ३ । ६ । १२ । २० । २७ । ३५ । वर्षेषुकष्टम्॥परमायुर्वर्षाणि१०० ॥ ७९ अथधमोइयोगः॥ मथुरायाः समीपेचपूर्वस्यांदिशिभार्गव ॥ तत्पुरेगुर्जरोप्येकोबहुगोधनसंकुलः॥३६०॥महिष्योवृषभाश्चैवसंचिताधुर्येणतु ॥ सुदर्शनेतिविख्यातस्तस्यपत्नीस्वभावती ॥ २६१ ॥ नदत्तंपुण्यमार्गेषुब्राह्मणायशुभायच ॥ तृष्णाऽनलेनसंदग्धोमहालोभवशंगतः ॥ ३६२ ॥ तस्यमृत्युरभूत्पश्चादतोवैयममंदिरे ॥ यमदूतैर्महाघोरेनरकेसंकुलेपिच ॥ ३६३ ॥ निक्षिप्तौदम्पतीतत्रमहाकष्टेनमोहितौ ॥ षष्टिवर्षसहस्राणिभुक्त्वानरकयातनाः ॥३६४॥ नरकान्निःसृतोदेवव्याघ्रयोनौप्रजातवान्॥ ततोवैमानुषीयोनौकुलेमहतिजातवान् ॥ पुत्रेणरहितः सौम्यधनधान्यसमाऽऽकुलः ॥ ३६५ ॥ १। ३। ८। १२। २०। २४। वर्षेषुकष्टम्॥परमायुर्वर्षाणि६१॥८०अथधूरणयोगः॥ मथुरापुरतोदेवक्रोशमात्रेतुपश्चिमे ॥ शत्रुघ्नेतिपुरेरम्येप्रकीर्णेगुणिनांगणैः॥ ३६६॥तत्रचैकोऽवसच्छूद्रोधनधान्यसमाकुलः॥ तस्यपुत्रोहरीदासस्तस्यपत्नीसतीशुभा ॥ ३६७ ॥ स्वपत्न्याश्चपरित्यागःकृतस्तेनदुरात्मना ॥ कन्योद्वाहेनकिमपिदत्तंतेनपुरोहिते॥३६८॥ परस्परमभूद्युद्धंदंडेनमुद्गरेणच ॥ सविप्रःपंचतांप्राप्तस्ततःशूद्रोमृतोऽचिरात्॥३६९॥पापाच्चनरकेगत्वातप्तांगारभयानके ॥ बहुवर्षसहस्रांतेपुनरागत्यभूतले ॥ दद्रुकुष्ठेनविकलःपूर्वपापानुसारतः ॥ ३७० ॥ १ । ३ । ५ । ९ । १३ । २० । २७ । ३९वर्षेषुकष्टम्॥परमायुर्वर्षाणि ७० ॥ ८१ अथथलकारयोगः॥मथुरानगरीश्रेष्ठासर्वपापप्रणाशिनी ॥ वसंतिबहवोलोकाःशुचिधर्मपरायणाः॥३७१॥तत्रवैश्योऽवसत्त्वेकोवैश्य

कर्मपरायणः ॥ ऊर्णाकम्बलचर्माणिनानावस्तुगुडादिच ॥ प्रत्यहंविक्रयामासहेमताम्रंघृतंतथा ॥ ३७२ ॥ दम्पतीखलुतौदेवमहालोभेनसं
युतौ॥स्वज्ञातिवणिजायांवैबलादाकर्षितंद्विज॥सर्वस्वंभूषणंवस्त्रमर्द्धरात्रेगृहीतवान्॥३७३॥रतिंकृत्वादुराचाराद्भवनान्निष्कासिताचसा ॥
वैश्योमृत्युवशंप्राप्यकुंभीपाकंचप्राप्तवान्॥दिव्यवर्षसहस्रांतेमानुषोपिततोऽभवत्॥३७४॥१।१०।१५।२०वर्षेषुकष्टम्॥परमायुर्वर्षाणि६६॥
८२ अथधुंधचारीयोगः॥ अथपूर्वंमहाभागपादजोगुणवानपि॥सर्वविद्यानुरक्तश्चकाव्यालंकरणेरतः॥३७५॥दशारण्यस्यनिकटेन्यवसत्परि
वारयुक्॥धर्माधर्मविवेकीचनृपस्याग्रेप्रतिष्ठितः ॥३७६॥ सर्वस्वमददद्चासौसत्पात्रायद्विजायच॥एकस्मिन्समयेविप्रकृतंकर्मचदारुणम् ॥
३७७॥नृपद्रव्यंचोरयित्वाभयेनत्वपलायत॥मार्गेचौरैर्हृतंद्रव्यंसर्वंचैवद्विजोत्तम॥३७८॥चौरहस्तान्मृतःसोपिगतोवैयममंदिरे ॥ इदंजन्म
द्वितीयंतुदुःखेनाऽतिप्रपीडितम् ॥ ३७९ ॥ १ । ३ । ८ । ११ । १५ । १८ । २० । २५ । २९ । ३१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९१ ॥
८३ अथधानुषयोगः ॥ आसीज्जन्मांतरेचैवमाधवोनामब्राह्मणः ॥ पत्नीपुत्रवधूस्तस्यबालरंडातदानघ ॥ ३८० ॥ तेनपापानुसारेण
महानरकेचदारुणे ॥ षष्टिवर्षसहस्रांतेपुनरागत्यभूतले ॥ ३८१ ॥ धूर्तकर्मणिसदानिष्ठःसत्यधर्मपराङ्मुखः ॥ यौवनेपीडयमानश्चमा
सिमासिचहायने ॥ ३८२ ॥ १। २। ४। ८। १२। १६। २० । ३१ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५९ ॥ ८४ अथधवलीयोगः॥
कश्चिद्वैश्यकुलेपूर्वंब्रह्मभक्तोऽतिविश्रुतः ॥ प्रधानंसचवैग्रामेदानेपुण्येसदारतः ॥ ३८३ ॥ एकस्मिन्समयेविप्रदुष्टकर्मकृतंतदा ॥ विप्रस्य
दुहिताभ्रष्टापरपुंसुरताधमा ॥ ३८४ ॥ तस्यास्तुघातनेविप्रसंधानंकथितंतदा ॥ तेनपापानुसारेणमह[illegible]गौ ॥ ततोवैमानुषी
योनौभूत्वापिम्रियतेशिशुः ॥ ३८५ ॥ १ । ४ । ८ । १६ । २४ । ३५ वर्षेषुकष्टम्[illegible] ७२ ॥

८५ अथाग्निम्बुयोगः ॥ अयोध्यायास्तटपूर्वेब्राह्मणोह्यवसत्तदा ॥ स्वकर्मनिरतोधीरस्तथाशक्तेरुपास कोटिद्रव्यंतथाशुक्रसंचितं ऽभवन्मित्रं
वैश्योधनसमन्वितः ॥ ब्राह्मणोपिगतस्तत्रवैश्येनचादरंकृतम् ॥ ३८७ ॥ मासमेकंतदादेववासोवैश्यगृहेऽभवत ॥ वैश्यभार्य्याविशालाक्षी
मृद्वंगीचारुलोचना ॥ ३८८ ॥ प्रीतिराशिवशाच्चैवब्राह्मणोरतिमाचरत् ॥ ब्राह्मणःस्वगृहंगत्वाबहुवर्षगतागतैः ॥ ३८९ ॥ आयुषस्तुसमा
प्तित्वात्सविप्रःपंचतांगतः ॥ पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन ॥ ततश्चमानुषीयोनौसर्वांगेकुष्ठसंयुतः ॥३९०॥ १।४।१५।२५।३०
महत्कष्टंपरमायुर्वर्षाणि ६७ ॥ ८६ अथनेमावलीयोगः ॥ नैमिषारण्यनिकटेबाहुजोन्यवसत्पुरा ॥ दामोदरइतिख्यातःपत्नीतस्यसुलोच
ना ॥ ३९१ ॥ पातिव्रत्यपरानित्यंसत्यासत्यव्रतेरता ॥ पतिःस्त्रीलंपटोधूर्तोधनाढ्योधनगर्वितः ॥ ३९२ ॥ आखेटकेगतःसोपिमृगान्ह
त्वावनांतरे ॥ वनेचसहसैन्येनभुक्तंमांसंविशेषतः ॥३९३॥ सर्पेणैवहतस्तत्रजगामयममंदिरे ॥ भुक्त्वानानाविधान्दुःखान्नरकेभृशदारुणे ॥
कतिवर्षसहस्रांतेमानुषोपिततोऽभवत् ॥ ३९४ ॥ १।३।९।१४।२१।२३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ ८७ अथनांदीयोगः ॥ आं
ध्रदेशेपुरेरम्येवैश्यस्त्वेकोऽवसत्पुरा ॥ दंडदासइतिख्यातःसपत्नीकःसपुत्रकः ॥३९५॥ सर्वसौख्येननिरतःपत्नीतस्यमहाखला ॥ एकस्मि
न्समयेविप्रब्राह्मणस्तत्रचागतः ॥ ३९६ ॥ स्वगृहेस्थाप्यचवैश्योह्यादरंकृतवान्भृशम् ॥ वैश्योददौसुवर्णंचचंद्रग्रस्तेचपर्वणि ॥ ३९७॥ भा
र्ययाचकृतंयुद्धंवैश्येनापिहतातुसा ॥ तेनपापानुसारेणगतोसौयमशासनम् ॥ नानाजन्मनिभूत्वापिततश्चमानुषोऽभवत् ॥ ३९८ ॥१।९।
१८।२१।२२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०२ ॥ ८८ अथनरनारायणयोगः ॥ अथचभारतेदेशेबाहुजोन्यवसत्तदा ॥ धनधान्यसमृ
द्धस्तुदानधर्मरतःसदा ॥ ३९९ ॥ सुरतेतिसमाख्यातःपत्नीतस्यमनोरमा ॥ धर्मशीलागुणाढ्याचपतिसेवापरायणा ॥४००॥ एकस्मिन्स

मयेविप्रसगर्भासाबभूवह ॥ पुष्पवाटिकांततोगत्वासखीभिःपरिवेष्टिता ॥ ४०१ ॥ नारंगीचोरितातत्रगर्भलोभेनवैतया ॥ बाहुजेनकृतोय
स्माद्रोगोमृत्वातुगर्भिणी ॥ ४०२ ॥ ततोयमपुरेप्राप्तौदंपतीचतदानघ ॥ सोत्रजन्मनिपापेनव्रणरोगेणकष्टितः ॥ ४०३॥१।३।५।७।१३।
२०।२५वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८६ ॥ ८९ अथनिम्नाधरयोगः ॥ निम्नाधरेषुयोजातःपूर्वजन्मनिब्राह्मणः ॥ जालंधरस्यनिकटेन्य
वसत्परिवारयुक् ॥ ४०४ ॥ धनधान्यसमायुक्तःकृषिकर्मोद्यमेरतः ॥ परदाराभिगमनंसततंकारयेत्ततः ॥ ४०५ ॥ एकस्मिन्समयेविप्रकृ
तवान्कर्मदारुणम् ॥ दासपुत्रवधोकारिह्यन्यायेनतदानघ ॥ ४०६ ॥ एवंबहौगतेकालेतस्यमृत्युरभूत्पुरा ॥ ततश्चनरकेगत्वाअपिवर्षसहस्र
कम् ॥ पुनर्वैमानुषीयोनौचागतोभूमिमंडले ॥ ४०७॥१।४।८।१३।१८।२०।२७।३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ ९० अथना
रंजीयोगः ॥ रंगकारोऽभवत्पूर्वमयोध्यानिकटेवसन् ॥ हनुमंतइतिख्यातःपत्नीतस्यकुमोदिनी ॥ ४०८ ॥ रंजयेत्सर्ववस्त्राणितत्सकाशा
त्कृतंधनम् ॥ एकस्मिन्समयेविप्रकृतवान्कर्मदारुणम् ॥ ४०९ ॥ भगिन्यासहकृतोभोगःपापमाचरितंत्विदम् ॥ पापाच्चनरकेगत्वातिर्य्य
ग्योनिंपुनःपुनः ॥ ४१० ॥ पश्चान्मानुष्यमापन्नःकीकटेहिद्विजोत्तमः ॥ प्रथमेपंचमेवर्षेद्वादशेषोडशेपिवा ॥ ४११ ॥ आविंशेमरणप्राय
गदयुक्तःसजायते ॥ परमायुःशताब्दंचतस्यांतेमरणंभवेत् ॥ ४१२ ॥ ९१ ॥ अथनाचारीयोगः ॥ आसीज्जन्मांतरेचैवब्राह्मणःशास्त्रवर्जि
तः ॥ असीजीवीबभूवापिधर्मकर्मनज्ञातवान् ॥ ४१३ ॥ म्लेच्छासनेसमासीनोम्लेच्छैःसहसदारतः ॥ परदाराभिगमनःपरनिंदापराय
णः ॥ ४१४ ॥ कालसर्पेणनिहतोब्राह्मणःपंचतांगतः ॥ महाभयसमाकीर्णोबभूवप्रेत्यनारके ॥ षष्टिवर्षसहस्रांतेचागतोधरणीतले॥४१५॥
१।५।९।१५।२०।२४।३१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ९१ अथनवनीतयोगः ॥ आसीज्जन्मांतरेचैववाराणस्यांच

एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् । २६७ ॥ बाहुजस्यप्रसंगेनकृतंकर्मजुगुप्सितम् ॥ परदाराभिगमनंपरद्वेषंतथाऽकरोत् ॥
॥ २६८ ॥ आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ ततोवैमानुषीयोनौमर्त्यलोकेसमागतः ॥ ३६९ ॥ गोधूमाकारवद्देहोदक्षेभागे
प्रचिह्नितः ॥ १ । ३ । ५ । ८ । १० । १३ । १६ । २० । २४ । ३० । ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६० ॥ ८८ अथमालती
योगः ॥ आसीज्जन्मांतरेचैवकीचकोनामब्राह्मणः ॥ सर्वज्ञःसुगतोबुद्धःसदाचारसमन्वितः ॥ ३७० ॥ पठनेपाठनेव्यग्रःपरोपकरणेरतः ॥
एकस्मिन्समयेविप्रजगामगिरिगह्वरे ॥ ३७१ ॥ तत्रस्थित्वासशिष्येणशिवस्याराधनंकृतम् ॥ तीर्थावगाहनंकृत्वाकथांकृत्वाविशेषतः ॥
॥ ३७२ ॥ पारायणसंहितातुश्रीमद्भागवतस्यच ॥ एकदाचातिक्रोधेनस्वशिष्यश्चप्रताडितः ॥ ३७३ ॥ समृतस्तेनदुःखेनपापमाचरि
तंत्विदम् ॥ सविप्रःपंचतांप्राप्तःपुनर्भूत्वाचमानुषः ॥ धर्मवान्प्रीतिमांश्चैवप्रतिवक्तागुणाकरः ॥ ३७४ ॥ १ । ४ । ८ । १३ । १८ । २० ।
२८ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९२ ॥ ८० अथमलसंज्ञकयोगः ॥ कश्चिद्वैश्यकुलेपूर्वंसोरठेनगरेवसन् ॥ प्रपंचाधिकरणेव्य
ग्रश्चौरवृत्तिरतःसदा ॥ ३७५ ॥ एकस्मिन्समयेविप्रदुष्कर्मकृतवांस्तदा ॥ भागिनेयस्ययद्द्रव्यंतत्सर्वंचोरितंबलात् ॥ ३७६ ॥ समृत्वाह्य
र्शोरोगेणपापीचद्विजसत्तम ॥ यमदूतैःपीडितोऽभूद्बहुवर्षसहस्रकम् ॥ ३७७ ॥ पुनरागत्यमेदिन्यांमानुषत्वंगतस्ततः ॥ क्रूरत्वेचसदाव्य
ग्रःपाखंडाचरणेरतः ॥ पूर्वपापाऽनुसारेणभूत्वापिम्रियतेशिशुः ॥ ३७८ ॥ ९१ अथमकरध्वजयोगः ॥ आसीत्पूर्वंतुयानारीब्राह्मणस्यव
रांगना ॥ शौचाचाररताभव्यादेवतातिथिपूजका ॥ ३७९ ॥ पाकेचकुशलादक्षागणेशोमाप्रपूजिका ॥ वैशाखेकार्तिकेमाघेसास्नाताविम
लेजले ॥ ३८० ॥ पतिस्तस्यामहाकामीपरस्त्रीरतिलम्पटः ॥ कृतस्तयापतित्यागोव्रतंचान्द्रायणंकृतम् ॥३८१॥ मृत्वाव्रतान्तेसानारी

गतास्वर्गंतदाऽनघ ॥ पुनरागत्यमेदिन्यामांत्रवेंद्येसमुद्भता ॥ पतित्यागनकात्पापात्पतिंनालभतद्विज ॥ ३८२॥१।६।१२।१५। २०।२८।
३१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८५ ॥ ९२ अथमहनयोगः ॥ पूर्वजन्मनियानारीचांगिरादेशवासिनी ॥ सावित्रीसातुविख्यातारूप
यौवनसंयुता ॥ ३८३ ॥ कामेनकृच्छ्राद्दग्धासारतिमिच्छतिसर्वदा ॥ एकस्मिन्समयेदेवकृतंकर्मातिदारुणम् ॥ ३८४ ॥ चर्मकार
स्यसंगात्तुपापमाचरितंतदा ॥ तेनपापेनभोविप्रनरकेतुगताखलु ॥ ३८५ ॥ षष्टिवर्षसहस्रांतेचागताधरणीतले ॥ यौवनेतुपतिंलब्ध्वाशी
घ्रंतुविधवाऽभवत् ॥ ३८६ ॥ परमायुर्वर्षाणि ५० ॥ ९३ अथमोक्षयोगः ॥ आसीज्जन्मांतरेचैवब्राह्मजावंगदेशके ॥ दुर्भगाद्रोहसंयु
क्तापरजाररतासदा ॥ ३८७ ॥ एकस्मिन्समयेविप्रगंगासागरसंगमे ॥ सागतातत्रभोविप्रस्थित्वाचपरिवारयुक् ॥ ३८८ ॥ तत्रभाविब
लात्पुत्रसामृताज्वरपीडिता ॥ विमानाग्र्येचसास्थित्वागतास्वर्गंद्विजोत्तम ॥ ३८९ ॥ पुनरागत्यमेदिन्यांसुंदरीविमलेकुले ॥ पतिवांछास
दातस्याःपतिस्तस्यामहाभ्रमी ॥ ३९० ॥ १।२।८। १३ । १७ । २० । २५ वर्षेषुकष्टम्॥ परमायुर्वर्षाणि ६१ ॥ ९४ अथब्राट
योगः ॥ आसीत्पूर्वभवेकश्चिद्विराटेद्विजसत्तमः ॥ विद्याऽभ्यासविहीनश्चकृषिकर्मरतःसदा ॥ ३९१ ॥ स्वल्पवित्तोबहुत्यागीबन्धुमा
न्यउदारधीः ॥ स्ववर्णधर्मनिरतोऽतिथीनांपूजनेरतः ॥ ३९२ ॥ अथतस्यगृहेकश्चिद्द्विजःस्थापितवान्धनम् ॥ नदत्तंतत्पुनर्लोभाद्भुक्तं
पत्न्यासहद्विज ॥ ॥ ३९३ ॥ गत्वाधर्मपुरंदैवाच्छुभंतुयदिवाऽशुभम् ॥ ३९४ ॥ फलंभुक्त्वाऽधुनाजातोभूत्वापिम्रियतेशिशुः ॥ ३९५ ॥
१।३।४।८।१३।१७।२० एषुवर्षेषुकष्टम् ॥ मृत्युः ३७ ॥ ९५ अथबोधयोगः ॥ खसदेशेनरोजातःपरमोदारमानसः ॥ दयार्द्र
स्फुटवक्ताचपरमैश्वर्यसंयुतः ॥ ३९६ ॥ एकस्मिन्समयेविप्रब्राह्मणश्चातिदुर्बलः ॥ आगतस्तत्रभोविप्रपरिवारेणसंयुतः ॥ ३९७ ॥
[illegible] ॥ [illegible]प्रकाऽग्रांतिपःमहरिद्वारेततोगतः ॥ ३९८ ॥ समत्वातत्रचखलजगामपरमंपदम् ॥ मन्व

दृष्ट्वातुबाहुजस्तस्मैसर्वस्वंचददौतदा ॥ [illegible] ॥ ३९८ ॥ [illegible]
न्तरान्तरेविप्रश्चागतोभूमिमंडले ॥ ३९९ ॥ गौरांगःसुकुमारश्चदाताभोक्तादयाकरः॥४००॥३।६।११।१५।२०। २८ एषुवर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ७० ॥ ९६ अथबेधकयोगः ॥ कुरङ्गदेशेपरमेपवित्रेबभूवविप्रोद्विजदेवभक्तः ॥ क्षात्रश्चधर्मिष्ठउदारधीश्चसततपरोदेवतारा
धनेच ॥ ४०१ ॥ यज्ञान्बहुविधान्कृत्वादानानिविविधानिच॥त्यक्त्वाराज्यंवनंगत्वाचचारदुस्तरंतपः ॥ ४०२॥ सराजापंचतांप्राप्यस्वर्ग
वासीबभूवह॥अत्रजन्मनिविप्रोऽसौसर्वसम्पद्युतोदृढः ॥ ४०३ ॥ १।३।९।१०।१५।१७।२२।२८वर्षेषुकष्टम्॥परमायुर्वर्षाणि ८० ॥
९७ अथफलाशनयोगः ॥ विराटदेशेद्विजपूर्वकालेगोविंदनामासतुविद्ययायुतः ॥ पौराणिकीवृत्तियुतोप्युदारधीर्द्रव्याणितेनाऽपिहिसं
चितानि ॥ ४०४ ॥ एकदातुकृतंपापंद्विजपुत्र्यांरतिःकृता ॥ कालेनाल्पेनविप्रोऽसौमृत्वायातोयमालयम ॥ ४०५ ॥ ततआगत्य
भूंपृष्ठेमानुषःसुंदरोऽधुना ॥ धनीमानीमहाप्राज्ञःसर्वसौख्यसमन्वितः ॥ ४०६ ॥ २।११।१५।२४।३१।३९वर्षेषुकष्टम्॥परमायुर्वर्षाणि
७० ॥ ९८ अथफल्गुयोगः ॥ कश्चिद्विप्रोमहासाधुश्चारुवर्णःप्रतापवान् ॥ आचारकुलधर्मज्ञोदेवताद्विजवत्सलः ॥ संयुक्तोवातपित्ता
भ्यांकिंचिद्वित्तसमन्वितः ॥ तस्यभार्यासदाचाराकृच्छ्रव्रतपरायणा ॥ ४०७ ॥ पतिभक्तापतिप्राणाऽतिथीनांपूजनेरता॥सात्यक्तातेनवि
प्रेणपापमाचरितंत्विदम् ॥ ४०८ ॥ मृत्वाभुक्त्वातुनरकमागतश्चधरातले ॥ भार्यासुखविहीनश्चसर्वांगेषुचकष्टितः ॥ ४०९ ॥ २ । १२ ।
१५ । २० वर्षेषुकष्टम् ॥ ५५ वर्षेमृत्युः ॥ ९९ अथफेत्कारीयोगः॥पूर्वजन्मनियानारीबाहुजस्यतदाऽनघ ॥ देशेचदक्षिणेचैवपितातस्य
नराधिप ॥ ४१० ॥ गताश्वशुरगेहेसाबहुवर्षगतागतैः ॥ तत्रगत्वापतिंचैवश्वशुरंद्वेष्टिनित्यशः ॥ ४११ ॥ दम्पतीह्येकदावादंकृत्वाचै

वपरस्परम् ॥ आज्ञादानंविनैवाऽसौगताचपितृवेश्मनि ॥ ४१२ ॥ कालान्तरेतुमृत्वासागृहगोधाबभूवह ॥ इदंजन्मतृतीयंतुमध्यदेशे
समुद्भवः ॥ ४१३ ॥ ३ । ४ । ८ । १६ । २२ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६० ॥ १०० अथभारद्वाजीयोगः॥ कोंकणेन्यवस
त्पूर्वंब्राह्मणोदक्षिणेतटे ॥ सागरस्याग्निहोत्रंचकृतवान्सर्वदाखलु ॥ ४१४ ॥ पत्नीतस्यमृतातेनयज्ञभ्रष्टोबभूवह॥सविप्रःशोकसंतप्तोदंडी
खलुबभूवह ॥ ४१५ ॥ दंडिनापिकृतंपापंकामलोभेनवैतदा ॥ स्वशिष्यस्यगुदभ्रंशःकृतस्तेनतदाद्विज ॥ ४१६ ॥ मृत्वातुकुम्भीपाकंस
भुक्त्वावर्षसहस्रकम् ॥ ततोजातोधरापृष्ठेमानुषोव्याधिपीडितः ॥ ४१७ ॥ १० । २० । २२ । ३० । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि६०॥
१०१अथभोगीयोगः ॥ विंध्याद्रिनिकटेपूर्वंब्राह्मणोन्यवसत्पुरा ॥ माहेश्वरइतिख्यातोमूर्खश्चातिदुरासदः॥४१८॥ परदाराऽभिलाषी
चपरकार्यविनाशकः ॥ शुकंतुपालयित्वासपाठितोबहुयत्नतः ॥ ४१९ ॥ तेनपुण्येनचैवासौपितृलोकंतदागतः ॥ पितृलोकाद्विहीनश्च
मर्त्यलोकेऽपिमानुषः ॥ ४२० ॥ दयाधर्मविहीनश्चपीडचमानकलेवरः॥१।८।१६।२५एषुवर्षेष्वतिरुजावर्षेसप्ततितमेमृतिः७० ॥४२१॥
१०२ अथभोगकयोगः ॥ पूर्वंपांचालदेशेतुब्राह्मणोवेदपाठकः ॥ संतुष्टश्चविवेकीचदयाधर्मपरायणः ॥ ४२२ ॥ पत्नीतस्यसुशीला
चपातिव्रत्यपरायणा ॥ मन्तुंविनैवसात्यक्ताब्राह्मणेनाऽतिकोपतः ॥ ४२३ ॥ अनशनंतुव्रतंकृत्वामृत्वास्वर्गंगताचसा॥ कालान्तरेतुविप्रो
पिमृत्वायातोयमालयम् ॥ ४२४ ॥ तत्रभुक्त्वामहादुःखंचागतोधरणीतले ॥ गौरांगोमध्यदेहश्चभार्यादुःखेनदुःखितः॥४२५॥५ । ७ ।
१० । १५ एषुवर्षेषुमहाकष्टम् ७० सप्ततिवार्षिकंपरमायुः ॥ १०३ अथभर्दुलयोगः ॥ भर्दुलेचनरोजातःपूर्वंजन्मनिपादजः ॥ कृषि
कर्मरतश्चासौगोधनेनापिसंयुतः ॥ ४२६ ॥ एकस्मिन्समयेविप्रवृषश्चताडितोभृशम् ॥ तेनपापेनमृत्वाऽसौह्यसिपत्रेप्रताडितः ॥ ४२७ ॥

एवंभुक्त्वातुनरकंचागतोभूतलेद्विज ॥ दारिद्र्येणप्रपीडयश्चहस्तेनटुंटकश्वसः ॥ ४२८ ॥ १० । १६ । १८ । २५ वर्षेषुपीडा ॥ परमायुर्व र्षाणि४० ॥१०४ अथमांडवीयोगः ॥ पूर्वकर्णाटकेचैववैश्यश्चद्विजसेवकः ॥ दानशीलोदयालुश्चस्वधर्मेनिरतःसदा ॥४२९॥ एकदात्वति थिश्चाऽगाद्भोजनंयाचितंतदा ॥ क्रोधाऽऽतुरेणतुतदानान्नंदत्तंतुभिक्षवे ॥ ४३० ॥ शापंदत्त्वातुगतवानतिथिश्चनिराशकः ॥ स्वल्पेनैवतु कालेनधनंयातंहिसंक्षयम् ॥४३१॥ धनशोकेनमृत्वासदुःखंभुक्त्वातुनारके ॥ आगत्यभूतलेविप्रबभ्रामचगृहेगृहे ॥ ४३२ ॥ ९ । १५।१६ एषुवर्षेषुमहाकष्टम् ॥ परमायुर्वर्षाणि ५०॥१०५ अथमुर्गलायोगः ॥चोलदेशेऽभवत्पूर्वंबाहुजःपरदर्पहा॥शिवभक्तश्चधर्मिष्ठःप्रजापालनत त्परः ॥ ४३३ ॥ अदंड्यापिसगर्भाचब्राह्मणीताडितैकदा ॥ यातेकालेतुनृपतिःस्वर्गवासीबभूवह ॥ ४३४ ॥ ततश्चागत्यनृपतिर्म ण्डलेशोदयालुकः ॥ पूर्वपापेननृपतेःसगर्भामहिषीमृता ॥४३५ ॥ ११ । १६ । १८ एषुवर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ १०६ अथमानन्दयोगः ॥ मानन्देचनरोजातोगौडदेशेपुराद्विज॥ ब्राह्मणःशिवभक्तश्चप्रदोषव्रतपालकः॥४३६॥शिवरात्रिव्रतंकृत्वाजागर णंकृतवान्नहि॥तेनपापेनविप्रोऽसौदारिद्र्येणप्रपीडितः॥४३७॥मृतोगत्वातुकैलासमागतोधरणीतले॥ धनधान्येनसंयुक्तःपुत्रपौत्रसमन्वितः ॥ ४३८ ॥ १५ । २५ । ३० वर्षेषुकष्टम्॥ परमायुर्वर्षाणि७०॥१०७अथमर्द्धयोगः॥मर्द्धयोगेनरोजातःपूर्वजन्मनिभिल्लकः॥घातिताब हवोजीवास्तदाचद्विजसत्तम ॥४३९॥ मृत्वाभुक्त्वामहाघोरंनरकंत्वत्रचागतः ॥ श्यामांगोह्रस्वदेहश्चसर्वेष्वंगेषुपीडितः ॥४४०॥ म्रियन्ते शिशवोजाताजाताश्चैवद्विजोत्तम ॥ द्वादशेषोडशेवर्षेमहारोगैःप्रपीडितः ॥ ४४१ ॥ परमायुर्वर्षाणि ५० ॥ अथमंजिष्ठयोगः १० ॥ मंजिष्ठ योगेयोजातोबाहुजःपूर्वजन्मनि ॥ सर्वक्रियापरिभ्रष्टःप्रजापीडनतत्परः ॥ ४४२॥ मद्यपानेषुव्यग्रश्चमृगयाव्यसनेरतः ॥ यातेत्वल्पेहिका

लेतुबाहुजःपंचतांगतः ॥ ४४३ ॥ भुक्त्वातुनरकंघोरमागतोधरणीतले ॥ सर्वैःसुखैर्विहीनश्चसंततेरहितश्चसः॥४४४॥ १५ । २० । २२ एषुवर्षेषुमहाकष्टम् ॥ ५० वर्षेमृत्युः ॥इतिश्रीभृगुसंहितायांपवर्गयोगकथनंनामाष्टमंप्रकरणंसमाप्तम् ॥८॥ १ अथयवर्गकयोगः ॥ आसीज्जन्मनियानारीब्राह्मणस्यपतिव्रता ॥ कृच्छ्रव्रतरताचोग्रासुशीलाधर्मपालिनी १॥नपुंसकःपतिस्तस्याःशिवस्यस्मरणेरतः॥कृतानितेनदानानिमहापर्वणितदाऽनघ॥२॥पतिर्मृत्युवशंयातःसाभूताचसतीतदा॥ गतासापरमंस्थानंयत्सुरैरपिदुर्लभम्॥३॥पुनरागत्यमेदिन्यांकुलेमहतिचाधुना॥पतिपुत्रसमायुक्ताधनधान्यसमन्विता॥४॥ १।५।८।१४।२०।वर्षेषुकष्टम्॥परमायुर्वर्षाणि ७० ॥ २अथयलवालाद्रियोगः॥ कश्चित्क्षात्रकुलेपूर्वंपंपायादक्षिणेतटे॥भानुसिंहःसमाख्यातःपत्नीतस्यदुरासदा ॥ ५ ॥ बाहुजेनप्रहर्षेणगोदानंबहुकारितम् ॥ ब्राह्मणेभ्योददौक्षेत्रंस्वर्णदत्त्वाततःपरम् ॥ तीर्थावगाहनंकृत्वाबहुवर्षंतथानघ ॥ ६ ॥ स्वदेशेपिमृतःसोपिगतइंद्रपुरंप्रति ॥ षष्टिवर्षसहस्राणिभुक्त्वाचस्वर्गजंफलम् ॥ ७ ॥ ततोवैमानुषीयोनौधनधान्यसमन्वितः ॥ पूर्वपत्नीभवेच्चात्रसर्वदाकष्टदायिनी ॥ ८॥ १।३।८।१४।१८।२०।२७ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ३ अथयजमोदायोगः ॥ प्रयागेन्यवसत्पूर्वंचंद्रसेनिश्चब्राह्मणः॥ सर्वकर्मविधाताचब्रह्मण्यपरायणः ॥ ९ ॥ शिवार्चनंकृतंसम्यग्गोशालाद्विजवेश्मच ॥ तेनपुण्यप्रभावेणअत्रजन्मनिधनेश्वरः ॥१०॥ १ । ३ । ८। १२। १५।१७ । २० । ३४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ४ अथराजयोगः ॥ कालिंदीनिकटेपूर्वंब्राह्मणोवेदपारगः ॥ प्रयागेचागमत्सोपितत्रस्थित्वाविशेषतः ॥ ११ ॥ सत्पात्रायविधिज्ञायदानंदत्त्वासहर्षितः ॥ गोदानमंत्रमेरुंचदत्तंतेनविशेषतः ॥ १२ ॥ एकस्मिन्समयेविप्रकृतंकर्माऽतिदारुणम् ॥ कामलोभेनवैतत्रपरभार्य्यागमनंकृतम् ॥ १३ ॥ तेनपापानुसारेणभुक्त्वानरकजंफलम् ॥

पुनर्वैमानुषोभूत्वागंगायादक्षिणेतटे ॥ १४ ॥ आजन्मनोधनंधान्यंकन्याश्चबहवोद्विज ॥ प्रथमेपंचमेवर्षेद्वादशेचैवषोडशे ॥ १५ ॥
द्वाविंशेत्रिंशवर्षेवापंचत्वंसमवाप्नुयात् ॥ पुनर्जन्मभवेत्तस्यनात्रभार्गवसंशयः ॥ १६ ॥ ५ अथरनाग्रयोगः ॥ आसीज्जन्मांतरे
चैवब्राह्मणःशक्तिपूजकः ॥ ,देशेहिमैथिलेचैववन्यवसत्पारिवारयुक् ॥ १७ ॥ वीरेश्वरसमाख्यातः पत्नीतस्यचमत्कृतिः ॥ व्रतपूजोप
चरणेसमर्थश्चसदाऽनघ ॥ १८ ॥ एकस्मिन्समयेविप्रवैरभावेनब्राह्मणः ॥ मारणोच्चाटनंकृत्वानाममात्रेणभोसुत ॥ १९ ॥ उन्मुक्तिकरणं
विप्रकृत्वातेनविशेषतः ॥ अथकालेगतेविप्रसमृत्वानरकेगतः ॥ ततोवैमानुषीयोनौमर्त्यलोकेसमागतः ॥ २० ॥ १ । ८ । १६ । २० ।
२५ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ ६ अथराजीवयोगः ॥ कश्चित्तुबाहुजोजातोदशारण्येतदानघ ॥ कृतानिपुण्यदानानिब्राह्म
णाभोजिताभृशम् ॥ २१ ॥ एकस्मिन्समयेविप्रमित्रद्रोहमथाकरोत् ॥ तेनपापानुसारेणनरकंगतवान्द्विजः ॥ २२ ॥ बहुवर्षसहस्रांते
मानुषोपिततोऽधुना ॥ ईषद्गौरोप्युदारश्चकिंचिद्वित्तसमन्वितः ॥ २३ ॥ विद्याविनयसम्पन्नः स्वक्रियानैष्ठिकःसच ॥ २४ ॥ १ ।२।३।५
७। ११ । १६ । २० । २४ । ३० । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० ॥ ७ अथरामयोगः ॥ पूर्वजन्मनिक्षात्रस्तुकीकटेहितदाऽ
वसत् ॥ धनधान्यसमृद्धस्तुबहुपृथ्वीसमन्वितः ॥ २५ ॥ भागिनेयःसमायातोमहाबलपराक्रमी ॥ क्वचित्कालवशंयातः कृत्वायुद्धंपर
स्परम् ॥ २६ ॥ भागिनेयस्यचैतेनखड्गेनच्छेदितंशिरः ॥ यमलोकेगतःसोथाशीतिवर्षसहस्रकम् ॥ ततोवैमानुषीयोनौराजरोगेणक
र्षितः ॥ २७ ॥ १ । ३ । ५ । ८ । १६ । २२ । २८ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०५ ॥ ८ अथराघवयोगः ॥ भद्राक्षेनगरे
पूर्वंविष्णुदासेतिवैश्यजः ॥ पाखंडाचरणेनिष्ठआत्मनाविनियोजितः ॥ २८ ॥ मित्रद्रोहःकृतस्तेनतथाविप्रंजघानह ॥ धनहीनोथवारोगी

सुखमध्येह्युदासत ॥ २९ ॥ अथवासंततेश्चिंताजायतेनात्रसंशयः ॥ कार्य्यहानिःप्रजायेतराजद्वारेव्यथाभवेत् ॥ ३० ॥ गोदानमश्वदानंच राजतंचहिरण्यकम् ॥ कृतेदानार्चनेसौख्यंजायतेभृगुनंदन ॥ ३१ ॥ तीर्थवासेकृतेतस्यपुत्रोभवतिनान्यथा ॥ चांद्रायणव्रतंकुर्य्यात्सर्वेरो गोपशांतये ॥ ३२ ॥ १ । ३ । ५ । ८।१२।१७।२०।३०।३२।३६।४०।४१। वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६५ ॥ ९ अथराटकयोगः ॥ चंपारण्येनरःपूर्वंबाहुजःशिवभक्तिमान् ॥ ब्राह्मणानांकृतासेनैकादश्याश्चव्रतंतथा ॥ ३३ ॥ एवंनिवसतस्तत्रबहुवर्षगतागतैः ॥ अरातेश्च विघातार्थंसंधानंचकृतंद्विज ॥ ३४ ॥ तेनपापानुसारेणचात्रजन्मनिपीडितः ॥ रोगाश्चविविधाजातायौवनेपूर्वकर्मणा ॥ ३५ ॥ १।३।८ ११ । १६ । २० । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६८॥ १० अथराडयोगः ॥ आसीज्जन्मांतरेचैवपादजोवंगदेशके ॥ कृषिकर्मोद्यमे व्यग्रोधान्यराशिःकृतोभृशम् ॥ ३६ ॥ एकस्मिन्समयेविप्रहलंचवृषभेवहन् ॥ लगुडैस्ताडितोविप्रसमृतःस्वेनकर्मणा ॥ तेनदुष्टेनभो विप्रपापमाचरितंत्विदम् ॥३७॥ पादजो भास्करेर्लोकंगतोतियमपीडितः ॥ रौरवाचविनिःसृत्यमानुषोपिततोऽभवत् ॥ ३८ ॥ षोडशा ब्देऽतिकष्टंचचतुर्विंशेततःपरम् ॥ षष्टिवर्षांतरेमृत्युर्जायतेनात्रसंशयः ॥ ३९ ॥ ११ अथरीतुलंसकयोगः ॥ अथकेदारदेशेतुब्राह्मणःशक्ति पूजकः ॥ हृदयेतिसमाख्यातःपत्नीतस्यसुशीलिका ॥ ४० ॥ शांतःशुद्धःसमःस्वच्छोनिश्छलीपापवर्जितः ॥ एकस्मिन्समयेविप्रअज्ञाने नविमोहितः ॥ ४१ ॥ सम्बंधिनोधनंनीत्वातस्मैकन्यासमर्पिता ॥ तेनपापानुसारेणभुक्काभोगांश्चशाश्वतान् ॥ ४२ ॥ पुण्याच्च मातृषलोकंमध्यदेशंसमागतः ॥ ४३ ॥ १ । ४ । ६ । ८ । ११ । १५ । १९ । २० । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५७॥१२ अथ [illegible] ॥ जयापत्तनकेविप्रचोलदेशेद्विजोपिसः ॥ तस्यपत्नीमहाशुभ्राकामस्येवप्रियायथा ॥ ४४ ॥ परपुंसिरताविप्रपापानि

संहि- १२

कृतवत्यसौ ॥ तत्सकाशाच्चभोविप्रबभूवधनवत्यपि ॥ ४५ ॥ किंचित्पुण्यार्जनंकृत्वामृत्वायमपुरेगतः ॥ तिर्यग्योनिसमुत्पन्नःकीटभृंगवि
हारवान् ॥ पश्चान्मानुष्यमापन्नश्चात्रदेशेऽधुनानघ ॥ ४६ ॥२।४।६।१०।१३।१६।२०।२८।३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि७७॥ १३
अथरोमावलियोगः ॥ मैथिलेनगरेपूर्वंब्राह्मणःशास्त्रकोविदः ॥ असद्व्यापीदुराधर्षःपरपीडननिंदकः ॥ ४७ ॥ अर्भकान्पाठयेत्तत्रप्राप्तिर्भू
पानुकम्पया ॥ सविप्रःपंचतांप्राप्तः पापात्पापफलंभृशम् ॥ ४८ ॥ पुण्यात्पुण्यफलंभुक्त्वाधरण्यांसौख्यसंयुतः ॥ प्रथमेब्देतृतीयेचह्यष्टमेच
प्रपीडितः ॥ ४९ ॥ षोडशेविंशवर्षेचमहाकष्टेनकष्टितः ॥ परमायुर्वर्षाणि ७१ ॥ १४ अथरोशनयोगः ॥ यामुनेनगरेपूर्ववैश्योनामज
नार्दनः ॥ क्रयविक्रयकर्ताचद्रव्यस्योत्पादनेरतः ॥ ५० ॥ पत्नीतस्यमहासाध्वीगृहकर्मोद्यमेरता ॥ एकस्मिन्समयेविप्रकृतंकर्मचदारुण
म् ॥ ५१ ॥ भ्रातुर्वधात्कृतंपापंद्रव्यलुब्धेनचेतसा ॥ समृत्वापापभागीचयमलोकेतदागतः ॥ ५२ ॥ रौरवेनरकेचैवप्रक्षिप्तोयमदूतकैः
॥ ५३ ॥ तिर्य्यग्योनिसमुत्पन्नोवारंवारंधरातले ॥ इदंद्वितीयंजन्मस्याद्धनपुत्रविवर्जितः ॥ ५४ ॥ १।२।४।५।७।९।१२।१६।२०। २५।
३०।३६।४४। वर्षेष्वेतेषुकष्टंस्यात्षष्टिवर्षाणिजीवति ॥ १५ अथरत्यायोगः ॥ पूर्ववनोत्तरेवासोब्राह्मणोधनवानपि ॥ शिवसेवारतस्त
त्रब्राह्मणानांप्रतोषकः ॥ ५५ ॥ एकस्मिन्समयेविप्रवनंदग्धंदवाग्निना ॥ तेनपापानुसारेणचेदानींकष्टसंयुतः ॥ ५६ ॥ १।३। ९ । १४।
१७।२१।२६।३१।३६।४०वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६१ ॥ १६ अथरोपणयोगः ॥ कालिंदीकूलकुंजेनिवसतिरुचयोमाथुरीयोषि
तश्चतत्रैकोवैश्यसूनुःशिवपदनिलयोनिर्विकारोबलिष्ठः ॥ नानारत्नोपशोभीरविरिवमणिमान्शांतचित्तोऽतिभक्तःपत्नीतस्यातिदुष्टापरपु
रुषरतानंचलासुन्दरीसा ॥ ५७ ॥ स्वपत्युर्वंचिकाभ्रष्टाकामदग्धादुरासदा ॥ ५८ ॥ एकस्मिन्समयेविप्रदृष्ट्वातांतुसकोपतः ॥ मुष्टिकाहन

नंकृत्वासामृताकमलानना ॥ ५९ ॥ स्त्रीहत्यापापदोषे णचात्रजातोऽन्यथाकुलः ॥ सर्वथादुःखदारिद्र्यंपुत्रपीडातथाऽनघ ॥ ६० ॥ संहि.
१ । ३ । ५ । ८ । १३ । १५ । १७ । २१ । ३१ । ४० एतद्वर्षेषुमहाकष्टम् ॥ परमायुर्वर्षाणि ७४ ॥ १७ अथरोखायोगः ॥ अथका
लञ्जरेदेशेबाहुजःसत्यधार्मिकः ॥ पत्नीमनोहरातस्यचंद्रकांतिसमप्रभा ॥ ६१ ॥ अन्योन्यप्रीतिवशतोबहुवर्षगतागतैः ॥ एकस्मिन्स
मयेविप्रंदृष्ट्वास्वीयांसकोपतः ॥ ६२ ॥ परपुंसिसमासक्तांपर्य्यंकेरतिकर्तृकाम् ॥ राज्यंत्यक्त्वावनंगत्वातपश्चर्य्यामथाकरोत् ॥ ६३ ॥ वनां
तरेमृतःसोपिगतोसौपरमंपदम् ॥ पुनरागत्यमेदिन्यांसर्वसौख्येनसंयुतः ॥ ६४ ॥ १ । २ । ४ । ८ । १२ । १७ । २२ । २८ । ३० । ३६ ।
४० । ४५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ १८ अथरोमावलीयोगः ॥ अनिरुद्धपुरेरम्येब्राह्मणोवेदपारगः ॥ देवशर्माइतिख्यातःप
त्नीपुत्रसमन्वितः ॥ ६५ ॥ प्रवृत्तिविद्यागमशास्त्रपारगः समस्तलोकेगुणिनांगुणाढ्यः ॥ शिवंस्मरन्ध्यानसमाधिनिष्ठोविमोहशून्यश्चप
रोपकर्ता ॥ ६६ ॥ शिवानुकम्पापरमंपदंगतंशिवस्यलोकंपरमंपवित्रम् ॥ पुनश्चभूमौससमागतोहिचानंदमूर्तिःसतुसर्वधार्मिकः ॥ ६७ ॥
अनेकलक्ष्मीर्जगतीजगत्पतिः समागतस्तत्रनचक्षयःक्वचित् ॥ सर्वंह्यनित्यंप्रविलोकितंचसमाजगौकाननवासवांश्च ॥ ६८ ॥ मृत्युंशता
ब्देह्यलभत्स्वयेच्छयापुनर्नजातःसचमुक्तिलाभात् ॥ ६९ ॥ इति ॥ १९ अथराज्ञीयोगः ॥ अथकाम्पिल्यनगरेवसंतिबहवोजनाः ॥
यमुनानिकटेचैवप्रकीर्णेगुणिनांगुणैः ॥ ७० ॥ सत्राजितोनामराजाबभूवक्षितिमंडले ॥ नानासैन्यसमायुक्तःपत्नीहारवतीशुभा ॥
॥ ७१ ॥ पुत्रौद्वौचमहाभव्यौपितृभक्तौहिचानुगौ ॥ प्रजाःपालयतेसम्यक्पुत्रवच्चतदानघ ॥ ७२ ॥ एकदाविप्रराज्ञातुयज्ञोऽका १३०
रीमुनिभिश्रितम् ॥ आहूताब्राह्मणाःसर्वेयज्ञमध्येतदानघ ॥ ७३ ॥ दत्तानितेनदानानिस्वर्णमुद्रास्तथाभृशम् ॥ बधिरेणद्विजेनाथमहाको

लाहलः कृतः ॥ ७४ ॥ संमुखः पतितोह्यग्नौ भस्मीभूतस्तदानघ ॥ तेनपापेनभोविप्रभूपतिर्दुःखसंयुतः ॥ ७५ ॥ पुण्येनजन्मनैवंसधनपुत्र
समन्वितः ॥ दक्षिणांगेमुखेपार्श्वेचिह्नंतस्यप्रदर्शितम् ॥ ७६ ॥ युवभावेभवेत्कष्टीराजरोगेणभोसुत ॥ ७७ ॥ १ । ३ । ५ । ८ । ११ ।
१५ । २० । २४ । ३१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५५ ॥ २० अथराजयोगः ॥ आसीज्जन्मांतरेचैवराजाशूद्रकुलेतदा ॥
जीमूतेतिसमाख्यातोविदर्भेह्यवसत्पुरा ॥ ७८ ॥ धनधान्यसमृद्धस्तुसहस्रसैन्येनराजते ॥ कृत्वादंडंविदंडंचप्रजानांलुंठनेरतः ॥ ७९ ॥
मित्रद्रव्याणिसर्वाणिगृहीत्वाविविधैश्छलैः ॥ प्राप्तेवार्द्धक्यसमयेकिंचित्पुण्यार्जनंकृतम् ॥ ८० ॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्यफ
लंतथा ॥ ततोवैमानुषीयोनौचागतोभूमिमंडले ॥ ८१ ॥ १ । ४ । ६ । ८ । १२ । १६ । २० । २५ । ३१ वर्षेषुकष्टम् ॥ परमायुर्व
र्षाणि ७३ ॥ २१ अथराजतीयोगः ॥ पूर्वजन्मांतरेचैवबाहुजःपूर्वजन्मनि ॥ भद्रसिंहःसमाख्यातःपत्नीतस्यमनोहरा ॥ ८२ ॥ कृता
नितेनदानानिपर्वस्वपिविशेषतः ॥ एकस्मिन्समयेविप्रविदग्धंब्राह्मणगृहम् ॥ ८३ ॥ निर्दग्धाश्चतथाजीवाःपापमाचरितंत्विदम् ॥ तस्मा
त्पापाच्चभोविप्रशीघ्रंचनरकेगतः ॥ ८४ ॥ ततोवैमानुषीयोनौकुलेमहतिजातवान् ॥ प्रथमेनवमेवर्षेकष्टेनातिप्रपीडितः ॥ ८५ ॥ १ ।
३ । ८ । ११ । १८ । २० । २४ । २८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०६ ॥ २२ अथराजनीतियोगः ॥ अथवेश्याकुलेजातास्वैरि
णीपरगामिनी ॥ पापाच्चविपुलंद्रव्यंलब्धमत्रद्विजोत्तम ॥ ८६ ॥ पूर्वजन्मनिसानारीकावेरीनिकटेऽवसत् ॥ द्रोणभूपस्यदुहितासुन्दरी
चातिशोभना ॥ ८७ ॥ गुप्तपापंचकारासौपतिवंचनतत्परा ॥ तेनेयंगणिकाजातापुण्याच्चैवशुभानना ॥ ८८ ॥ १ । ३ । ५ । ८ । १२ ।
१६ । २० । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ २३ अथरमायोगः ॥ आसीज्जन्मांतरेचैवपादजोवंगदेशके ॥ शुद्धबुद्धिःसमाख्या

तोद्रव्यस्योत्पादनेरतः ॥ ८९ ॥ नानाछलैश्चसंयुक्तोद्रव्यंतुकृतवान्भृशम् ॥ आयुषस्तुसमाप्तत्वात्समृतःकालचोदितः ॥ ९० ॥ पापा
त्पापफलंभुक्त्वापुण्यात्पुण्यफलंतथा ॥ मानुषश्चापिह्यधुनाबहुकष्टेनकष्टितः ॥ ९१ ॥ परमायुर्वर्षाणि ८३ ॥ २४ अथराजेन्द्रयोगः ॥
अथविश्वावरोनामब्राह्मणःशास्त्रपाठकः ॥ काव्यकर्त्तागुणज्ञश्चलोलुपश्चातिनिंदकः ॥ ९२ ॥ तस्मिन्ग्रामेऽवसत्त्वेकोबाहुजोधनवानपि ॥
तस्यद्रव्यंभुक्तवान्सरेमेतस्यैवभार्यया ॥ ९३ ॥ एवंस्वल्पेगतेवर्षेब्राह्मणोमृत्युमागतः ॥ सतेनकर्मणायुक्तःप्राप्तस्तुयमशासनम् ॥ ९४ ॥
पश्चान्मानुष्यमापन्नःसुखदुःखसमन्वितः ॥ ९५ ॥ १ । ३ । ४ । ६ । ८ । १० । १३ । १६ । २० । २७ वर्षेषुकष्टम् ॥ परमायुर्व
र्षाणि६२ ॥ २५ अथगघुहायोगः ॥ जालंधरस्यनिकटेपूर्णदेवेतिब्राह्मणः ॥ ब्रह्मचर्य्यरतःसोपिधनधान्यविवर्जितः ॥॥ ९६ ॥ जपकर्म
णिनिष्ठःसदेवताऽऽराधनेरतः ॥ नृपाश्चबहवःशिष्यानिर्विकारोपिब्राह्मणः ॥ ९७ ॥ मृतःस्वर्गपुरंगत्वाशिवलोकमुवासच ॥ ततःपुण्य
क्षये जातेब्राह्मणश्चाऽऽभवत्पुनः ॥ ९८ ॥ षष्टिवत्सरपर्य्यंतंस्वयंराज्यंचकारह ॥ ६० ॥तस्यायुर्वर्षाणि ७१ ॥ २६ अथरामायोगः ॥
कैरातेदेशकेपूर्वंबाहुजोधर्मसंज्ञकः ॥ सभार्य्यःपुत्रसहितःकृषिकर्मोद्यमेरतः ॥ ९९ ॥ कृतानितेनदानानिगजाश्वसहितानिच ॥ एकस्मि
न्समयेविप्रकृतंकर्मतुदारुणम् ॥ १०० ॥ प्रभातेनिर्गतःसोपिवनाद्रिनिकटेतदा ॥ गोधनेनसमाकीर्णोदैवात्तत्रद्विजोत्तम॥ १०१ ॥गौश्चक्को
धातुराप्येकातस्योपरिप्रधाविता ॥ लगुडैस्ताडितातेनसामृताद्विजसत्तम ॥ १०२ ॥ पापमाचरितंतेनगोपितंघस्मरंतदा ॥ सक्षात्रःपंचतां
प्राप्तोगतोसौयमशासनम् ॥ १०३ ॥ बहुवर्षसहस्रांतेमानुषश्चततोऽभवत् ॥ श्वेतकुष्ठमभूत्तेनपीडचमानोमुहुर्मुहुः ॥ १०४ ॥ १। ३।५।
८।११।१४।१७ । २० । २५ । २९ । ३१ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ २७ अथराकायोगः ॥ आसीज्जन्मांतरेचैवकी

टदशवसन्सुधाः ॥ गोकर्णेतिसमाख्यातःपत्नीपुत्रसमन्वितः ॥ १०५ ॥ शतग्रामाधिपः सोपिभ्रमिकश्चातिजल्पकः ॥ एवंगेहंकृतंतत्र
चर्चितंचविचित्रितम् ॥१०६॥ माणिक्यकलशोपेतंनवभांडंमनोहरम् ॥ आरामंविविधंकृत्वाब्राह्मणास्तोषिताश्चवे ॥ १०७ ॥ एकस्मि
न्समयेविप्रपापमुग्रमुपार्जितम् ॥ परस्त्रीगमनंकृत्वागंगामध्येतदानघ ॥ १०८ ॥ पापाच्चनरकंयातःपुण्यात्पुण्यफलंतथा ॥ ततोवैमानुषी
योनौसुंदरश्चातिभोगभाक् ॥ १०९ ॥ १ । ३ ।९।१६।२०। वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ २८ अथरावतीयोगः ॥ आसीत्पूर्वे
भवेकश्चिन्निषादोजाह्नवीतटे ॥ जीवानांघातनेप्यग्रोदुराधर्षोपिदुर्मुखः ॥ ११० ॥ निंदकःपापभागीचपरस्त्रीरमणेरतः ॥ बाहुजस्य
सहायेनमार्गेलुंठनतत्परः ॥ १११ ॥ ब्राह्मणस्यहृतंवित्तंलगुडेनसताडितः ॥ सतेनकर्मणायुक्तःप्राप्तस्तुयमशासनम् ॥ ११२ ॥ सनाना
नरकेस्थित्वादिव्यवर्षसहस्त्रकम् ॥ ततोवैमानुषोजातःसर्वकष्टेनकष्टितः ॥ ११३ ॥ १ । ४ । ८ । १२ । १८ । २४ । वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ७० ॥ २९ अथरामेश्वरयोगः ॥ आसीज्जन्मांतरेचैवबाहुजःखसदेशके ॥ आखेटकेरतोनित्यंमृग्येकाचहतातदा ॥११४॥
सगर्भासाबभूवाऽत्रपापमाचरितंत्विदम् ॥ षष्टिवर्षसहस्त्राणिभुक्त्वापियमयातनाम् ॥ ११५ ॥ पुनरागत्यमेदिन्यांधनधान्यसमन्वितः ॥
नभवंतिसुतातस्यभूत्वापिचनजीवति ॥ कन्याद्वयंत्रयंवापिजायतेनात्रसंशयः ॥ ११६ ॥ १ । ४ । ८ । १४ । १७ । २० । २८ ।३८।
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ३० अथराहुयोगः ॥ प्राग्जन्मनिमहाभागगौरीदेशेचपादजः ॥ कृत्वास्वर्णमयंछत्रंगोसहस्त्रंतदा
नघ ॥ ११७ ॥ ब्राह्मणेभ्योददौविप्रस्वर्णालंकरणैर्युतम् ॥ तेनपुण्यप्रभावेणराजवत्सुखभोगभाक् ॥ ११८ ॥ धनीमानीविशालाक्षोबहु
भृत्यसमन्वितः ॥ गौरांगश्चपलोवक्तादाताचासौबलोत्कटः ॥ ११९ ॥ अकस्माच्चभवेत्क्रोधीपुनःशांतश्चजायते ॥ पंचषष्ट्यब्दतः

सौख्यंराजमान्योरणेजयः ॥ १२० ॥ धनकीर्तिर्भवेत्तत्रबहुभृत्यादिसंवृतः ॥ अष्टादशेतुविंशेवामहाकीर्तिर्धनंतथा ॥ १२१ ॥ दिने दिनेमहासौख्यंवर्द्धतेनात्रसंशयः ॥ राजरोगीचविकलःयुवभावेततोऽधुना ॥ १२२ ॥ परमायुर्वर्षाणि ७३ ॥ ३१ अथरात्रियोगः ॥ चन्द्रभागानदीतीरेमर्कटोनामब्राह्मणः ॥ महाभिमाननिरतः किंचिद्विद्यासमन्वितः ॥ १२३ ॥ शिवार्चनंकृतंतत्रषोडशैरुपचारकैः ॥ एकस्मिन्समयेविप्रगुरुद्रव्यंतुचोरितम् ॥ तेनपापेनसर्पोऽभूत्पुण्याच्चमानुषोधुना ॥ १२४ ॥ १ । ४ । ७ । ९ । ११ । १३ । १६ । १७ । २० । २६ । ३० । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७७ ॥ ३२ अथराजियोगः ॥ चिन्तामणिपुरेरम्येनर्मदानिकटेतदा ॥ बाहुजःसर्वधर्मज्ञोविद्यायांपरिशीलितः ॥ १२५ ॥ काव्यकर्ताविवेकाढ्यःपरोपकरणेरतः ॥ एकदाचन्द्रमोग्रस्तेब्राह्मणायददौधनम् ॥ ॥ १२६ ॥ पुनर्लोभेनभोविप्रहृतंतेनधनंबलात् ॥ अयंसंततिहीनश्चमध्येरोगसमाकुलः ॥ १२७ ॥ प्रथमेतृतीयेषष्ठेद्वादशेचापिविंशके ॥ कष्टेनविकलोविप्रकृतदानैःप्रमुच्यते ॥ १२८ ॥ ३३ अथराजीवयोगः ॥ भीष्मकोनामविप्रोसौप्रयागेन्यवसत्तदा ॥ तीर्थेतीर्थेकृता सेवाऋषीणांचपुनःपुनः ॥ १२९ ॥ देवार्चनंविप्रभक्तिंकृत्वासावत्रजन्मनि ॥ सुखीसुकर्मकृच्चैवधर्मिष्ठोबहुपुत्रवान् ॥ १३० ॥ बहुस्त्रीभिःसमंभोगीबुद्धिमांश्चविचक्षणः ॥ अतिस्वस्थोभवेद्दाताधनाढ्यस्तेजसांपतिः ॥ १३१ ॥ त्रिंशद्वर्षेगतेनूनंमहासौख्यं प्रजायते ॥ रक्तवातोद्भवापीडाराजरोगः प्रवर्त्तते ॥ १३२ ॥ १ । ४ । ८ । १३ । १९ । २० । २७ । ३४ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ ३४ अथरंकयोगः ॥ पूर्वेगंगातटेचैवरुद्रसेवाकृताभृशम् ॥ जन्मन्यस्मिन्तथैवापिनाधिकश्चभवेन्नरः ॥ १३३ ॥ दाताचैवचभोक्ताचराजमान्योगुणाधिकः ॥ परोपकारीधर्मात्माकीर्तिमान्धनवांस्तथा ॥ १३४ ॥ षोडशाब्देतथाविंशेसौख्यंह्यात्मबलैर्भ

संहि.

वेत् ॥ गजवाजिधनैर्युक्तोराजावाराजमंत्रिकः ॥ १२५ ॥ रुद्रसेवाप्रभावेणचैवंभूतोद्विजोत्तम॥ तपस्वीर्निदितःपूर्वंतस्माद्धीनफलोभवेत् ॥
॥ १२६ ॥ चिंताचजायतेतस्यसौख्यंचाल्पधनंसुत ॥ १२७ ॥ परमायुर्वर्षाणि ७५ ॥ ३५ अथरागयोगः ॥ अथवैकीकटेदेशेब्राह्मणो
बहुपाठकः ॥ गदाधरइतिख्यातः पत्नीतस्यपतिव्रता ॥ १२८ ॥ सर्वविद्याविवेकीचदेवताऽऽराधनेरतः ॥ एकस्मिन्समयेविप्रकृतंकर्मजु
गुप्सितम् ॥ १२९ ॥ ब्राह्मणस्यहृतंद्रव्यंब्रह्मस्वंभक्षितंतदा ॥ तेनेदंकष्टबहुलंचोदरेपीडनंभृशम् ॥ १४० ॥ १ । ४ । ८ । ९ । १२ ।
२० । २८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८५ ॥ ३६ ॥ अथकीकटयोगः ॥ देशेकीकटकेजातः पूर्वजन्मनिब्राह्मणः ॥ विष्णुदत्तइति
ख्यातोविष्णुपूजापरायणः ॥ १४१ ॥ एकदाविष्णुपूजायामागतश्चगुरुर्द्विज ॥ गर्वेणतुनतिंचैवनचकारद्विजोत्तम ॥ १४२ ॥ क्रुद्धेनगुरु
णाशप्तउन्मत्तश्चबभूवह॥स्वल्पेकालेमृतः पश्चाद्गतवान्यममंदिरम् ॥ १४३ ॥ तत्रभुक्त्वातुपापस्यफलंजातोधरातले ॥ अस्मिञ्जन्मनि
मूर्खश्चमहापीडासमन्वितः ॥ १४४ ॥ १५ । २५ । ३४ । वर्षेषुकष्टम् ॥ ७० वर्षेमृत्युः ॥ ३७ अथरोगजयोगः ॥ कृपाचार्य्योद्विज
स्त्वेकोहस्तिनानगरेशुभे ॥ सर्वसम्पद्युतोमानीदाताभोक्तानिरामयः ॥ १४५ ॥ एकस्मिन्समयेविप्रकृतंकर्मजुगुप्सितम् ॥ कुमारीगमनं
कृत्वाविधवागमनंकृतम् ॥ १४६ ॥ प्राप्तोयमपुरंसोपिभुक्त्वाभोगांश्चशाश्वतान् ॥ षष्टिवर्षसहस्रांतेमानुषोपिततोऽधुना ॥ गौरांगःस्पष्टव
क्ताचक्षिप्रकोपीदयापरः॥१४७॥१।४।८।११।१६।२०।२७।३८ वर्षेषुकष्टम् ॥ परमायुर्भवेत्तस्यसमाःषष्ट्यब्दकंक्रमात् ॥ १४८ ॥ ३८
अथरजकयोगः ॥ यथेष्टदेवार्चनध्याननिष्ठः सतांप्रसंगंप्रकरोतिनित्यशः ॥ विश्वंभरोवैसजगत्प्रसिद्धश्चोलेसुदेशेन्यवसत्तदाच ॥
अथभाविबलात्पुत्रपापमाचरितंतदा ॥ १४९ ॥ देवालयेतदाविप्रमित्रपत्न्यांरतिःकृता ॥ तेनपापानुसारेणसगत्वायमलोककम् १५०॥

यमलोकात्परिभ्रष्टश्चागतोभूमिमंडले ॥ १५१ ॥ १ । ३ । ५ । ८ । ११ । १४ । १७ । २० । २४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि७१॥
३९ अथरोचनयोगः ॥ कृष्णानद्याश्चनिकटेपूर्वजन्मनिब्राह्मणः ॥ प्रसन्नइतिचाख्यातः पत्नीतस्यप्रभाकरी ॥ १५२ ॥ सर्वविद्यावि
वेकीचतामसीचसदार्तिकः ॥ एकस्मिन्समयेविप्रब्राह्मणोप्येकआगतः ॥ १५३ ॥ कोस्तिकोस्तिब्रुवन्रोषात्कृतंयुद्धंपरस्परम् ॥ अपभ्रंशं
वदन्वाक्यंशापंदत्त्वाजगामसः॥१५४॥सविप्रोराक्षसोभूत्वापुनर्भूत्वाचब्राह्मणः ॥ गौरांगोमध्यदेहश्चचंचलश्चतुरःसुधीः ॥ १५५ ॥
ग्रामिकोहिपरोक्षेचपरनिंदापरायणः ॥ कंठेमूर्ध्निभवेच्चिह्नंयुवभावेप्रपीडितः ॥ १५६ ॥ परमायुर्भवेत्तस्यषष्टिवर्षैर्द्विजोत्तम ॥ १५७ ॥
४० अथरणवर्द्धनयोगः ॥ पूर्वपौंड्रीकदेशेन्यवसतसचवैवैरिहंताधनाढ्यःधीरोवीरोगभीरोहयगजरथकायस्यद्वारेसदैव॥ दाताशूरःसुकर्मा
जगतिसुविदितोभूरिरत्नादिपूर्णोभूपालैर्यातिसाम्यंबहुसुतभृतकैर्दीर्घमायुर्मनोज्ञः॥१५८॥हरगेहंकृतंपूर्वंतेनायंसुखसंयुतः॥ पुत्रपौत्रादियुक्त
श्चजायतेनात्रसंशयः॥१५९॥वृद्धकालेमहादुःखंपुत्रपौत्रादितोध्रुवम् ॥ शुक्रउवाच ॥ किंजाप्यंकस्यपूजाचकिंदानंचकिमौषधम्॥१६०॥
भृगुरुवाच॥पूर्वंतपस्वीनिहतस्तेनदुःखमभूत्खलु॥शनेःसप्ताऽक्षरंमंत्रंभौममंत्रंचत्र्यक्षरम्॥१६१॥द्विसहस्रमितंजप्त्वाप्रत्येकंतुद्विजोत्तम॥ रज
तंसप्तषट्कंचसप्तषट्कंचहाटकम्॥१६२॥वृषभंवस्त्रगोधूमौप्रदद्याद्ब्राह्मणायच ॥ एतद्दानोपचारेणसर्वंदुःखंप्रणश्यति ॥१६३॥ सप्तजन्मनिनो
दानैरंतेरोगीदरिद्रता ॥ १६४ ॥ ४१ अथलक्ष्मीयोगः ॥ पूर्वजन्मांतरेचैवपादजःसुखसंयुतः ॥ तेनतीर्थेकृतासेवाऋषीणांचपुनःपुनः ॥
॥ १६५ ॥ तेनासौसुखसम्पन्नोधनाढ्योराजपूजितः ॥ गौराङ्गश्चपलोवक्तागुणीचकटुभाषकः ॥ बहुस्थानेसुदाताचमित्रशत्रुसमोखलु
॥ १६६ ॥ १ । ३ । ५ । ८ । १४ । १८ । २० । २५ । ३१ । ३६ । ४० ४५ एषुवर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६६ ॥

४२ अथलोष्ठयोगः ॥ वैद्यनाथपुरेरम्येब्राह्मणःशास्त्रवर्जितः ॥ आश्रयेतिसमाख्यातःपत्नीपुत्रसमन्वितः ॥ १६७ ॥ निर्माल्यंभोजये न्नित्यमनाचारेसदारतः ॥ एकदाचन्द्रमोग्रस्तेकिंचिद्दानार्चनंकृतम् ॥ १६८ ॥ आयुषस्तुसमाप्तत्वात्स्मृतोद्विजसत्तम ॥ पुनरागत्यमेदि न्यांवंशवृद्धिर्नजायते ॥ १६९ ॥ २ । ४ । ८ । १२ । १६ । २२ । २५ । ३० । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ ४३ अथ लीलकयोगः ॥ आसीज्जन्मांतरेचैवबाहुजःकर्मनामतः ॥ तपश्चर्य्यारतोनित्यंजपकर्मार्चनेरतः ॥ १७० ॥ एकस्मिन्समयेविप्रकृतंपापं सहायतः ॥ भागिनेयस्यभार्य्यायांहठात्तेनरतिःकृता ॥ १७१ ॥ तेनपापेननरकेयमदूतैश्चप्रापितः ॥ बहुवर्षसहस्रांतेमानुषोपिपुनर्भुवि॥ ॥ १७२ ॥ १ ।३।८।१२।१६।२०।२४।३०।३६।४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ ४४ अथलीनयोगः ॥ आसीज्जन्मांतरेचैव बाहुजःपृथिवीपतिः ॥ पक्वान्नंचसवैदत्त्वापश्चात्तापंतदाकरोत् ॥ १७३ ॥ मृत्वास्वर्गापपर्गौचभुक्त्वावर्षसहस्रकम् ॥ ततोवैमानुषीयोनौ चात्रवैद्येसमुद्यतः॥ १७४॥ लब्धंचापिधनंधान्यंक्षणेवृद्धिःक्षणेक्षयः ॥ बाल्येचलभतेदुःखमधिकाराच्चजायते॥ १७५॥ गुप्तचिंताभवेत्तस्यसुत कांताधनस्यच ॥ मध्येमध्येभवेत्कष्टीराजरोगेणभार्गव ॥ १७६॥ १।८।१४।२०।३०।३५।४०।४५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३॥ ४५ अथलालकठयोगः ॥ पूर्वंवनांतरेवात्सीद्ब्राह्मणोधनवानपि ॥ शिवसेवारतस्तत्रब्राह्मणानांप्रतोषकः ॥ १७७॥ एकस्मिन्समयेविप्रवनंदग्धं दवाग्निना ॥ पश्चात्सुकृतवान्विप्रपुण्यपुंजंतुशक्तितः ॥ १७८॥ देवानांवैमन्दिराणिकारितानिचभक्तितः ॥ नित्योत्सवार्थंभोगार्थंजीविकावि निर्माकृता ॥ १७९ ॥ पापमाचरितंपश्चात्सुकृतस्याभिमानतः ॥ गुरुनिन्दाकृतातेनपुत्रेणरहितोऽत्रवै ॥ अन्यसौख्यैरुपेतश्चधनधान्य युतोपिवा ॥ १८० ॥ १ । ३ । ८ । १७ । २२ । २८ । ३१ । ३४ । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६० ॥ ४६ अथलुता

योगः ॥ आसीज्जन्मांतरेचैवब्राह्मणोबहुधार्मिकः ॥ विंशतिवर्षांतरेचासौवानप्रस्थोबभूवह॥ १८१॥आत्मारामेतिविख्यातःकांपिल्येनगरे
वसन् ॥ शिवस्मरणेचनिष्ठावान्वनवासेचवैमृतः ॥ १८२ ॥ कैलासशिखरेगत्वातत्रस्थित्वाविशेषतः॥पुनरागत्यमेदिन्यांमानुषःसुंदरोऽ
धुना ॥ १८३ ॥ विंशतिवर्षांतरेचात्रराजमान्योमहाऽद्भुतः ॥ गजाश्वधनसंयुक्तःपृथ्वीपतिस्ततःपरम् ॥ १८४ ॥ १ । ५ । ६ । १०
२८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० ॥ ४७ अथलेखकयोगः ॥ बाहुजस्यकुलेपूर्वंगोपाचलस्यसन्निधौ ॥प्रचंडइतिविख्यातःपत्नीपु
त्रसमन्वितः ॥ १८५ ॥ क्षात्रकर्मपरित्यक्त्वाव्यसनेषुसदारतः ॥ मिथ्यावादीपरद्रोहीपरनिंदापरायणः ॥१८६॥ एवंनिवसतस्तत्रबहुवर्षग
तागतैः ॥आयुषस्तुसमाप्तत्वात्समृतःकालचोदितः ॥१८७॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्यफलंतथा ॥ बहुवर्षसहस्रान्तेमानुषोपिततो
धुना ॥ १८८ ॥ २ । ८ । १४ । १८ । २५ । ३० । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि७१॥४८अथलघुनाशनयोगः ॥ लघुनाशनेचयोजातः
पूर्वजन्मनिपादजः॥कृषिबाणिज्यनिरतोगोधनैःपरिवेष्टितः॥१८९॥एकदातेनशूद्रेणकृतंकर्मसुदारुणम्॥ स्तनंधयंतुवत्संचगृहीत्वासुरभिं
ददौ॥१९०॥वियोगाद्दुःखतप्तासामृताशीघ्रंद्विजोत्तम ॥ तेनपापेनविप्रोऽत्रपुत्रदारवियोगवान् ॥१९१॥ १०।२५।३०वर्षेषुकष्टम्७५वर्षेमृ
त्युः॥४९ अथलंबोदरयोगः ॥ चंद्राद्रिनिकटेपूर्वंशंकरोनामधार्मिकः ॥ धनधान्ययुतस्तत्रपरोपकरणेरतः ॥१९२॥ दत्तानितेनदानानि
पर्वस्वपिविशेषतः ॥ नानागंधाढ्यमाल्यंचनानारत्नहिरण्यकम् ॥१९३॥ तीर्थेतीर्थेकृतासेवाऋषीणांचपुनःपुनः ॥ तीर्थभूमौमृतःसोपिगं
धर्वेनगरेगतः ॥ १९४ ॥ बभूवपादजःसोपिबाहुजोपिततःपरम् ॥ तत्रपापार्जनंकृत्वातेनात्रकष्टसंयुतः ॥ गंभीरोधनवान्सोपिवामभागेस
चिह्नितः ॥ १९५ ॥ १ । ४ । ८ । १६ । २४ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६० ॥ ५० अथलालात्मकयोगः ॥ यामुनेनगरेपूर्वं

यवनःसचधार्मिकः ॥ अकरोद्बहुपुण्यानिह्यन्नदानंविशेषतः ॥ १९६ ॥ एकस्मिन्समयेविप्रप्रजादंडश्चकारितः ॥ प्रजाःसर्वाश्चविषु
खाबभूवुर्द्विजसत्तम ॥ १९७ ॥ यवनस्यकृतोघातोबाणैःखड्गैःसहस्रधा ॥ मृत्वासत्रिदिवंगत्वाबभूवपादजोपिच ॥ नानाद्रव्यसमायुक्तः
पुत्रदारैःसमन्वितः ॥ परमःसाहसीधैर्य्यपरोपकरणेरतः ॥ १९८ ॥ १ । ४ । ६ । ८ । १२ । १९ । २७ । ३१ वर्षेषुकष्टम् ॥ परमायु
र्वर्षाणि ६७ ॥ ५१ अथलीलायोगः ॥ अग्रजेवैपुरेरम्येतत्रवैश्योऽसुदर्शनः ॥ चौरकर्मणिनिरतस्तत्सकाशाद्धृतंधनम् ॥ १९९ ॥
एकस्मिन्समयेविप्रनृपद्रव्यंतुचोरितम् ॥ शृंखलाबंधनंप्राप्यकारागृहनिवासकृत् ॥ २०० ॥ दैवात्तत्रमृतःसोपिसगत्वायमसादनम् ॥
षष्टिवर्षसहस्रांतेमानुषश्चात्रजन्मनि ॥ २०१ ॥ १ । ३ । ५ । ८ । १० । १२ । १५ । २० । २५ । ३० । ३३ । ३६ । ४० वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ७१ ॥ ५२ अथलंपटयोगः ॥ कश्चिद्वैश्योऽभवत्पूर्वंबर्बरेदेशकेतदा ॥ कृतानितेनपुण्यानिह्यारामंकृतवान्सरः ॥ २०२ ॥
पथिकूपाःकारिताश्चदानंदत्तंद्विजायच ॥ एवंन्यवसतस्तत्रबहुवर्षगतागतैः ॥ बभूवबाहुजःसोपिजन्मन्यत्रसुखान्वितः ॥ २०३ ॥ १ ।
४ । ८ । १२ । १६ । २० । २५ । २६ । ३१ । ४० । ४६ वर्षेष्वतिकष्टम् ॥ परमायुर्वर्षाणि ६५ ॥ ५३ अथलौपिकयोगः ॥
आसीज्जन्मांतरेचैवचांत्रवेद्येवसन्नसौ ॥ सौदासोनामक्षात्रस्तुर्किंचिद्भूमिपतिस्तदा ॥ २०४ ॥ पत्नीतस्यमहाभागादानपुण्यार्चनेरता ॥
बाहुजःपापभागीचपरस्त्रीरमणेरतः ॥ २०५ ॥ बाहुजस्याभवन्मृत्युःपत्नीजातासतीतदा ॥ उभयोःकर्मणांहेतोःस्वर्गेगत्वाद्विजोत्तम ॥
पुनरागत्यमेदिन्यांपुण्यपापफलादपि ॥ २०६ ॥ १ । २ । ५ । १० । १५ । २० । २५ । ३० । ३५ । ४० । वर्षेषुकष्टम् ॥ परमायुर्व
र्षाणि ८७॥५४ अथलोपामुद्रायोगः ॥ चित्रकूटाद्रिनिकटेवसंतिबहवोजनाः॥ तत्रवैश्योवसत्त्वेकोक्रयविक्रयकारकः॥२०७॥नानामनो

रथैर्युक्तःशिवस्योद्यापनंकृतम् ॥ ब्राह्मणायददौदानंपर्वस्वपिविशेषतः ॥ २०८ ॥ एकस्मिन्समयेविप्रमित्रद्रव्यव्ययःकृतः॥नदत्तंतेनतत्त
स्मैलोभोपहतचेतसा ॥ तेनायंधनहीनोपिकष्टेनातिप्रपीडितः ॥ २०९ ॥ परमायुर्वर्षाणि ८१ ॥ ५५ अथलीलाम्बरयोगः ॥ बाहुजः
पूर्वमुत्पत्तौ पाखंडाऽऽचरणेरतः ॥ परवित्तापहारीचयमलोकेततोगतः ॥ २१० ॥ यमलोकात्परिभ्रष्टोमानुषोपिततोधुना॥ क्रोधीस्थूलो
महामानीसलज्जोधनवांस्तथा॥सदातीर्थाभिलाषीचकुटिलोजायतेधुना ॥ २११ ॥ २।४।८।१३।२०।३१वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
७५ ॥ ५६ अथलंबकर्णयोगः ॥ लम्बकर्णपुरेरम्येतत्रविप्रःसुधाकरः ॥ धर्मशीलोतिमतिमान्दाताभोक्तानिरामयः॥२१२॥सुधीश्वसर्व
शास्त्रेषुकाव्यालंकारबोधकः ॥ एकस्मिन्समयेविप्रप्रमादात्कामलोभतः ॥ २१३ ॥ गोत्रजागमनंकृत्वाबलात्कारेणभार्गव ॥ तेनपापा
नुसारेणपतत्यंधेतदाऽनघ ॥ २१४ ॥ पुनर्वैमानुषोभूत्वाधनपुत्रविवार्जितः ॥ गोशतदानमात्रेणवंशवृद्धिर्भविष्यति ॥ २१५ ॥ १ । ८ ।
१६ । २४ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ५७ अथलम्पाकयोगः ॥ कुरुक्षेत्रस्यनिकटेबाहुजोपिवसत्यसौ ॥ कृषिवाणिज्य
निरतःपुण्यार्जनरतःसदा ॥ २१६ ॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्यफलंतथा ॥ अत्रजन्मनिमहारोगीपीड्यमानोमुहुर्मुहुः॥गोदानाच्च
भवेच्छ्रेयस्ततःसुखमवाप्नुयात् ॥ २१७ ॥ १।८।१३।१६।२०।२५ वर्षेषुकष्टम्॥परमायुर्वर्षाणि६२॥५८ अथलंपकयोगः ॥ अर्यमाख्येपुरे
रम्येब्राह्मणःशास्त्रपाठकः॥महोद्यमीगुणातीतोब्रह्मभक्तिरतःसदा ॥ २१८ ॥ एकस्मिन्समयेविप्रसस्नातोमृगगेरवौ । दत्तानितत्रदानानि
वेण्यांमग्नोबभूवह ॥ २१९ ॥ तेनेयंसुखसम्पत्तिःपरमोदारवत्सलः ॥ राजमान्योगुणातीतोभव्यकांतिर्महाबलः ॥ सपिशाचाधिकः
कोपीदीर्घायुर्बहुपुत्रकः ॥ २२० ॥ १।५।८। १६।२०।२७। ३२ । ३६ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणिः६२ ॥ ५९अथलोकभूषण

योगः ॥ अथभीमानदीतीरेबाहुजःपापभागसौ ॥ धनमैश्वर्य्यमतुलंप्रजानांलुंठनेरतः ॥ २२१ ॥ ततोमृत्युवशंप्राप्तोनरकेषुसुसंस्थितः॥
किंचित्पुण्यावशेषेणमानुषोजायतेऽधुना ॥ २२२ ॥ क्षणेसौख्यंक्षणेचिंताधनंस्वल्पंतुजायते ॥ महांश्चराजमान्यश्चमानसौख्यंसदाभवे
त् ॥ २२३ ॥ युवभावेमहत्कष्टंवार्धक्येपितदानघ ॥ देशेदेशेव्रजन्त्सोपिद्रव्यार्थंचद्विजोत्तम ॥ २२४ ॥ १ । ८ । १६ । २२ । ३०
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८९ ॥ ६० अथलवंगदलयोगः ॥ कश्चिद्द्विजकुलेपूर्वंशतद्रुनिकटेतथा ॥ देवदासइतिख्यातःपादजःसुखसं
युतः ॥ २२५ ॥ नृपानुकम्पयाप्राप्तश्चासौभोग्यवसुंधराम् ॥ अज्ञातेनकृतंकर्मबाहुजस्यप्रताडनम् ॥ २२६ ॥ समृतस्तेनदुःखेनपापमा
चारितंत्विदम् ॥ तेनाऽयंकष्टसंयुक्तोहस्तेपादेप्रपीडचते ॥ स्वर्णदानाद्भवेच्छ्रेयश्चान्यथाविपरीतकम् ॥ २२७ ॥ २ । ४ । ८ । १२ । १६ ।
२६ । २७ । ३२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७४ ॥ ६१ अथलेखायोगः ॥ आंत्रवेद्येवसद्योऽसावाभीरःपूर्वजन्मनि ॥ कृतानितेनपुण्या
निपर्वस्वपिविशेषतः ॥ २२८ ॥ एकस्मिन्समयेविप्रकृतंकर्मचदारुणम् ॥ गोधनेनसमाकीर्णआरामोध्वंसितश्चवे ॥ २२९ ॥ तेनपापा
नुसारेणनरकेगत्वाभोसुत ॥ पश्चान्मानुष्यमापन्नोधनधान्यसमन्वितः ॥ २३० ॥ १ । ३ । ८ । १६ । २४ । २८ वर्षेषुकष्टम् ॥ परमा
युर्वर्षाणि ८१ ॥ ६२ अथलंबयोगः ॥ आसीत्पूर्वेभवेकश्चित्कर्णाटेपादजस्त्वसौ ॥ धीरदासइतिख्यातःपत्नीतस्यगुणेश्वरी॥२३१॥तत्रैव
नगरेचैवन्यवसत्परिवारयुक् ॥ क्रयविक्रयणाद्वापिद्रव्यंतुबहुसंचितम् ॥ २३२ ॥ एकस्मिन्समयेविप्रकृतंकर्मजुगुप्सितम् ॥ मिथ्यापवा
दंप्रवदञ्ज्ञातिहानिंतदाऽकरोत् ॥ २३३ ॥ तेनपापानुसारेणसभुक्तायमशासनम् ॥ ततोमानुष्यमापन्नोगौरकांतिर्धनान्वितः ॥ २३४ ॥
१ । ५ । ८ । १४ । १८ । २५ । ३१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ६३ अथलालामृतयोगः ॥ कश्चिद्विप्रकुलेपूर्वंधर्मशीलश्च

कौंकणे ॥ पुंश्चलीमान्प्रकोपीचकिंचिद्वित्तसमन्वितः ॥ २३५ ॥ तस्यभ्रातुःकनिष्ठस्यतस्यभार्य्यामहाशुभा ॥ बलादाकर्षितातस्यांकृ सं०टि०
त्वातुरतिसंगमंम् ॥ २३६ ॥ भुक्तादुःखंचनरकेबहुवर्षसहस्रकम् ॥ ततोवैमानुषीयोनावधनीरोगदुर्बलः ॥ बहुप्रकारेनिरतःहिंसाकर्मणि
तत्परः ॥ २३७ ॥१।४।८।११ । १६ । २० । २८ । ३० । ३५ । ४० । ४५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ६४ अथलंबरयो
गः ॥ लंबरेयोगकेजातःसवैश्यःपूर्वजन्मनि ॥ व्यापारेवंचनांकृत्वाचास्मिञ्जमनिनिर्धनः ॥ २३८ ॥ पुत्रदारैश्चरहितःसर्वदाकष्टसंयुतः॥
वर्षेतुषोडशेकष्टंमृतिःसप्ततितमेऽब्दके ॥ २३९ ॥ ॥ ६५ अथलकुटयोगः ॥ कीकटेचगयाक्षेत्रेब्राह्मणःप्रेतकर्मणि ॥ गृहीत्वाविविधं
दानमपात्रेपात्रमेववा ॥ २४० ॥ सदाचारपरिभ्रष्टोमद्यमांसेनजीवति ॥ परदाराभिगमनःपरनिंदापरायणः ॥ २४१ ॥ आयुषस्तुसमाप्त
त्वात्समृतोगदपीडितः ॥ अत्रजन्मनिभवेत्कष्टीपुत्रदारविवर्जितः ॥ २४२ ॥ १ । ३ । ६ । ९ । १३ । १६ । २१ । २८ । ३० । ३६ ।
४० । ४५ एतद्वर्षेभवेत्कष्टीपरमायुःशतंनृणाम् ॥ २४३ ॥ ६६ अथलिंबयोगः ॥ अथचोत्कलदेशेतुब्राह्मणोब्रह्मचर्यवान् ॥ शिवेध्यानर
तोनित्यंपरानंदेसनातने ॥ २४४ ॥ सर्वदाज्ञानमार्गेचतत्परश्चद्विजोत्तम ॥ एकस्मिन्समयेविप्रनास्तिकस्यप्रसंगतः ॥ २४५ ॥ गुरुनि
दावेदनिंदाकृतातेननिरंतरम् ॥ नानाजन्मोत्तरेविप्रमानुषोपिततोऽधुना ॥२४६॥ परोक्षवादीधीरश्चनिंदकोबहुजल्पकः ॥ मध्येपिचभ
वेत्कष्टीदारिद्र्येणगदेनवा ॥ २४७ ॥१।३।८।१२।१६।२०।२४।२६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० ॥ ६७ अथलीनयोगः ॥ कश्चि
च्छूद्रकुलेपूर्वंक्षिप्रानद्याश्चसन्निधौ ॥ प्रकीर्णःसर्वसौख्यैश्चसर्वविद्याविनोदकः ॥ २४८ ॥ अर्भकान्पाठयेत्तत्रदयार्द्रःपापकर्शितः ॥ शिव १३
सेवनजात्पुण्याच्चात्रजन्मनिभार्गव ॥ २४९ ॥ धनपुत्रधरादारैः संयुतः प्रीतिदायकः ॥ राजसश्चतुरःसुज्ञोद्विजदेवार्चकः सदा ॥ २५० ॥

१ । २ । ५ । ८ । १२ । २० । ३० । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ ६८ अथलज्वायोगः ॥ नेपालेनगरेपूर्वंसर्वसौख्यसम
न्वितः ॥ बाहुजश्छत्रधारीचकृत्वाराज्यंनिरंतरम् ॥ प्रतापलोभयुक्तेनकृतंकर्मसुदारुणम् ॥ २५१ ॥ प्रजानांपुत्रवधूः पुत्रीयच्छुतातुशुभा
नना ॥ बलादाकर्षितासातुविधवासधवातथा ॥ २५२ ॥ पापकर्मणिसक्तोऽसौबहुवर्षनिरन्तरम् ॥ गतोसौनरकेघोरेषष्टिवर्षसहस्रकम् ॥
॥ २५३ ॥ ततोवैमानुषीयोनौचागतोधरणीतले ॥ निष्ठुरः कूटवादीचनिर्धनः परवंचकः ॥ असह्यापीदुराधर्षः सर्वकष्टेनकष्टितः ॥
॥ २५४ ॥ १ । ८ । १५ । २४ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ६९ अथलांछनयोगः ॥ पूर्वजन्मांतरेचैवजयनामातु
बाहुजः ॥ नानाकर्मकृतंतत्रवृषलीरमणंकृतम् ॥ २५५ ॥ किंचित्कालांतरेविप्रसमृतः कालचोदितः ॥ तिर्य्यग्योनिषुचोत्पन्नः शतधाच
महीतले ॥ पश्चाद्वैमानुषीयोनौमर्त्यलोकेप्रतिष्ठितः ॥ २५६ ॥ १ । ४ । ८ । १६ । २० । २८ । ३६ । ३८ । वर्षेषुकष्टम् ॥ परमा
युर्वर्षाणि ६७ ॥ ७० अथलाटकयोगः ॥ मध्यदेशेतदापुत्रवसंतिबहवोजनाः ॥ तत्रशूद्रोऽवसत्त्वेकोधनपुत्रविवर्जितः ॥ २५७ ॥
कृतातुपरिचर्य्याचशिवस्यस्मरणेरतः ॥ एकांघ्रिभुजमुत्थाप्यजपन्वर्षाष्टकंतदा ॥ २५८ ॥ कालेनमृत्युरभवत्स्वर्गलोकेतथागतः ॥
ततः पुण्यक्षयेजातेचागतोधरणीतले ॥ पुत्रदारधनैर्युक्तोमध्येकष्टसमावृतः ॥ २५९ ॥ १ । ४ । ८ । १२ । २० । ३५ वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ७४ ॥ ७१ अथलोमशयोगः ॥ आसीज्जन्मांतरेचैवन्यवसत्कुरुजांगले ॥ जगन्नाथइतिख्यातः सपत्नीकः
सपुत्रकः ॥ २६० ॥ किंचिद्द्रव्याधिकारीचदेवब्राह्मणपूजकः ॥ शिवस्यस्मरणेनिष्ठःसत्यधर्मपरायणः ॥ २६१ ॥ एकस्मिन्समये
विप्रकृतंकर्मातिदारुणम् ॥ स्वगोत्रवनिताचावैगर्भपातमथाऽकरोत् ॥ २६२ ॥ तेनपापानुसारेणगतोसौयमशासनम् ॥ यमलो

पु कात्पारिभ्रष्टश्चागतोधरणीतले ॥ सजरोगेणसततंपीडयमानकलेवरः ॥ २६३ ॥ १ । ५ । ८ । १६ । २० । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि संहि
७ ७१ ॥ ७२ अथलोभयोगः ॥ वैश्योजन्मांतरेचैववैश्यकर्मपरायणः ॥ क्रयविक्रयकर्ताचवाणिज्येचपरायणः ॥ २६४ ॥ लोभासक्तेन
वैश्येनब्राह्मणस्यहृतंधनम् ॥ नदत्तंतेनतत्तस्मैसमृतः पापभागसौ ॥२६५ ॥ पापाच्चनरकेगत्वाह्यपिवर्षसहस्रकम् ॥ कीटयोनिशतंभुक्त्वा
काकयोनौतथापुनः ॥ ततोमानुष्येवैयातोलोभाक्रांतोतिदुःखितः ॥ २६६ ॥ १ । ६ । १० । १५ । २० । २५ । ३० । ३५ । ३८ ।
एतद्वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि८०॥७३अथलोभाख्ययोगःप्रकथ्यते ॥ पूर्वजन्मनिविप्रोसौश्रीगोपालस्यसन्निधौ ॥ प्रवर्षणःसमाख्यातः
पत्नीपुत्रसमन्वितः ॥२६७॥ ससद्विद्योपजीवीचकृत्वापौराणिकींकथाम् ॥ तत्सकाशात्कृतंद्रव्यंबहुकालगतागतैः ॥२६८॥ एकदातुह्यसौ
दानंगृहीत्वासचहर्षितः ॥ सविप्रः पञ्चतांप्राप्तः सगत्वायमशासनम् ॥ २६९ ॥ पुनर्वैमानुषोभूत्वाह्यत्रजन्मनिदारिद्रता ॥ २७० ॥ १ ।
२ । ८ । ११ । २० । ३४ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७८ ॥ ७४ अथलेहयोगः ॥ लक्ष्मणेवैपुरेदेवबाहुजः करुणाकरः ॥ द्रव्यंतुवि
पुलंकृत्वाकार्पण्येनविमोहितः ॥२७१॥ नदानंनचभोज्यंचनश्राद्धंनद्विजार्पणम् ॥ एवंनिवसतस्तत्रबहुवर्षगतागतैः ॥२७२॥ आयुषस्तुस
माप्तित्वात्समृतःकालचोदितः ॥ पापात्पापफलंभुक्त्वापुण्याच्चमानुषोधुना ॥२७३ ॥ गौरांगश्चपलोवक्तादुराचारीदुराशयः ॥ १ । ४ । ८
१० । २० । २८ । ३३ । ३५ । ३८ । ४० एतद्वर्षेषुमहाकष्टंजायतेनात्रसंशयः ॥ २७४ ॥ परमायुर्वर्षाणि ६८ ॥ ७५ अथलालाकांति
योगः ॥ आसीज्जन्मांतरेचैवकर्णोनामचबाहुजः ॥ किंचिद्भूमिपतिस्तत्रचोग्रदंडःप्रतापवान् ॥ २७५ ॥ देशेमरुस्थलेचैवन्यवसत्पारि १३
वारयुक् ॥ क्षात्रधर्मेरतःसोपितथादानार्चनेद्विज ॥ २७६ ॥ एकस्मिन्समयेविप्रकृतंकर्मसुदारुणम् ॥ ब्राह्मणस्यहृतंद्रव्यंनदत्तंलोभ

हेतुना ॥२७७॥ सगत्वायमलोकंचभुक्त्वानरकजंफलम् ॥ पुनर्वैमानुषोभूत्वाचागतोधरणीतले ॥२७८॥१। ४। ८। १३। १७। २०। २८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५९ ॥ ७६ अथरेचकयोगः ॥ पूर्वींचितापुरेरम्येवसंतिबहवोजनाः ॥ सदाशिवःसमाख्यातःपत्नी तस्यातिचंचला ॥ २७९ ॥ रहितोधर्मकर्मभ्यांपरवंचनतत्परः ॥ एकस्मिन्समयेविप्रकृतंतत्कर्मदारुणम् ॥ २८० ॥ मिथ्यापवादवादे नपरद्रव्यंहृतंमहत ॥ प्राप्तेवार्द्धक्यसमयेगोदानंचकृतंखलु ॥ २८१ ॥ अत्रजन्मनिधनीमानीतेजस्वीबहुधार्मिकः ॥ २८२ ॥ १। ३। ५। ८। १६। २०। २५। ३३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६६ ॥ ७७ अथरंध्रयोगः ॥ अथपांचालदेशेतुबाहुजःशिवपू जकः ॥ कृतानितत्रदानानिपर्वस्वपिविशेषतः ॥ २८३ ॥ सूर्य्यस्याराधनेनिष्ठःसर्वपापविवर्जितः ॥ गुरोरवज्ञयाचासौघोरेचनरके गतः ॥ २८४ ॥ कतिवर्षसहस्रांतेनरकाद्भुविमानुषः ॥ नानाकष्टसमाकीर्णोनानाचिह्नैश्चचिह्नितः ॥ किंचिद्धनीमनोत्साहीभ्रमंश्च बहुकालतः ॥ २८५ ॥ १। २। ४। ६। ८। १२। १७। २५। ३०। ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ ७८ अथरेज्जुकीयोगः ॥ कश्चिद्द्विजकुलेपूर्वंचांत्रवेद्येवसन्नपि ॥ धर्मदेवःसमाख्यातःपत्नीपुत्रसमन्वितः ॥ २८६ ॥ शिवार्चनेसदानिष्ठः पत्नीतस्यपतिव्रता ॥ परस्त्रींपरद्रव्यंचगृहीत्वाविविधैश्छलैः ॥ २८७ ॥ राजकन्यांविप्रकन्यांबाहुजांपादजांतथा ॥ अगम्यागमनंकृ त्वामृत्वातुनरकेगतः ॥ २८८ ॥ बहुवर्षांतरेविप्रमानुषोपिततोऽधुना ॥ चंचलश्चतुरोवक्तापाखंडाऽऽचरणेरतः ॥ २८९ ॥ १। ३। ६। ९। १५। २०। २५। ३२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६५ ॥ ७९ अथराचकीयोगः ॥ गौरीकुमारिकाखंडेवैश्योनामक दर्जकः ॥ बहुद्रव्यान्वितःसोपिकदन्नंचभुनक्तिसः ॥ २९० ॥ एकस्मिन्समयेविप्रपितृष्वसासमागता ॥ नादरंचददौकिंचित्तिरस्का

रमथाऽकरोत् ॥ २९१ ॥ विमुखाचगतासापिशापंदत्त्वाचदुष्करम् ॥ विषदोषेमृतोवैश्यस्तिर्य्यग्योनौपुनःपुनः ॥ ततोमनुष्यतांयातः
पीड्यमानकलेवरः ॥ २९२ ॥ १ । ४ । ८ । १६ । २४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ८० अथरापतियोगः ॥ आसीज्जन्मां
तरेचैवभिल्लोनामगुणाकरः ॥ परपीडाप्रदत्तातुबहुवर्षगतागतैः ॥ २९३ ॥ एकस्मिन्समयेविप्रप्रावृष्यपिवनांतरे ॥ दृष्ट्वापथिकमा
यान्तंब्राह्मणंदीनदुर्बलम् ॥ २९४ ॥ दत्तानितस्मैवस्त्राणिभोजनानिविशेषतः ॥ तेनपुण्यावशेषेणसजातश्चात्रसुंदरः ॥ धनधान्य
समायुक्तःपुत्रस्त्रीभिश्चसंयुतः ॥ २९५ ॥ १ । ३ । ६ । ९ । १३ । २० । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ ८१ अथरेपन
योगः ॥ चंद्रागिरेश्चनिकटेब्राह्मणःशास्त्रपारगः ॥ महालोभेनसंयुक्तस्तेनकोपिनपाठितः ॥ २९६ ॥ एतत्पापफलेनाऽसौघोरंचनरकंग
तः ॥ कृमियोनिशतंभुक्त्वाकीटभृंगेषुपुत्रक ॥ २९७ ॥ ततोवैमानुषीयोनौप्रथमाब्देसकष्टितः ॥ १ । ४ । ८ । ११ । २४ ।
३२ । ३६ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ८२ अथलोमसयोगः ॥ अथयोलोमसेजातःसमनुष्योगुणाधिकः ॥ सर्व
कार्य्यप्रकर्ताचसर्वपूज्योधनाधिपः ॥ २९८ ॥ आसीज्जन्मांतरेचैवबाहुजःपुण्यपत्तने ॥ किंचिद्देशाधिकारीचदानपुण्यपरा
यणः ॥ २९९ ॥ सुधीश्चशास्त्रवेत्ताचकार्यकर्त्ताविचक्षणः ॥ एकस्मिन्समयेविप्रस्वभार्यात्यागनंकृतम ॥ ३०० ॥ सामृता
चातिकष्टेनपापमाचरितंत्विदम् ॥ अत्रजन्मनिभवेद्दुःखीसंग्रहण्यतिसारतः ॥ ३०१ ॥ १ । ३ । ४ । ८ । १३ । १८ ।
२२ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ८३ अथलोपपायोगः ॥ आसीज्जन्मांतरेचैवब्राह्मणःशास्त्रवर्जितः ॥ परमो
दरश्चातुलश्चमयायांदक्षिणेतटे ॥ ३०२ ॥ कृषिकर्मोद्यमेव्यग्रोधान्यराशिःकृतोभृशम ॥ एकस्मिन्समयेविप्रतीर्थावगाहनंकृतम ॥

॥ २०३ ॥ दत्तानितेनदानानिचंद्रग्रस्तेचपर्वणि ॥ अत्रजन्मनिधनाढ्योसौपुत्रकन्यासमन्वितः ॥२०४॥ प्रथमतृतीयवर्षेषष्ठवाद्वादश
पिवा ॥ पीड्यतेह्येषुवर्षेषुविंशतिवर्षेविशेषतः ॥ २०५ ॥ परमायुर्वर्षाणि ८० ॥ ८४ अथलतार्कयोगः ॥ आसीज्जन्मांतरेचैववंगदेशेनृ
पोत्तम ॥ वीरसिंहःसमाख्यातःपत्नीपुत्रसमन्वितः ॥ २०६ ॥ कृतानितेनपुण्यानिब्राह्मणेभ्योविशेषतः ॥ एकस्मिन्समयेविप्रद्रव्यलोभे
नचेतसा ॥ २०७ ॥ प्रजानांलुंठनात्पापात्सगत्वायमशासनम् ॥ यमलोकात्परिभ्रष्टश्चागतोभूमिमंडले ॥ २०८ ॥ १ । ३ । ८ । ११ ।
१५ । २० । २४ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ८५ अथलालयोगः ॥ काचिद्वेश्याकुलेपूर्वंचंद्रभागानदीतटे ॥
सर्वेष्वंगेषुरमणीप्रीतिकृच्चंद्रवन्मुखी ॥ कृतानिबहुपापानितत्सकाशात्कृतंधनम् ॥ २०९ ॥ प्राप्तेवार्द्धक्यसमयेगोदानंगृहदानकम् ॥
तडागोवापिकाभव्याःकारिताश्चत्विमेखलु ॥ २१० ॥ सामृत्वात्रिदिवंगत्वागंधर्वेनगरेद्विज ॥ पूर्वपुण्यावशेषेणसाऽधुनापुरुषोत्रवै ॥
गौरांगोभव्यदेहश्चधनधान्यसमन्वितः ॥ २११ ॥ १ । ३ । ९ । १२ । १५ । २० । २७ । ३० । ३५ । ३६ । ४० अस्मिन्वर्षे
षुकष्टम् ॥ परमायुर्वर्षाणि ७७ ॥ ८६ अथलिंगघोषीयोगः ॥ लिंगघोष्यांचयोजातःसपुमांश्चंचलःसदा ॥ गीतवाद्यरतःसोपिसाहसी
चसदाव्ययी ॥ २१२ ॥ वंशवृद्धिस्तथाकिंचित्पीड्यमानकलेवरः ॥ आसीत्पूर्वंधनाढ्यश्चबाहुजोबलविक्रमी ॥ निर्दग्धंचपुरंरम्यंते
नासौ कष्टसंयुतः ॥ २१३ ॥ १ । ४ । ८ । १२ । २० । २८ । ३० । ३५ । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ८७ अथलीक
संसयोगः ॥ इंद्रप्रस्थपुरेरम्येपूर्वजन्मनिपादजः ॥ गुणीदासःसमाख्यातःपत्नीपुत्रसमन्वितः ॥ २१४ ॥ शिवस्यध्याननिरतोविप्राणां
खलुवंचकः ॥ एकस्मिन्समयेविप्रब्राह्मणाश्चनिमंत्रिताः ॥ २१५ ॥ भोजनंविविधंदत्तंपकान्नंमिष्टशष्कुली ॥ दक्षिणांचततोदत्त्वासायं

भु कालोवभूवह ॥ ३१६ ॥ तदाविप्रःसमायातःशुष्कदेहोभयानकः ॥ क्षुधार्तोयाचितंतेननदत्तंतस्यवैक्वचित् ॥ ३१७ ॥ विमुखोब्राह्मणो संहि
९ यातः पापमाचरितंत्विदम् ॥ मृत्वायमपुरंप्राप्तःपुण्यात्स्वर्गेतथाऽनघ ॥ ततोवैमानुषीयोनौपीडयमानकलेवरः ॥ ३१८ ॥ ३ । १३ ।
२० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६५ ॥ ८८ अथलाजवर्तकयोगः ॥ श्रीह्लदेनगरेपूर्वंबाहुजःसुंदरस्तथा ॥ चिंतामणिःसमाख्यातः
कन्यापुत्रसमन्वितः ॥ ३१९ ॥ नानाविलासविभवैःशिवस्यध्यानतत्परः ॥ कृतानिपुण्यदानानिमासिमासिचहायने ॥ ३२० ॥
आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ पुनरागत्यमेदिन्यांधनधान्यसमन्वितः ॥ ३२१ ॥ १ । ३ । ५ । ८ । १३ । १७ । २२ ।
२६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६६ ॥ ८९ अथलचातिकयोगः ॥ अथचिंतापुरेपूर्वंशोणभद्रस्यपश्चिमे ॥ वैश्योनामप्रवीरश्चगोधान्य
धनसंकुलः ॥ ३२२ ॥ कृतानिबहुपापानिपश्चात्पुण्यंकृतंमहत् ॥ समृतश्चातिकष्टेनपापाच्चनरकंगतः ॥ ३२३ ॥ पुण्यात्पुण्यफलंसम्य
क्ततोवैमानुषोऽधुना ॥ चंचलश्चातिचतुरोमनस्वीतेजसायुतः ॥ ३२४ ॥ १ । ३ । ८ । १३ । २० । २८ । ३१ वर्षेषुकष्टम् ॥ परमायु
र्वर्षाणि ६७ ॥ ९० अथरुजायोगः ॥ कश्चिद्वैश्यकुलेपूर्वंगोदेचनगरेखलु ॥ चौलदासइतिख्यातःसपत्नीकः सपुत्रकः ॥ ३२५ ॥ राज
कार्य्येसदानिष्ठश्चोग्रदंडःप्रतापवान् ॥ एकस्मिन्समयेविप्रब्राह्मणाश्चनिमंत्रिताः ॥ ३२६ ॥ आदरंबहुधाकृत्वाभोजनंचददौभृशम् ॥
तन्मध्येह्यामिषंदत्तंदृष्ट्वाचकुपिताद्विजाः ॥ ३२७ ॥ सर्वैशापंददुस्तंवैराक्षसोपिबभूवह ॥ इदंजन्मतृतीयंतुसर्वसौख्येन संयुतम् ॥ ३२८॥
१ । २ । ४ । ८ । १२ । १७ । २० । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७ ॥ ९१ अथरुजार्तियोगः ॥ अथपंपापुरेदेशेब्राह्मणः १३
शास्त्रकोविदः ॥ धर्मदत्तंइतिख्यातःपत्नीतस्यपतिव्रता ॥ ३२९ ॥ कृतानितेनपुण्यानितीर्थेतीर्थेविशेषतः ॥ एकस्मिन्समयेविप्रकृतं

कर्मजुगुप्सितम् ॥ ३३० ॥ मिथ्यापवादनिरतःपरवृत्तिहरोभृशम् ॥ तेनपापानुसारेणगतोसौयमलोककम् ॥ ३३१ ॥ षष्टिवर्षसहस्रांते
मानुषोपिततोधुना ॥ गौरोरुणोमध्यदेहोदक्षिणांगेप्रचिह्नितः ॥ मातृपितृवियोगीचसाहसीधर्मवानपि ॥ ३३२ ॥ १ । ३ । ५ । ८ । १०।
१५ । २० ।२४। ३० । ३६ । ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६८ ॥ ९२ अथरावलायोगः ॥ कश्चिद्वैकीकटेदेशेनर्तकोगुणगायकः॥
नृपस्याग्रेप्रतिष्ठावान्धनधान्यसमन्वितः ॥ ३३३ ॥ नानाविलासविभवैःसुखानंदेनसंयुतः ॥ एकस्मिन्समयेविप्रकृतंकर्म
जुगुप्सितम् ॥ ३३४ ॥ मित्रस्यभवनंरम्यंदग्धंतुकृतवान्भृशम् ॥ गोपितोघस्मरस्तेनपापमाचरितंत्विदम् ॥ ३३५ ॥ पापाच्चनरकं
गत्वातिर्यग्योनौपुनःपुनः ॥ ततोवैमानुषीयोनौसुन्दरश्चसुलोचनः ॥ ३३६ ॥ १ । ४ । ६ । १० । १७ । २२ वर्षेषुकष्टम् ॥ परमा
युर्वर्षाणि ८१ ॥ ९३ अथरघुवंशयोगः ॥ कुलाचलाद्रिनिकटेब्राह्मणश्चतपोधनः ॥ शिवस्यस्मरणेनिष्ठःपरमोदारश्चवत्सलः ॥ ३३७ ॥
तपसोंतेतदाविप्रकृतंकर्मजुगुप्सितम् ॥ विद्यार्थीचापिपुत्रश्चलकुटेनप्रताडितः ॥ ३३८ ॥ समृतस्तेनदुःखेनपापमाचरितंत्विदम् ॥
तेनपापानुसारेणसविप्रोनरकंगतः ॥ ३३९ ॥ नरकान्निःसृतःसोपिमानुषोपिततोऽधुना ॥ चंचलश्चातिचतुरोभूत्वापिम्रियतेशिशुः ॥
॥ ३४० ॥ १ । ३ । ८ । १२ । १८ । २० । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६१ ॥ ९४ अथरावटीयोगः ॥ आसीज्जन्मां
तरेचैवबाहुजःशिवपूजकः ॥ परमानंदविख्यातःपत्नीतस्यकलिंगिनी ॥ ३४१ ॥ जीवानांघातनेव्यग्रःपरस्त्रीरतिलोलुपः ॥ पराप
वादनिरतश्चात्मार्थेविनियोगिकः ॥ ३४२ ॥ एकस्मिन्समयेविप्रदेवाद्गंगातटेगतः ॥ समृत्वात्रिदिवंगत्वापापाच्चनरकंतथा ॥ पुन
रागत्यमेदिन्यांकिंचित्पुण्यप्रभावतः ॥ ३४३ ॥ १ । ३ । ८ । ११ । १५ । २० । २४ । २८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥

९५ अथरुक्मयोगः ॥ चक्रवर्तीमहाराजः सार्वभौमाधिपस्तदा ॥ अतिपुण्यार्जनंकृत्वासहसैन्येनराजते ॥ ३४४ ॥ ब्राह्मणे
भ्योगृहस्थेभ्यः सत्पात्रेभ्योददौधनम् ॥ एवंनिवसतस्तत्रबहुवर्षगतागतैः ॥ ३४५ ॥ आयुषस्तुसमाप्तित्वात्सराजापंचतांगतः ॥ संहि.
पापात्पापफलंभुक्त्वापुण्यात्पुण्यफलंतथा ॥ ३४६ ॥ षष्टिवर्षसहस्रांतेचागतोधरणीतले ॥ गोधूमाकारवद्देहोयौवनेकष्टसंयुतः ॥
॥ ३४७ ॥ १ । ९ । १० । १५ । २० । २४ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ ९६ अथरोषयोगः ॥
विंध्याद्रिनिकटेपूर्वंतपस्वीचजितेंद्रियः ॥ गौरीशिवात्मकंध्यानंकृतंतेननिरंतरम् ॥ ३४८ ॥ एकस्मिन्समयेविप्रभाविनोर्थस्य
गौरवात् ॥ एकातुस्वैरिणीभव्यासुन्दरीचंद्रवन्मुखी ॥ ३४९ ॥ बलादाकर्षितातस्यांकृत्वासुरतसंगमम् ॥ किंचित्काला
तरेचैवसविप्रःपंचतांगतः ॥ ३५० ॥ ततोवैमानुषीयोनौमर्त्यलोकेसमुद्भतः ॥ ३५१ ॥ ३ । ८ । ११ । १७ । २० । २४ । ३०
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ५८ ॥ ९७ अथरूपावलियोगः ॥ अनिरुद्धपुरेरम्येतत्रराजाप्रतापवान् ॥ धर्मशीलोमहातेजाः सत्यवार्ता
परायणः ॥ ३५२ ॥ कृतानिसर्वदानानिकन्योद्वाहशतानिच ॥ गोदानमश्वदानंचतथादानंचवेश्मनाम् ॥ ३५३ ॥ प्रस्थंप्रस्थं
ददौस्वर्णंब्राह्मणेभ्योविशेषतः ॥ एवंनिवसतस्तत्रबहुवर्षगतागतैः ॥ ३५४ ॥ सराजापंचतांप्राप्तोगतइन्द्रपुरंतदा ॥ इन्द्रलोका
त्परिभ्रष्टश्चागतोभूमिमंडले ॥ ३५५ ॥ सर्वेष्वङ्गेषुचारोग्यंबलाढ्यःसर्वपूजकः ॥ राजवत्सुखसौभाग्यंलभतेवांछितंफलम् ॥
॥ ३५६ ॥ ३९ वर्षेमृत्युः ॥ ९८ अथरवेर्मुखयोगः ॥ अथशम्भलदेशेतुबोधनोनामब्राह्मणः ॥ ब्रह्मकर्मपरिभ्रष्टः क्रय
विक्रयणेरतः ॥ ३५७ ॥ धनधान्यसमायुक्तः कार्पण्येनविमोहितः ॥ एकस्मिन्समयेविप्रब्राह्मणस्यप्रसंगतः ॥ ३५८ ॥ तीर्था १४

नगाहनंकृत्वातथादानार्चनंकृतम् ॥ एवंनिवसतस्तत्रबहुवर्षगतागतेः ॥ ३५९ ॥ आयुषस्तुसमाप्तित्वात्सम्मृतस्त्रिदिवंगतः ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गंतथाऽनघ ॥ ३६० ॥ ततोवैमानुषीयोनौचागतोधरणीतले ॥ ३६१ ॥ १ । २ । ४ ७ । ९ । १५ । २० । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ९९ अथराज्याभिषेकयोगः ॥ आसीज्जन्मांतरेचैव भीष्मकोनामब्राह्मणः ॥ कृतानितेनपुण्यानिमासिमासिचहायने ॥ ३६२ ॥ एकस्मिन्समयेविप्रब्राह्मणस्यहृतंधनम् ॥ नदत्तं लोभहेतोश्चपापमुग्रमुपार्जितम् ॥ यमलोकेऽभवत्प्राप्तस्ततोवैमानुषोऽधुना ॥ ३६३ ॥ २ । ५ । १० । २० । २८ । ३५ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७६ ॥ १०० अथरोकांगीयोगः ॥ देशेचोत्कलकेचैवनृसिंहोब्राह्मणःसच ॥ देवताराधनेमग्नःपरि वारस्यपोषकः ॥ ३६४ ॥ वामाचाररतोधीमान्बहुशास्त्रस्यपाठकः ॥ सर्वजीवबलिंदत्त्वादेव्यैचैवविशेषतः ॥ ३६५ ॥ एकस्मिन्समये विप्रमद्यपानंकृतंभृशम् ॥ उन्मत्तोपिबभूवापिकृतंकर्मजुगुप्सितम् ॥ ३६६ ॥ आत्मजस्यशुभापत्नीतस्यांतुरमणंकृतम् ॥ तेनपापानुसारेण कुष्ठरोगेणवैमृतः ॥ शतजन्मानिकीटाश्चमानुषोपिततोऽधुना ॥ ३६७ ॥ १ । ३ । ६ । ९ । ११ । १८ । १९ । २० । २८ । ३१ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७ ॥ १०१ अथरुस्वरयोगः ॥ आसीज्जन्मान्तरेचैवकेशवोनामपादजः ॥ सरस्वत्याश्चनिकटेन्यव सत्परिवारयुक् ॥ ३६८ ॥ धनधान्यसमृद्धोपिस्वज्ञातीयाश्चभोजिताः ॥ अभ्यागताश्चभोविप्रमासिमासिचहायने ॥ ३६९ ॥ एकस्मि न्समयेविप्रगोगृहंचतदाऽकरोत् ॥ तेनाऽयंबाहुजोजातोराजरोगेणकष्टितः ॥ ३७० ॥ २ । ४ । ८ । १२ । १८ । २० । २८ । ३६वर्षेषु कष्टम् ॥ परमायुर्वर्षाणि ७४ ॥ १०२ ॥ अथलक्ष्णियोगः ॥ विजयाद्रिसमीपेचवैश्योनामकृपाकरः ॥ क्रयविक्रयकर्ताचद्रव्यस्योत्पाद

नैरतः ॥ ३७१ ॥ श्रुत्वातुपुस्तकंनित्यंकथांचविविधांतथा ॥ सस्नातोमृगगेभानौमासमेकंनिरंतरम् ॥ ३७२ ॥ सम्प्राप्यभवनेशीघ्रंकृ
तंकर्मचदारुणम् ॥ ज्येष्ठभ्रातुश्चयापत्नीबलादाकर्षिताखलु ॥ ३७३ ॥ पापमाचरितंतेनकृत्वाभोगंनिरंतरम् ॥ प्राप्तेवार्द्धक्यसमयेसमृत
स्त्रिदिवंगतः ॥ तिर्यग्योनिशतंभुक्त्वापश्चाद्वैमानुषोऽधुना ॥ ३७४ ॥ १ । ३ । ८ । १७ । २० । २८ । ३२ वर्षेषुकष्टम् ॥ परमायुर्वर्षा
णि ८१ ॥ १०३ अथलुंठनयोगः ॥ नीलकंठेचनगरेवसंतिबहवोजनाः ॥ तत्रशूद्रोवसत्त्वेकः कृपणोनामविश्रुतः ॥ ३७५ ॥ कृषिवाणि
ज्यनिरतोबहुवर्षगतागतैः ॥ एकदाचंद्रमोग्रस्तेमलमूत्रंतथाऽकरोत् ॥ ३७६ ॥ तेनपापानुसारेणकुंभीपाकंतदागतः ॥ कतिवर्षसह
स्रांतेमानुषोपिततोऽधुना ॥ ३७७ ॥प्रशस्तवक्तानिपुणोयौवनेकष्टसंयुतः ॥ ३७८ ॥ १ । ३ । ७ १३ । १८ । २३ । ३१ वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ७८ ॥ १०४ अथलोकपालयोगः ॥ आसीत्पूर्वभवेकश्चिद्विष्णुभक्तश्चपादजः ॥ कृतानितेनपुण्यानिसाधूनांचप्रसंगतः ॥
॥ ३७९ ॥ एकस्मिन्समयेविप्रप्रयागेह्यगमत्तदा ॥ सर्वस्वंविधिनादत्त्वासत्पात्रायद्विजायच ॥ ३८० ॥ वेण्यांमग्नोबभूवापिगतइंद्र
पुरंतदा ॥ बभूवबाहुजःसोपिचक्रवर्तीप्रतापवान् ॥ इदंजन्मतृतीयंतुसुखसौभाग्यसंयुतम् ॥ ३८१ ॥ १ । ३ । ५ । ८ ।
११ । १७ । २० । ३३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८९ ॥ १०५ अथलोकाधीशयोगः ॥ हस्तिनानगरेरम्येवसंतिबहवोजनाः ॥
चक्रपाणिःसमाख्यातोब्राह्मणःशास्त्रकोविदः ॥ ३८२ ॥ नृपस्याग्रेप्रतिष्ठावान्महोदारश्चसत्क्रियः ॥ तत्रभूपानुकम्पायाद्रव्यंतुविविधं
कृतम् ॥ ३८३ ॥ कन्योद्वाहंतथाकृत्वागोत्रकन्याविवाहिताः ॥ एवंनिवसतस्तत्रबहुवर्षगतागतैः ॥ ३८४ ॥ आयुषस्तुसमाप्तित्वात्स
विप्रःपंचतांगतः ॥ अंत्रवेद्येसमुत्पन्नःसुखानंदेनसंयुतः ॥ ३८५ ॥ कन्याश्चबहवोजाताःकिंचित्पुत्रधनान्वितः ॥ गुप्तंपापं

कृतंतेनदक्षिणांगेप्रचिह्नितः ॥ ३८६ ॥ १ । ३ । ८ । १३ । १७ । २१ । २५ । २८ । ३१ । ३६ वर्षेषुकष्टम् ॥ परमा
युर्वर्षाणि ७७ ॥ १०६ अथयवकयोगः ॥ अथवाराणसीक्षेत्रेबाहुजोधनवानपि ॥ क्षात्रधर्मंपरित्यज्यक्रयविक्रयकारकः ॥ ३८७ ॥
कृतानितेनद्रव्याणिकार्पण्येनबहूनिच ॥ एकस्मिन्समयेविप्रद्रव्यलुब्धेनचेतसा ॥ ३८८ ॥ परदेशेगतोदैवात्तत्रप्राप्तिःकृताभृशम ॥
परस्त्रीगमनासक्तोबहुवर्षगतागतैः ॥ ३८९ ॥ सक्षत्रःपंचतांप्राप्तोयमलोकेसमागतः ॥ षष्टिवर्षसहस्रांतेचागतोधरणीतले ॥
नात्युच्चोनातिह्रस्वश्चनगौरोनातिश्यामलः ॥ ३९० ॥ १ । ३ । ६ । ८ । ११ । १६ । २० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
६८ ॥ १०७ अथवार्जकयोगः ॥ अथचंद्राद्रिनिकटेबाहुजःकृषिकर्मकः ॥ सेवकेतिसमाख्यातःपत्नीपुत्रसमन्वितः ॥ ३९१ ॥
शिवस्यस्मरणेमग्नःशौचाचारविवर्जितः ॥ एकस्मिन्समयेविप्रसीमावादरतस्तदा ॥ ३९२ ॥ स्वगोत्रेणकृतंयुद्धमतिप्रबलदंडिना ॥
घातितःसोपिबहुभिःप्रहारैरतिदारुणैः ॥ ३९३ ॥ संग्रामभूमौसमृतोगत्वाचैंद्रपुरंतदा ॥ पुनरागत्यमेदिन्यांकिंचित्पुण्यप्रभा
वतः ॥ ३९४ ॥ उज्ज्वलःसुखसंयुक्तःपरोपकरणेरतः ॥ वामनेत्रविकारीचभुजदेशेप्रचिह्नितः ॥ ३९५ ॥ १ । ४ । ८ । १६ २२ वर्षेषु
कष्टम् ॥ परमायुर्वर्षाणि ७६ ॥ १०८ अथरुणहायोगः ॥ जंज्वालेनगरेपूर्वंमहाक्षत्रीनराधिपः ॥ सशूद्रकुलसंभूतश्चोग्रदंडःप्रतापवान्
॥ ३९६ ॥ जयराजइतिख्यातःसपत्नीकःसपुत्रकः ॥ नानायुद्धंकृतंतत्रजित्वाशत्रुबलंबलात् ॥ ३९७ ॥ बहुयज्ञाःकृतास्तेनचातुर्मासव्र
तंतथा ॥ सराजापंचतांप्राप्तःपत्नीजातासतीतदा ॥ ३९८ ॥ उभयोःकर्मणोर्हेतोरिंद्रलोकंसमागतौ ॥ षष्टिवर्षसहस्रांतेमानुषोपिततोऽ
धुना ॥ ३९९ ॥ १ । ४ । ८ । १३ । १७ । २० । ३० । ३६ । ३८ । ४१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० ॥ १०९ अथरौद्र

योगः ॥ गांधारेनगरेपूर्ववसंतिबहवोजनाः ॥ तत्रत्वेकोद्विजःशुद्धःशास्त्रज्ञोबहुभाषकः ॥४००॥ अहंकारेचनिरतस्तेनकोपिनपाठितः॥
परस्त्रीलोलुपःसोपिपरद्रव्यापहारकः ॥ ४०१ ॥ एकस्मिन्समयेविप्रगयाश्राद्धमथाऽकरोत् ॥ संप्राप्यभवनंशीघ्रंकृतंकर्मसुदारुणम्
॥ ४०२ ॥ भगिनीपुत्र्यांचगमनंहठात्कृत्वाद्विजोत्तम ॥ संप्राप्ययमलोकंचभुक्त्वाभोगांश्चशाश्वतान् ॥ ४०३ ॥ ततोवैमानुषीयोनौदुः
खेनातिप्रपीडितः ॥ ४०४ ॥ १ । ४ । ८ । १२ । २० । २४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ ११० अथद्वितीयरौद्रयोगः ॥
चित्रकूटाद्रिनिकटेब्राह्मणोवेदपारगः ॥ सत्यधर्मार्जनेनिष्ठःपठनेपाठनेरतः ॥ ४०५ ॥ नृपस्याग्रेप्रतिष्ठावान्परमात्मसुचिन्तकः ॥
एकस्मिन्समयेविप्रतीर्थावगाहनेगतः ॥ ४०६ ॥ तत्रशूद्रस्यदुहितासुंदरीकामुकीप्रिया ॥ बलादाकर्षितातेनमोहनोन्मादनेखलु॥ ४०७ ॥
पत्नीवत्स्थापनंकृत्वातथाभोगंनिरंतरम् ॥ किंचित्कालांतरेविप्रसाचनिष्कासिताहठात् ॥ ४०८ ॥ तेनपापानुसारेणसविप्रोनरकेगतः ॥
बहुवर्षसहस्रांतेमानुषोधरणीतले ॥ ४०९ ॥ आयुर्वर्षाणि ६९ ॥ १११ अथतृतीयरौद्रयोगः ॥ कश्चित्क्षात्रकुलेपूर्वमंशुमानोमहाबलः ॥
सहसैन्येनराजतेस्मप्रतापीचगुणाकरः ॥ ४१०॥ पत्नीदेवमतीतस्यपतिसेवापरायणा ॥ समरेषुजयंनित्यंकृत्वावशेवसुंधराम्॥ ४११ ॥
एकदाचंद्रमोग्रस्तेकृत्वादानंविशेषतः ॥ सत्पात्रेचद्विजेदत्तंगोभूम्यश्वहिरण्यकम् ॥ तेनपुण्यप्रभावेणचात्रजन्मसुखाधिकम् ॥ ४१२ ॥
१ । ५ । १० । १६ । २४ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ इतिश्रीभृगुसंहितायांयरलवादियोगकथनंनामनवमंप्रकरणम् ॥ ९ ॥
अथशवर्गयोगाः ॥ १ अथशिवायोगः ॥ शिवायोगेचयोजातःपूर्वजन्मनिब्राह्मणः ॥ सिद्धदेवःसमाख्यातःपत्नीतस्यमनोहरा ॥ १ ॥
धनधान्यसमृद्धस्तुतपश्चर्य्यारतःसदा ॥ सुशीलातस्यपुत्रीचपितृभक्तिपरायणा ॥ २ ॥ साबालायुवतीजातापतियोग्याबभूवह ॥ उद्वाह

भक्तास्तस्यावृद्धविप्रायदापिता ॥ ३ ॥ तस्यद्रव्याणिसर्वाणिगृहीत्वाविविधैश्छलैः ॥ पुत्रावित्तःकृताभागाबहुवर्षगतागतः ॥ ४ ॥
सविप्रःपंचतांप्राप्तःपापाच्चनरकेगतः ॥ पुण्यात्स्वर्गेऽभवद्वासोह्यपिवर्षसहस्रकम् ॥ ५ ॥ ततोवैमानुषोजातश्चात्रवेद्येतथाधुना ॥
ईषद्गौरोमध्यमश्चदक्षिणांगेप्रचिह्नितः ॥ ६ ॥ प्रथमेद्वितीयेवर्षेलूतावाथव्रणानिच ॥ षष्ठाऽष्टमेचविकलःशीतलायाज्वरेणच ॥ ७ ॥
दशमैकादशेवर्षेपीडयमानकलेवरः॥तथारुद्रार्कवर्षेस्मिन्मंगलंप्राप्यकामिनम्॥८॥विंशतिवर्षेभवेत्पुत्रश्चतुर्विंशेरुजाकुलः॥ खवेदाब्देगतेक
ष्टंषष्टिरब्दांश्चजीवति॥९॥२अथसत्ययोगः॥आसीज्जन्मांतरेचैवब्राह्मणःशास्त्रकोविदः॥दुःखंतुसर्ववस्तूनांभोजनंचयदाकदा ॥१०॥नयाच
नंकृतांकिंचिन्नकृतश्चोद्यमःखलु॥पत्नीपतिव्रतातस्यसंतुष्टासर्वदाद्विज ॥ ११ ॥ एकस्मिन्समयेविप्रह्येकविंशद्दिनानिच ॥ महोत्पातोबभूवा
पिपर्जन्यकृद्वलाहकः ॥ १२ ॥ भगवन्नामस्मरन्तौहितूष्णीभूतौचदम्पती ॥ द्वाविंशाहेतुविप्रेणकणभिक्षाकृताद्विज॥१३ ॥ सक्तूनांपि
डनंकृत्वाभोजनार्थेसमाविशत् ॥ विष्णुश्चभिक्षुकोभूत्वाहरेर्नामस्मरन्नगात् ॥ १४ ॥ सक्तुपिंडश्चसजलस्तस्याग्रेचनिवेदितः ॥ आविर्ब
भूवसहसाबिडौजाश्चद्विजोत्तम ॥ १५ ॥ विमानाग्रोपरिस्थाप्यजगामनिजवेश्मनि ॥ बहुवर्षसहस्राणिभुक्त्वास्वर्गभवंफलम् ॥ १६ ॥
ततः पुण्यक्षयेजातेपुनरागत्यभूतले ॥ सुशीलश्चातिभक्तश्चसर्वसम्पद्युतोधुना ॥ १७ ॥ गौरश्चचपलोवक्तादानधर्मपरायणः ॥
॥ १८ ॥ १ । ४ । ७ । ११ । १८ । २८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६१ ॥ ३ अथसौदासयोगः ॥ सभामान्योनरोजातःपूर्वंशूद्रस्य
वैकुले ॥ देशेपांचालकेचैवन्यवसत्परिवारयुक् ॥१९॥ बुद्धिसेनिरितिख्यातापत्नीतस्यमनोहरा ॥ सर्वविद्याविवेकीचसभामानीप्रतिष्ठितः
॥ २० ॥ समंत्रविद्ऽथोभूत्वानृपस्याग्रेप्रतिष्ठितः ॥ नृपानुकम्पयाविप्रराजवत्सुखभोगभाक् ॥ २१ ॥ एकदाद्रव्यलोभेनप्रजानांलुं

ठनंकृतम् ॥ अन्यायात्कुक्कुटोभूत्वातिर्यग्योनिशतंखलु ॥ ततोवैमानुषीयोनौदद्रुकुष्ठसमन्वितः ॥ २२ ॥ १ । ३ । ८ । १४ । १९ । २८ । ३१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ४ अथसात्त्विकयोगः ॥ आसीज्जन्मांतरेचैवतपस्वीसात्त्विकस्त्वसौ ॥ धर्मसेनिरितिख्यातःशिवस्यस्मरणेरतः ॥ २३ ॥ एकांघ्रिभुजमुत्थाप्यनिराहारत्तश्चनिर्जलः ॥ तमसायास्तटेचैवतपश्चर्य्यामथाकरोत् ॥ २४ ॥ एकातुकन्यकाभव्याचाकस्मात्तुतदागता ॥ रूपयौवनलावण्यायथाचेंद्रस्यचोर्वशी ॥ २५ ॥ तपश्चर्य्यांपरित्यज्यनिशम्यव्यसनेरतः ॥ मृताश्चपापबाहुल्यादर्भकाश्चद्विजोत्तम ॥ २६ ॥ समृत्वादिविगत्वातुभुक्त्वाभोगांश्चशाश्वतान् ॥ ततोमानुष्यमापन्नःकुशीलचेष्टयान्वितः ॥ २७ ॥ १ । ३ । ६ । ९ । १२ । १७ । २० । ३० । ३६ । ४० । ४६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७७ ॥ ५ अथसत्यवर्त्तिकयोगः ॥ कश्चिद्वैश्यकुलेपूर्वंधनाढ्योमृदुभाषकः ॥ शौचाचाररतोनित्यमात्मार्थेविनियोगितः ॥ २८ ॥ द्रव्यंतुविपुलंकृत्वाकार्पण्येनविमोहितः ॥ नदानंनचभोक्तव्यंनातिथ्यंश्राद्धकर्मणि ॥ २९ ॥ एकस्मिन्समयेविप्रभगवद्गीताश्रुताखलु ॥ सर्वस्वंविधिनादत्त्वासत्पात्रायद्विजायच ॥ ३० ॥ तेनपुण्यप्रभावेणस्वर्गेगत्वाचवैश्यजः ॥ ततोवैमानुषोजातःसर्वसौख्येनसंयुतः ॥ धनीमानीमहोग्रश्चधर्मकर्म्मार्चनेरतः ॥ ३१ ॥ सज्जनसेवीदयालुश्चब्राह्मणोगुणसागरः ॥ सर्वकर्मविघातीचमधुपानंसदाऽकरोत ॥ ३२ ॥ एकस्मिन्समयेविप्रगुरुपत्नीसमागता ॥ बलादाकर्षितातस्यांहठात्तेनरतिःकृता ॥ ३३ ॥ सतेनैवतुपापेनपशुयोनौबभूवह ॥ जम्बूकोगर्दभोभूत्वासूकरोपिबभूवह ॥ ३४ ॥ महाकटाहनरकेशीतिवर्षसहस्रकम् ॥ ततोवैमानुषोजातोभीषणोभैरवाकृतिः ॥ ३५ ॥ १ । ३ । ८ । १२ । १७ । २१ । २४ । ३० । ३६ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०५ ॥ ६ अथ

संघायोगः ॥ पुराह्याभीरजातिश्चकीकटेह्यवसत्यसौ ॥ गोधनंधनधान्यंचक्रयविक्रयतत्परः ॥ ३६ ॥ तत्सकाशात्कृतंद्रव्यंका
पण्येनविमोहितः ॥ भिक्षुकोद्धारमगमद्दधिभिक्षाचयाचिता ॥ ३७ ॥ नदत्तंतेनवैकिंचिदपभ्रंशंवदंस्तदा ॥ शापंदत्त्वाचवि
प्रोऽसौजगामस्वगृहेतदा ॥ ३८ ॥ तत्पापेनश्रियस्तस्यक्षयंयाताद्विजोत्तम ॥ मृत्वाचनरकेगत्वाकुंभीपाकेतथाभृशम् ॥ बहु
वर्षसहस्रांतेमानुषोपिततोऽधुना ॥ ३९ ॥ १ । ३ । ८ । १३ । १८ । २८ । ३० । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७९ ॥ ७
अथसारार्द्धयोगः ॥ अंगदेशेऽभवत्पूर्वंबाहुजः कृषिकारकः ॥ देवदत्तः समाख्यातःपत्नीद्वयसमन्वितः ॥ ४० ॥ ज्येष्ठातुचंच
लाकिंचित्परपुंसुरताऽधमा ॥ बहुंजनंविलोक्यापितृणवत्त्यागनंकृतम् ॥ ४१ ॥ जगामतीर्थयात्रायांमार्गेमृत्युमुपागता ॥ स्वर्गा
पवर्गभोगश्चततोवैमानुषोऽधुना ॥ कुशलः सर्वधर्मेषुकिंचिद्वित्तसमन्वितः ॥ ४२ ॥ १ । ८ । १६ । २४ । ३४ । वर्षेषुकष्टम् ॥ पर
मायुर्वर्षाणि ७८ ॥ ८ अथसारावलीयोगः ॥ कश्चिद्वैश्यकुलेपूर्वंवंगदेशेवसत्यसौ ॥ केशवेतिसमाख्यातःपत्नीपुत्रसमन्वितः ॥ ४३॥
क्रयविक्रयकर्ताचवाणिज्येचपरायणः ॥ द्रव्यंचविपुलंकृत्वाधर्ममार्गपरायणः ॥ ४४ ॥ एकस्मिन्समयेविप्रकृतंकर्मजुगुप्सितम् ॥ ब्रा
ह्मणानांकृतानिंदासगर्भास्त्रीप्रताडिता ॥ ४५ ॥ सामृतातेनदुःखेनपापमाचरितंत्विदम् ॥ सवैश्यःपंचतांगत्वापापाच्चनरकेगतः ॥ षष्टिव
र्षसहस्रांतेमानुषत्वंततोभुवि ॥ ४६ ॥ १ । ३ । ८ । ११ । १६ । २० । २४ । २९ । ३३ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ ९
अथसनातनयोगः ॥ आसीत्पूर्वेभवेकश्चिद्ब्राह्मणोवेदपारगः ॥ चित्रदेवःसमाख्यातः पत्नीतस्यातिकर्कशा ॥ ४७ ॥ अर्भकान्पाठयेत्त
त्रस्मार्तेश्रौतेचनैष्ठिकः ॥ एकस्मिन्समयेतत्रलोभाकृष्टेनचेतसा ॥ ४८ ॥ धनंहृतंस्वशिष्यस्यतेनवैविविधैश्छलैः ॥ पापात्पापफलं

मुक्तातत्तोवैमानुषोऽधुना ॥ ४९ ॥ २ । ५ । ८ । १३ । १७ । २१ । २८ । ३३ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६६ ॥ १०
अथसोमयोगः ॥ शृंगवेरपुरेरम्येवसंतिबह्वोजनाः ॥ तत्रवैश्योवसत्त्वेकोमहोदारश्चवत्सलः ॥ ५० ॥ आरामान्विविधान्कृत्वापथिकूपा
श्चनिर्मिताः ॥ तीर्थेतीर्थेकृतासेवाऋषीणांचपुनःपुनः ॥ ५१ ॥ प्रस्थंप्रस्थंददौस्वर्णसत्पात्रायद्विजायच ॥ एकस्मिन्समयेविप्रदैवात्स्व
स्रासहारतः ॥ ५२ ॥ तत्पापान्नरके गत्वापुण्याज्जातोत्रबाहुजः ॥ गौरोरुणोमध्यदेहोमुखेपार्श्वेप्रचिह्नितः ॥ ५३ ॥ १ । ४ । ८ । १६ ।
१८ । २४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ११ अथसज्यायोगः ॥ सज्यायोगेपियोजातःपूर्वजन्मनिब्राह्मणी ॥ सुंदरीचातिलाव
ण्यामृगाक्षीचंद्रवन्मुखी ॥ ५४ ॥ नानाविलासकुशलापतिवंचनतत्परा ॥ नररतिसमासक्तास्वैरिणीकामपीडिता ॥ ५५ ॥ तत्सकाशा
त्कृतंद्रव्यंबहुकालगतागतैः ॥ प्राप्तेवार्द्धक्यसमयेवापींनिर्मितवत्यसौ ॥ ५६ ॥ तीर्थाटनंकृतंसम्यक्सामृताबद्रिकाश्रमे ॥ तेनपुण्या
वशेषेणसाजाताऽत्रपुमान्द्विज ॥ प्रसन्नवदनोभव्योदक्षिणांगेसचिह्नितः ॥ ५७ ॥ १ । ५ । ८ । १३ । १७ । २० । २४ । ३०
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ १२ अथशाकुनीयोगः ॥ आंत्रवेद्येऽवसत्पूर्वंबाहुजश्चधनाधिपः ॥ सहदेवःसमाख्यातः
पत्नीतस्यहुताशिनी ॥ ५८ ॥ कृषिकर्मोद्यमेमग्नोधान्यराशिःकृतोभृशम् ॥ ॥ एकस्मिन्समयेविप्रगौरेकातुक्षुधार्दिता ॥ ५९ ॥
तयाजवेनकवलोभुक्तश्चैवद्विजोत्तम ॥ बाहुजोपिप्रधावित्वालगुडेननिवारिता ॥ ६० ॥ साम्प्रतातेनदुःखेनपापमाचरितंत्विदम् ॥
बाहुजःससहायश्चकुंभीपाकंतुभुक्तवान् ॥ तिर्यग्योनौसमुत्पन्नःपश्चाद्वैमानुषोऽधुना ॥ ६१ ॥ १ । ४ । ७ । १४ । १८ । २१ १४१
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७८ ॥ १३ अथशाकिनीयोगः ॥ चम्पकारण्यनिकटेविप्रएकस्तुवैष्णवः ॥ सर्वधारीतिख्यातःपत्नी

तस्यविवेकिनी ॥ ६२ ॥ ब्रह्मकर्मपरिभ्रष्टोमदांधःपापमोहितः ॥ एकदाकार्त्तिकेमासिसेवितंतुलसीवनम् ॥ ६३ ॥ दीपावलिं
ततोदत्त्वाब्राह्मणस्यप्रसंगतः ॥ ततःपुण्यप्रभावेणस्वर्गंगत्वाचब्राह्मणः ॥ ततःपुण्यक्षयेजातेपुनरागत्यभूतले ॥ ६४ ॥ १ । ५ । ८ ।
१३ । १७ । २१ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ १४ अथशचीयोगः ॥ आसीज्जन्मांतरेचैवपादजोधनवानपि ॥ पत्नीचंद्र
वतीतस्यमहाभव्यागुणान्विता ॥ ६५ ॥ शूद्रःपरमधर्मात्मापरकार्य्यपरायणः ॥ एकस्मिन्समयेविप्रदृष्ट्वास्वीयांसकोपतः ॥६६॥
परनरसमासक्तांपर्य्यंकेषुद्विजोत्तम ॥ जवेनतरसागत्वाखड्गमुद्यम्यक्रोधतः ॥ ६७ ॥ सारात्रौघातितातेनपापमाचरितंत्त्विदम् ॥
तत्पापान्नरकंगत्वाह्यसिपत्रवनांतरे ॥ ६८ ॥ कृकलासोऽभवत्सोपिमर्कटोपिबभूवह ॥ ततोवैमानुषीयोनौचागतोधरणीतले ॥ ६९ ॥
३ । ६ । ९ । १७ । २२ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ १५ अथसेनायोगः ॥ कलिंगदेशेह्यवसच्चशूद्रःशांतो
प्यिदांतःखलुदेवभक्तः ॥ क्रियाविशुद्धः परमोप्युदारःशिवस्यनामस्मरणेसमर्थः ॥ ७० ॥ पाटीरपुष्पैःसयवैस्तिलैश्चह्यभ्यर्चयंश्चप्रतिवास
रंहरम् ॥ तीर्थाभिलाषीसततंकृपायुतः परत्रशुद्धार्थकृतातुनम्रता ॥ ७१ ॥ एकस्मिन्समयेविप्रकृतंकर्मजुगुप्सितम् ॥ स्वस्त्रियास्त्याग
नंकृत्वापरमार्य्यामुमानिता ॥ ७२ ॥ तत्पापान्नरकेगत्वापुण्यात्स्वर्गंतथाऽनघ ॥ पुनरागत्यमेदिन्यांसर्वसौख्येनसंयुतः ॥ ७३ ॥
१ । ४ । ८ । १३ । १७ । २१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८६ ॥ १६ अथसचानकयोगः॥पर्वतारण्यनिकटेब्राह्मणोन्यवसत्तदा ॥
ब्रह्मचर्य्यरतोनित्यंव्रतकर्मसमाचरत् ॥ ७४ ॥ कृतस्तेनजपस्तत्रदुर्गामन्त्रस्यवैद्विज ॥ जपस्यांतेमृतःसोपिबभूवक्षितिपाधिपः ॥ ७५ ॥
उग्रदंडः प्रतापीचजित्वाशत्रुबलंबलात् ॥ दत्तानितत्रदानानिब्राह्मणायकुटुंबिने ॥ ७६ ॥ राज्यदोषात्कृतंपापंनानाछलसमन्वितम् ॥

भृगु मृत्वातुनरकंगत्वाबहृब्दांश्चनिरंतरम् ॥ ततोवैमानुषोजातःसुन्दरश्चसुलोचनः ॥ ७७ ॥ २ । ४ । ८ । १२ । १७ । २० । २४ । २८ । ३१ । सं
१५ २६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ १७ अथशिवानाम्नीयोगः ॥ नैमिषारण्यनिकटेबाहुजश्चप्रतापवान् ॥ गन्धर्वइतिविख्यातः
पत्नीद्वयसमन्वितः ॥ ७८ ॥ पापकर्मणिनिष्ठश्चपरदाराभिलाषुकः ॥ एकस्मिन्समयेविप्रमदालीढोबभूवह ॥ ७९ ॥ भ्रातृकन्याविशा
लाक्षीसुन्दरीषोडशाब्दिका ॥ बलादाकर्षितातस्यांकृत्वासुरतसंगमम् ॥ ८० ॥ पापमाचरितंतेनगोपितंघस्मरंद्विज ॥ कालांतरेमृतः
सोपिनानानरकेषुसंस्थितः ॥ ८१ ॥ नानायोनौभ्रमन्सोपिपश्चाद्भूत्वाचमानुषः ॥ ८२ ॥ १ । ४ । ८ । १३ । १९ । २२
२६ । २९ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६८ ॥ १८ अथसुतयोगः ॥ वंगदेशेऽवसत्पूर्वंनारदोनामबाहुजः ॥ प्रपञ्चावि
करणेनिष्ठः परद्रोहाभिलाषुकः ॥ ८३ ॥ यत्रतत्राभ्रमत्सोपिव्याकुलश्चमनोरथैः ॥ दारिद्र्येणाऽभवत्कष्टीरोगेणमहतावृतः ॥ ८४ ॥
गंगास्नानंकृतंतेनसमृतः कालचोदितः ॥ पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन ॥ ८५ ॥ ततोवैमानुषीयोनौमर्त्यलोकंसमागतः
॥ ८६ ॥ १ । २ । ९ । १७ । २० । २५ । २९ । ३६ । ४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ १९ अथसौराष्ट्रीयोगः ॥ पूर्वं
जन्मांतरेचैवकीकटेनिवसन्द्विज ॥ गयायानिकटेचैवब्राह्मणःशास्त्रकोविदः ॥ ८७ ॥ अर्भकान्पाठयामासलोभाकुलितमानसः ॥
प्रतिग्रहेणजीवेद्वैप्रत्यहंचतदानघ ॥ ८८ ॥ एकदाचन्द्रमोग्रस्तेगंगातीरेतदानघ ॥ छागदानंगृहीत्वातुपुनश्चगृहमागतः ॥ ८९ ॥ मृत्वाच
नरकेवासः षष्टिवर्षसहस्रकम् ॥ ततोवैमानुषीयोनौदारिद्र्येणप्रपीडितः ॥ ९० ॥ २ । ५ । ९ । १५ । १८ । २२ । २४ । २९ । १
३० । ३३ । ३६ । ३९ । ४० । ४२ । ४३ । ४५ । ४८ । ५१ । ५७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८३ ॥ २० अथहस्तियोगः ॥

कांपिल्येनगरेपूर्वंब्राह्मणःशिवभक्तिमान् ॥ केशवेतिसमाख्यातःपत्नीपुत्रसमन्वितः ॥ ९१ ॥ धनधान्यसमृद्धस्तुकार्पण्यनातिनिष्ठुरः ॥
एकस्मिन्समयेविप्रब्राह्मणस्यप्रसंगतः ॥ ९२ ॥ व्रतंकृतंह्येकादश्यांमासिमासिनिरंतरम् ॥ सत्पात्रायद्विजायाथददौदानंचश्रद्धया॥९३॥
तेनपुण्यप्रभावेणस्वर्गंगत्वाचब्राह्मणः ॥ भुक्त्वास्वर्गफलंसम्यक्पुनरागत्यभूतले ॥ ९४ ॥ १ । ३ । ६ । ९ । १२ । १८ । २१ । २६ ।
२९ । ३४ । ४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९५ ॥ २१ अथहत्यायोगः ॥ कुंडिनेनगरेपूर्वंनृपस्त्वेकःसनातनः ॥ सर्वेश्वरःसमाख्या
तःपत्नीतस्यहुताशनी ॥ ९५ ॥ निर्विघ्नंचाकरोद्राज्यंदेवब्राह्मणपूजकः ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥९६॥ प्रजाद्रव्यंहृतं
तेनसमृतःशोकसंयुतः ॥ तत्पापान्नरकंगत्वाभुक्त्वावर्षसहस्रकम् ॥ ततोवैमानुषोजातोधनधान्यसमन्वितः ॥ ९७ ॥ ३ । ५ । ८ । १३ ।
१७ । २२ । २७ । २९ । ३३ । ३७ । ४३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०५ ॥ २२ अथहोरायोगः ॥ मैथिलेनगरेपूर्वंकुलालोन्यव
सत्तदा ॥ प्ररोहणःसमाख्यातःपत्नीतस्यपतिव्रता ॥ ९८ ॥ भांडानिक्रियतेसम्यक्तत्सकाशात्कृतंधनम् ॥ पुण्यमार्गेव्ययंकृत्वातथा
तीर्थाटनंकृतम् ॥ ९९ ॥ मृतःस्वर्गंगतःसोपिपुनरागत्यभूतले ॥ १०० ॥ १ । ४ । ८ । १३ । १८ । २४ । २८ । ३० । ३५ । ३९
वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८६ ॥ २३ अथसानुमान्नयोगः ॥ आसीज्जन्मांतरेचैववैश्योनामदिवाकरः ॥ देशेहिसिद्धपृष्ठेच
ज्वालामुख्याश्चसन्निधौ ॥ १०१ ॥ धनधान्यसमायुक्तोमहोदारश्चभक्तिमान् ॥ कृतानिसर्वकर्माणिपर्वस्वपिविशेषतः ॥ १०२ ॥
एकस्मिन्समयेविप्रनृपेणलुंठितस्तदा ॥ गृहंत्यक्त्वावनंगत्वातपश्चर्य्याकृताहृढम् ॥ १०३ ॥ एकांघ्रिभुजमुत्थाप्यविष्णोर्ना
मस्मरन्नसौ ॥ विमानाग्र्योपरिस्थित्वाह्यप्सरोगणसेवितः ॥ १०४ ॥ गतोसौचेंद्रलोकेचतत्रस्थित्वाविशेषतः ॥ इन्द्रलोका

त्वारिंशत्श्चागतोधरणीतले ॥ १०५ ॥ १ । ३ । ६ । १० । १८ । २४ । २९ । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
९१ ॥ २४ अथसहरोषायोगः ॥ विंध्याद्रिनिकटेपूर्वंब्रह्मदत्तेतिब्राह्मणः ॥ पत्नीपुत्रसमायुक्तः परिवारस्यपोषकः ॥ १०६ ॥
यजमानात्सुखंतस्यप्रत्यहंजीवनंतदा ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यवैबलात् ॥ १०७ ॥ गृहदानंगृहीतंचवस्त्रंस्वर्णंतुभाज
नम् ॥ एवंनिवसतस्तत्रबहुवर्षगतागतैः ॥ १०८ ॥ सविप्रःपंचतांप्राप्तःपापाच्चनरकेगतः ॥ सर्पयोनिशतंभुक्त्वाततोवैमानुषोऽ
धुना ॥ १०९ ॥ १ । ३ । ५ । ७ । १२ । १६ । २० । २८ । ३० । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥
२५ अथसुरकार्यसाधकयोगः ॥ मरुस्थलेवसत्पूर्वंबाहुजोनामशंकरः ॥ प्रतापमदयुक्तेनकृतंकर्मचदारुणम् ॥ ११० ॥ अगम्या
गमनंकृत्वाचादंडयादंडितास्तदा ॥ अधर्मेनिरतः सोपिप्रजानांदंडनेरतः ॥ १११ ॥ प्राप्तेवार्द्धक्यसमयेतीर्थयात्रांतथाऽकरोत् ॥
आयुषस्तुसमाप्तित्वात्समृतः कालचोदितः ॥ ११२ ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गंतथानघ ॥ ततोवैमानुषोजातोधनधान्य
समन्वितः ॥ ११३ ॥ १ । २ । ५ । ८ । ११ । १६ । २० । २५ । ३० । ३४ । ३९ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६८ ॥
२६ अथशांभवीयोगः ॥ सुभद्रेनगरेपूर्वंकीकटस्याऽतिसन्निधौ ॥ अक्रूरेतिसमाख्यातःशूद्रवंशेतदाऽभवत् ॥ ११४ ॥ पितातस्यमहा
राजासत्यवादीधनान्वितः ॥ राजकार्य्यंपरित्यज्यगतोसौगह्वरेवने ॥ ११५ ॥ तपश्चर्य्याकृतातेनबहुवर्षगतागतैः ॥ आयुषस्तु
समाप्तित्वात्सशूद्रःपञ्चतांगतः ॥ पुनरागत्यमेदिन्यांसर्वसौख्येनसंयुतः ॥ ११६ ॥ १ । २ । ५ । १४ । १९ । २५ । ३० । ३५ ।
४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥ २७ अथसुरसेनायोगः ॥ किरातेनरेपूर्वंवसंतिबहवोजनाः ॥ तत्रविप्रोवसत्त्वेकोमहो

दारश्ववत्सलः ॥ ११७ ॥ सत्यकेतुरितिख्यातःसर्वशास्त्रस्यपाठकः ॥ विख्यातःसर्वदेशेषुप्रतिष्ठामानसंयुतः ॥ ११८ ॥ द्रव्य
स्योत्पादनंकृत्वाकन्यादानंतथाऽकरोत् ॥ एकस्मिन्समयेविप्रगोदावर्याश्चसन्निधौ ॥ ११९ ॥ तपश्चर्य्याकृतातेनबहुवर्षगतागतैः ॥ आयु
षस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ १२० ॥ १ । ३ । ८ । १५ । २० । २४ । २९ । ३२ । ३६ । ३९ । ४५ वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ७८ ॥ २८ अथसौख्ययोगः ॥ इलावर्तेऽवसत्पूर्वंकुंतलोनामबाहुजः ॥ कृषिकर्मोद्यमेनिष्ठोद्रव्यस्योत्पादनेरतः॥१२१॥
मनोहरःसमाख्यतःपत्नीपुत्रसमन्वितः ॥ एकस्मिन्समयेविप्रब्राह्मणस्यप्रसंगतः ॥ १२२ ॥ तीर्थावगाहनंकृत्वाकृतंकर्मचदारुणम् ॥
चोरितंपरद्रव्यंतुलोभाकुलितचेतसा ॥ १२३ ॥ स्वदेशेपुनरागत्यहर्षगद्गदमानसः ॥ आयुषस्तुसमाप्तित्वात्समृतोगदपीडितः ॥१२४॥
प्रापात्पापफलंभुक्त्वायोनीर्भुक्त्वाकथंचन ॥ पुनरागत्यमेदिन्यांपूर्वपुण्याच्चमानुषः ॥ १२५ ॥ २ । ४ । ७ । १२ । १८ । २० । २६ ।
३१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६१ ॥ २९ अथशोभनयोगः ॥ कीकटेचावसत्सोपिपूर्वजन्मनिपादजः ॥ नारायणःसमाख्यातः
पत्नीतस्यमनोरमा ॥ १२६ ॥ धनमैश्वर्य्यमतुलंकार्पण्येनविमोहितः ॥ नश्राद्धंनद्विजेभोज्यंनगोत्रेनापिचस्वयम् ॥ १२७ ॥ एकदा
चन्द्रमोग्रस्तेपरोपदेशतस्तदा ॥ यवान्नंशेषमात्रंतुब्राह्मणेभ्यस्तदात्वदात् ॥ १२८ ॥ तेनपुण्यप्रभावेणस्वर्गेस्थित्वाविशे
षतः ॥ ततोवैमानुषीयोनौसर्वसौख्येनसंयुतः ॥ १२९ ॥ १ । ४ । ८ । ११ । १७ । २१ । २९ । ३६ वर्षेषुकष्टम् ॥ परमायु
र्वर्षाणि६७ ॥ ३० अथस्यमंतकयोगः ॥ अयोध्यानिकटेपूर्वंबाहुजोह्यतिधार्मिकः ॥ सनातनःसमाख्यातःपत्नीतस्यकलास्मृता॥१३०॥
दम्पतीतौगतौतीर्थंब्राह्मणस्यप्रसंगतः ॥ तीर्थेतीर्थेकृतासेवाऋषीणांचपुनःपुनः ॥ १३१ ॥ एकस्मिन्समयेविप्रगृहेयज्ञश्चकारितः ॥

मृ०
१४७

विप्रस्यभोजनंकृत्वानानापक्वान्नशष्कुलिम् ॥ १३२ ॥ भोजनांतेचदत्ताश्चदक्षिणाश्चद्विजोत्तम ॥ मृत्वापापात्फलंभुक्त्वायोनिंभुक्त्वाकथं
चन ॥ ततोमानुष्यमापन्नःप्रथमाब्देसकष्टितः ॥ १३३ ॥ १ । ३ । ६ । ९ । १४ । १८ । २० । २५ । ३१ । ३८ वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ७३ ॥ ३१ अथसुखार्कयोगः ॥ वैदर्भेनगरेपूर्वंसात्त्विकोब्राह्मणःपरः ॥ कांचनेतिसमाख्यातःसर्वसिद्धांतपाठकः ॥
॥ १३४ ॥ अर्भकान्पाठयेत्तत्रदारिद्र्येणप्रपीडितः ॥ परदेशात्कृताप्राप्तिर्द्रव्याणिविविधानिच ॥ १३५ ॥ वृषलीगमनंकृत्वा
तत्सकाशात्सुतोद्भवः ॥ समृतोनरकेगत्वाततोवैमानुषोऽधुना ॥ १३६ ॥ १ । ३ । ६ । ११ । १६ । २० । २६ ।
३७ । ४० । ४५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ३२ अथसच्चायोगः ॥ बांधवेदेशेन्यवसत्पत्नीपुत्रसमन्वि
तः ॥ हरिदेवःसमाख्यातःपत्नीतस्यपतिव्रता ॥ १३७ ॥ द्रव्यस्योत्पादनेनिष्ठःक्रयविक्रयतत्परः ॥ ब्रह्मकर्मपरिभ्रष्टोव्यापारेनिरतः
सदा ॥ तस्मिन्ग्रामेवसत्त्वेकोवैश्यःपरमधार्मिकः ॥ १३८ ॥ तस्यकन्याविशालाक्षीसुन्दरीचातिशोभना ॥ बलादाकर्षितातस्यांकृत्वा
सुरतिसंगमम् ॥ १३९ ॥ साबालाचविषंपीत्वामृतासालोकशंकया ॥ कालांतरेमृतोविप्रःसगत्वायमशासनम् ॥ यमलोकात्परिभ्रष्टश्चा
गतोधरणीतले ॥ १४० ॥ १ । ४ । ७ । ११ । १६ । २० । २७ । ३६ । ३९ । ४० । ४६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
७५ ॥ ३३ अथसोमकयोगः ॥ आसीज्जन्मांतरेचैवविप्रवैश्योविचक्षणः ॥ चित्रदेवःसमाख्यातःपत्नीतस्यवरांगना ॥ १४१ ॥
परपुंसुरताभ्रष्टापतिवंचनतत्परा ॥ एकस्मिन्समयेविप्रब्राह्मणस्यहृतंधनम् ॥ तत्पापान्नरकेगत्वापुनरागत्यभूतले ॥ १४२ ॥ १ । २
। ४ । ८ । ११ । १२ । १९ । २३ । २७ । ३० । ३६ । ४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८५ ॥ ३४ अथसोनावरयोगः ॥ आसीज्ज

तं

कालांतरेचैवकान्यकुब्जेवसन्पुरा ॥ गणदेवःसमाख्यातःपत्नीतस्यगुणाकरी ॥ १४३ ॥ धर्मशीलश्चमतिमाञ्छिवपूजापरायणः ॥ किंचि
द्वित्तंहृदयेद्वैश्यकर्मसमापयत् ॥ १४४ ॥ एकस्मिन्समयेविप्रकृतंकर्मजुगुप्सितम् ॥ तस्यकन्यातुयुवतीविक्रीतातेनवैद्विज ॥ १४५ ॥
तत्पापान्नरकेगत्वातिर्यग्योनौपुनःपुनः ॥ ततोवैमनुजोजातःकष्टेनातिप्रपीडितः ॥ १४६ ॥ १ । २ । ४ । ८ । १२ ।
१६ । २० । २४ । २९ । ३५ । ३८ । ४० । ४६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ३५ अथहस्तियोगः ॥ पूर्वे
जन्मनियानारीविष्णुकांचीपुराऽवसत् ॥ वासुदेवेतिविख्यातोबाहुजोबलवानपि ॥ १४७ ॥ क्षात्रधर्मरतःसोपिबहुस्त्रीपरिवारकः ॥ किं
चिद्भूमिपतिस्तत्रप्रजानांदंडनेरतः ॥ १४८ ॥ स्वगोत्रस्यहृतंद्रव्यंतत्पापाच्छ्रीःक्षयंगता ॥ पापाच्चनरकंगत्वाषष्टिवर्षसहस्रकम् ॥ ततो
वैमानुषोजातोधनपुत्रविवर्जितः ॥ १४९ ॥ १ । ४ । ८ । १९ । २४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ३६ अथहिमाद्रियोगः ॥
इंद्रप्रस्थस्यनिकटेबाहुजःपूर्वजन्मनि ॥ दानासिंहःसमाख्यातःपत्नीतस्यमनोहरा ॥ १५० ॥ नृपानुकम्पयातत्रद्रव्यंतुविपुलंकृतम् ॥
असन्मार्गेव्ययंकृत्वावेश्यायांप्रापितंधनम् ॥ १५१ ॥ एकस्मिन्समयेविप्रब्राह्मणस्यप्रसंगतः ॥ श्रीमद्भागवतंश्रुत्वादानंदत्त्वाद्विजायच
॥ १५२ ॥ कालयोगेमृतःसोपिगतोसौनंदनेवने ॥ ततःपुण्यक्षयेजातेचागतोधरणीतले ॥ १५३ ॥ १ । ३ । ५ । ८ । १० । १६ । २४ ।
३४ । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६६ ॥ ३७ अथहोलकायोगः विश्वंभरपुरेरम्येचोलदेशे पुराऽवसत् ॥ राघवेतिसमा
ख्यातःपादजःसर्वशास्त्रवित् ॥ १५४ ॥ तस्यमित्रंद्विजस्त्वेकोमहोदारश्चभक्तिमान् ॥ तस्यप्रतिच्छलंकृत्वाविश्वासेनतदानघ ॥ १५५ ॥
सविप्रश्चातिकोपेनशापंदत्त्वाचपुष्कलम् ॥ भोभोधृष्टमहाभ्रष्टविश्वासघातनं कृतम् ॥ १५६ ॥ किंचित्कालांतरेचैवसवैश्यःपं

चतांगतः ॥ नानानरकेषुसस्थित्वानानाजन्मानिप्राप्तवान् ॥ पश्चाद्वैमानुषीयोनौमध्यदेशेसमुद्भतः ॥ १६७ ॥ २ । ४ ।८।११।१६।२० ।
२४ । २८ । ३० । ३६ । ४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७६ ॥ ३८ अथहायनयोगः ॥ आसीज्जन्मांतरेचैवद्विजोत्तमकुलेद्विज ॥
तथाचर्मण्वतीकूलेदेवलोनामविश्रुतः ॥ १६८ ॥ स्वधर्मेषुसदानिष्ठोमहोदारश्चवत्सलः ॥ अर्भकान्पाठयामासदानंदत्त्वाद्विजायच ॥
॥ १६९ ॥ तीर्थेतीर्थेकृतंपुण्यंगयाश्राद्धंतथाऽकरोत् ॥ एकस्मिन्समयेविप्रकन्यादानंतथाकरोत् ॥ १६० ॥ तस्यसम्बंधिनायुद्धम
भूद्द्रव्यार्थमेवच ॥ सम्बंधिनाकृतोरोषःस्वशरीरंजघानह ॥ १६१ ॥ तत्पापान्नरकंगत्वापुण्यात्स्वर्गंतथानघ ॥ पुनरागत्यमेदिन्यांपूर्वपु
ण्यप्रभावतः ॥ १६२ ॥ १ । ३ । ५ । ८ । १२ । १५ । २० । २५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ३९ अथहिंगुलाजयोगः ॥
पूर्वजन्मनियानारीकाकुत्स्थेनगरेऽवसत् ॥ पादजस्यसुताश्रेष्ठापतिसेवापरायणा ॥ १६३ ॥ एकस्मिन्समयेविप्रतस्याःपतिर्दुरात्मवान् ॥
परस्त्रींगेहेह्यानीयत्यक्तवांश्चविवाहिताम् ॥ १६४ ॥ रतिंददौनभार्य्यायामनृतौचविमोहितः ॥ कालांतरेमृतःशूद्रःसतीजाताचसाङ्गना ॥
॥ १६५ ॥ उभयोःकर्मणोर्हेतोःस्वर्गंयातौचदम्पती ॥ पुनरागत्यमेदिन्यांपूर्वपुण्यप्रसंगतः ॥ १६६ ॥ १ । ३ । १० । ११ । १७ ।
२१ । २४ । २८ । ३० । ३७ । ४० । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ ४० अथहयानाम्नीयोगः ॥ मैथिलेनगरेपूर्वंबाहुजश्चम
हाधनी ॥ चंद्रसेनिरीरितिख्यातःपत्नीतस्यहुताशनी ॥ धनमैश्वर्य्यमतुलंकिंचिद्भूमिपतिस्तदा ॥ १६७ ॥ नानाविलासविभवैःशिवस्या
ऽऽराधनेरतः ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यगौरवात् ॥ १६८ ॥ ब्राह्मणस्यहृतंद्रव्यंछलैश्चप्रचुरैर्द्विज ॥ नदत्तंतेनतत्तस्मैलो
भोपहतचेतसा ॥ १६९ ॥ परस्परंकृतंयुद्धमतिप्रबलदंडिना ॥ कोलाहलःकृतःसम्यग्वाग्बाणेनचवेहतः ॥ १७० ॥ अपभ्रंशंव

दन्सोऽपिलगुडेनप्रताडितः ॥ ब्राह्मणःक्रोधवशतःस्वशरीरंजघानह ॥ १७१ ॥ बाहुजोपिमृतस्तत्रगतोवैनरकंद्विज ॥ पुनरगत्यमेदिन्यांभीषणोभैरवाकृतिः ॥ १७२ ॥ प्रथमेद्वितीयेवर्षेचतुर्थेसप्तमेपिवा ॥ वर्षेकष्टंभवेत्तस्यदशमैकादशेसुखम् ॥ १७३ ॥ विंशतिवर्षांतरेकष्टंषोडशेग्रहणीभवेत् ॥ विंशातिवर्षांतरेचैवमातातस्यनजीवति ॥ १७४ ॥ चतुर्विंशेभवेत्कन्याह्यष्टाविंशेसुतोद्भवः ॥ चतुस्त्रिंशेपितृमरणंचत्वारिंशेपिचस्वयम् ॥ ॥ कार्त्तिकेधवलेपक्षेद्वादश्यांमरणंभवेत् ॥ १७५ ॥ ४१ अथहृदययोगः ॥ पूर्वजन्मांतरेचैवव्याधोनाम्नाकलेवरः ॥ निर्दयःसर्वजीवघ्नः पक्षिघातरतस्सदा ॥ १७६ ॥ एकस्मिन्समयेविप्रबाहुजस्यप्रसंगतः ॥ प्रयागेह्यगमत्सोपिसस्नातोमृगगेरवौ ॥ १७७ ॥ कथांपौराणिकींश्रुत्वापूर्वंकर्मचत्यक्तवान् ॥ धर्ममार्गेचकुशलःसाधूनांचप्रसंगतः ॥ १७८ ॥ समृतस्त्रिदिवंगत्वास्वर्गंभुक्त्वानिरंतरम् ॥ षष्टिवर्षसहस्रांतेचागतोधरणीतले ॥ १७९ ॥ २ । ४ । ८ । १२ । १७ । २२ । २७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७४ ॥ ४२ अथहुलांकयोगः ॥ कालञ्जरस्यनिकटेवैश्योनामकराम्बुजः ॥ क्रयविक्रयणेनिष्ठो महोदारश्चपावनः ॥ १८० ॥ धर्मकर्मणिनिपुणोदानधर्मपरायणः ॥ कृतानितेनधर्म्याणिपर्वस्वपिविशेषतः ॥ ॥ १८१ ॥ एकस्मिन्समयेविप्रह्यन्नदानंतथाकरोत् ॥ तेनपुण्यप्रभावेणलक्ष्मीवृद्धिर्दिनेदिने ॥ १८२ ॥ समृत्वासंमरेविप्रगतइंद्रस्यवैपुरे ॥ इन्द्रलोकात्परिभ्रष्टश्चागतोधरणीतले ॥ १८३ ॥ गौरस्वरूपःशोभाढ्यःपुत्रदारसमन्वितः ॥ प्रथमेद्वितीयेवर्षेशीर्षेकष्टंप्रजायते॥ ॥ १८४ ॥ पंचवर्षोत्तरेविप्रशीतलाज्वरसम्भवः ॥ अष्टवर्षांतरेकष्टंद्वादशेगृहिणीतिच ॥ १८५ ॥ प्राप्तेपंचदशेवर्षेपितातस्यनजीवति ॥ विंशेकविंशवर्षेवापुत्रोभवतिनान्यथा ॥ १८६ ॥ चतुर्विंशेद्रव्यवृद्धिरष्टाविंशेधनागमः ॥ त्रिंशद्वर्षांतरेविप्रभार्यातस्यनजीवति

॥ १८७ ॥ पत्नीनाशान्मनस्तापःषट्त्रिंशेतुगदान्वितः ॥ खवेदाब्देगतेविप्रसर्पस्यभयमादिशेत् ॥ १८८ ॥ चतुर्वेदोत्तरेचैवतीर्थ
यात्रांतथाऽकरोत् ॥ पंचपंचाशत्तमेऽब्देभाद्रेमासेमृतिःखलु ॥ १८९ ॥ ४३ अथहाटकयोगः ॥ पुराक्षात्रकुलेजातःसरस्वत्या
स्तसन्निधौ ॥ धर्मासिंहःसमाख्यातः पत्नीतस्यमनोहरा ॥ १९० ॥ व्यापारेनिरतःसोपिद्रव्यस्योत्पादनेरतः ॥ कृतानितेनपुण्यानिपर्व
स्वपिविशेषतः ॥ १९१ ॥ एकस्मिन्समयेविप्रश्राद्धंकृत्वासहर्षितः ॥ आहूयब्राह्मणानांवैह्यादरंकृतवान्भृशम् ॥ १९२ ॥ पुरोहितेहठं
कृत्वानदत्तंच धनंकचित् ॥ विमुखश्चगतः सोपिपापमाचरितंत्विदम् ॥ १९३ ॥ सक्षात्रः पंचतांप्राप्तश्चंद्रलोकेसमाविशत् ॥ चंद्रलो
कात्परिभ्रष्टश्चागतो धरणीतले ॥ १९४ ॥ २ । ४ । ८ । १२ । १६ । २४ । २९ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८० ॥ ४४
अथहनुमुखयोगः ॥ बभूववैश्यजः पूर्वंदशारण्येगुणाकरः ॥ प्रसेनिरितिविख्यातःपत्नीतस्यसुलोचना ॥ १९५ ॥ धर्मशीलोऽतिमति
मान्सर्वशास्त्रविनोदकः ॥ एकस्मिन्समयेविप्रकृतंकर्मजुगुप्सितम् ॥ १९६ ॥ मातुलान्यांचगमनंकृत्वातेनतदानघ ॥ तत्पापान्नरके
गत्वाबहुवर्षंतुभुक्तवान् ॥ पुनर्वैमानुषीयोनौधनधान्यसमन्वितः ॥ १९७ ॥ १ । ४ । ८ । १३ । १८ । २४ वर्षेषुकष्टम् ॥ परमायुर्व
र्षाणि ६१ ॥ ४५ अथहोमयोगः ॥ खशदेशेबभूवाऽपिब्राह्मणःशास्त्रकोविदः ॥ देवदत्तःसमाख्यातः पत्नीतस्यपतिव्रता ॥ १९८ ॥
धनधान्यसमृद्धस्तुदेवतासधनेरतः ॥ एकस्मिन्समयेविप्रकृतंकर्मजुगुप्सितम् ॥ १९९ ॥ भ्रातृपक्षात्कृतोद्वेषस्तद्धनंचहृतंबलात् ॥
एवंनिवसतस्तत्रबहुवर्षगतागते ॥ २०० ॥ प्राप्तेवार्द्धक्यसमयेतीर्थयात्रांतथाऽकरोत् ॥ आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः
॥ २०१ ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गेतथानघ ॥ पुनरागत्यमेदिन्यांधनधान्यसमन्वितः ॥ २०२ ॥ १ । ३ । ५ । ७ । ९ ।

१२ । १६ । २० । २४ । २७ । २९ । ३० । ३५ । ४० । ४५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ४६ अथपुनहोमयोगः ॥
गौरीकुमारिकाखंडेपादजःपूर्वजन्मनि ॥ धीरदासइतिख्यातःपत्नीतस्यप्रभाकरी ॥ २०३ ॥ व्यापारेनिरतःसोपिद्रव्यंतुविपुलंकृतम् ॥
कदन्नंभुज्यतेनित्यंनदानंकृतवान्कचित् ॥ २०४ ॥ प्राप्तेवार्द्धक्यसमयेसर्वस्वंब्राह्मणेददौ ॥ सत्पात्रेचगृहस्थेचश्रद्धायुक्तेनचेतसा ॥
॥ २०५ ॥ समृत्वात्रिदिवंगत्वानंदनेचवनेशुभे ॥ बहुवर्षसहस्रान्तेचागतोभूमिमंडले ॥ २०६ ॥ १ । ३ । ६ । ९ । १६ । २० । २८ ।
३० । ३६ । ४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७४ ॥ ४७ अथहर्षिणीयोगः ॥ चंद्रभागानदीतीरेवैश्योनामकृपाकरः ॥ क्रयविक्रय
कर्ताचपत्नीतस्यातिकर्कशा ॥ २०७ ॥ व्यापाराच्चकृतंद्रव्यंमिथ्याजल्पतिनित्यशः ॥ एकस्मिन्समयेविप्रब्राह्मणस्यप्रसंगतः ॥ २०८ ॥
प्रयागेऽगमत्सोपिसस्नातोभक्तिसंयुतः ॥ दत्तानितेनदानानिपर्वस्वपिचशक्तितः ॥ २०९ ॥ स्वदेशेपुनरागत्यहर्षगद्गदमानसः ॥
आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ ततोवैमानुषोजातःकन्यापुत्रविवर्जितः ॥ २१० ॥ १ । ४ । ९ । १७ । २१ । २६ ।
२८ । ३३ । ३८ । ४० । ४६ । ५० । ५५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० ॥ ४८ अथहर्म्यैनीयोगः ॥ इक्षुकारण्यनिकटेपूर्व
जन्मनिपादजः ॥ धूम्रकेतुःसविख्यातःपत्नीपुत्रसमन्वितः ॥ २११ ॥ किंचित्कालांतरेविप्रविरक्तोपिबभूवह ॥ गृहंत्यक्त्वावनेगत्वा
तपश्चर्य्याकृताभृशम् ॥ २१२ ॥ मृत्वास्वर्गेतदागत्वाबभूवद्भूरुजस्तदा ॥ बहुद्रव्यान्वितःसोपिपुत्रकन्यासमन्वितः ॥ इदंजन्मतृतीयंतु
तेजस्वीतेजसांपतिः ॥ २१३ ॥ १ । ३ । ५ । ८ । १३ । १७ । २१ । २६ । २९ । ३८ । ४१ । ४७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥
४९ अथहोमावलियोगः ॥ अथचंद्राद्रिनिकटेशूद्रोवसतितत्रच ॥ कर्दिदासइतिख्यातःपत्नीतस्यवरांगना ॥ २१४ ॥ व्रतंचांद्रायणंकृ

त्वाश्रद्धायुक्तेनचेतसा ॥ मृत्वास्वर्गेऽभवद्दासोह्यपिवर्षसहस्रकम् ॥ २१५ ॥ ततःपुण्यक्षयेजातेपुनरागत्यभूतले ॥ सर्वसौख्येनयुक्तःसक्षात्र
धर्मपरायणः ॥ आंत्रवेद्येपुनश्चैवज्ञानीभूत्वाचब्राह्मणः ॥ २१६ ॥ १।३।८।१७।२०।२८।३६वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६७ ॥ ५०
अथहयग्रीवयोगः ॥ गिरनाराद्रिनिकटेपूर्वजन्मनिबाहुजः ॥ पुरुषोत्तमइतिख्यातःपत्नीतस्यमहेश्वरी ॥ २१७ ॥ धर्मकर्मणिनिपुणो
द्रव्यस्योत्पादनेरतः ॥ कृषिवाणिज्यनिरतोव्यवहारपरायणः ॥ २१८ ॥ एकस्मिन्समयेविप्रकृतंकर्मतुदारुणम् ॥ ब्रह्मस्वंभक्षितंतेन
नदत्तंलोभहेतुना ॥ २१९ ॥ परस्परंकृतंयुद्धमतिप्रबलदंडिना ॥ ब्राह्मणःक्रोधसंयुक्तःस्वशरीरंजघानह ॥ २२० ॥ बाहुजो
नरकंप्राप्तःसप्तजन्मान्यहिश्वसः ॥ इदंतुह्यष्टमंजन्मराजरोगेणकष्टितम् ॥ २२१ ॥ १ । ३ । ७ । १५ । २० । २७ । ३६ ।
४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९७ ॥ ५१ अथसुंडयोगः ॥ पातंजलपुरेचैवब्राह्मणःशास्त्रवर्जितः ॥ ब्रह्मकर्मपरिभ्रष्टोह्यसि
जीवीगुणाकरः ॥ २२२ ॥ नृपानुकम्पयातत्रद्रव्यस्योत्पादनंकृतम् ॥ नदानंतुद्विजेदत्तंनकृतंश्राद्धकर्मणि ॥ २२३ ॥ एवंनिवस
तस्तत्रबहुवर्षगतागतैः ॥ प्राप्तेवार्द्धक्यसमयेसमृतःकालचोदितः ॥ २२४ ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गंतथाऽनघ ॥ चक्रवाको
बभूवाऽपिहंसःसरसिमानसे ॥ २२५ ॥ विंध्याद्रिनिकटेचैवशुकोभूत्वाचपर्वते ॥ शुकयोनिंपरित्यज्यततोभूत्वाचमानुषः ॥ २२६ ॥
१ । ४ । ८ । १७ । २२ । २७ । ३५ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८८ ॥ ५२ अथसुंभयोगः ॥ ब्रह्मपुत्रस्यनिकटेब्राह्मणः
शास्त्रकोविदः ॥ देवकीनंदनोनामपरमैश्वर्यसंयुतः ॥ २२७ ॥ अर्भकान्पाठयेत्तत्रनृपद्वारेप्रतिष्ठितः ॥ एकस्मिन्स
मयेविप्रह्यतिथेश्चहृतंधनम् ॥ २२८ ॥ नदत्तंलोभहेतोश्चकृत्वाद्वंद्वंपरस्परम् ॥ सविप्रःपञ्चतांप्राप्तोभुक्त्वाभोगांश्चशाश्वतान ॥ २२९ ॥

ततोनैमानुषीयोनौचागतोधरणीतले ॥ २३० ॥ १ । ३ । ५ । ८ । १७ । १९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९७ ॥ ९३ अथसु
तात्मकयोगः ॥ अनन्तनगरेपूर्वंकोंकणस्यातिसन्निधौ ॥ तत्रविप्रःकामुकश्चशिवस्याराधनेरतः ॥ २३१ ॥ ॥ पठनेपाठनेसुज्ञो
यशस्वीप्रीतिकारकः ॥ तस्मिन्ग्रामेवसत्त्वेकोबाहुजोधनवानपि ॥ २३२ ॥ तस्यकन्याविशालाक्षीसुन्दरीषोडशाब्दिका ॥ बलादा
कर्षितातस्यांहठाच्चैवरतिः कृता ॥ २३३ ॥ सामृतालौकिकाद्भीतापापमाचरितंत्विदम् ॥ समृतश्चातिकष्टेननरकेभृशमाप्तवान् ॥ ततो
नैमानुषीयोनौमर्त्यलोकेसमुद्भवः ॥ २३४ ॥ २ । ५ । ८ । १६ । २१ । २८ । ३० । ३४ । ३७ । ४१ । ४६ । वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि ६६ ॥ ९४ अथसासरीयोगः ॥ विंध्याद्रिनिकटेपूर्वेवैश्योनामगजाननः ॥ गणेशव्रतरतोनित्यंक्रयविक्रयणेरतः ॥२३५॥
पत्नीतस्यमहादुष्टाकर्कशाकटुभाषिणी ॥ वैश्यस्तुपरमोदारोनृपस्याग्रेप्रतिष्ठितः ॥ २३६ ॥ एकस्मिन्समयेविप्रतीर्थावगाहनेगतः ॥
कृतानितेनपुण्यानिसत्पात्रायददौकिल ॥ २३७ ॥ आरामाश्चकृतास्तेनकूपाश्चपथिकारिताः ॥ शस्त्रघातेनमृत्वासइंद्रलोकंतदागतः ॥
॥ २३८ ॥ इंद्रलोकात्परिभ्रष्टःपुनरागत्यभूतले ॥ कुलेचविमलेजातःपत्नीपुत्रसमन्वितः ॥ २३९ ॥ १ । ३ । ८ । १२ । १८ । २२ ।
२७ । ३१ । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ९९ अथसुंठयोगः ॥ अवंतीनगरीश्रेष्ठाप्रकीर्णागुणिनांगणैः ॥ तत्रवैश्यो
वसत्त्वेकोदुर्बलोनामभोद्विज ॥ २४० ॥ कृतानितेनद्रव्याणिपराक्रमेणवैतदा ॥ धर्ममार्गेव्ययंकृत्वाव्रतंचांद्रायणंकृतम् ॥ २४१ ॥
पुरुषोत्तमस्यकृतासेवापूजाश्चविविधास्तथा ॥ एकस्मिन्समयेविप्रसाध्वीचस्त्रीकलंकिता ॥ २४२ ॥ तत्पापान्नरकेगत्वापुण्याद्भूत्वाचमा
नुषः ॥ २४३ ॥ १ । ४ । ८ । १५ । २१ । २९ । ३६ । ४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ ९६ अथसाक्रीयोगः ॥ पट्टने

नगरेपूर्वंपादजःपूर्वजन्मनि ॥ कालीदासःसमाख्यातःपत्नीतस्यचकंदरा ॥ २४४ ॥ काव्यकर्ताविवेकीचचंचलश्चातिभक्तिमान् ॥ देशा
टनंकृतंसम्यग्विद्यादानमथाकरोत् ॥ २४५ ॥ परदारसमासक्तोहिंसामदविमोहितः ॥ दत्तानितेनदानानिपरोपकरणेरतः ॥ २४६ ॥
एवंनिवसतस्तत्रबहुवर्षगतागतैः ॥ आयुषस्तुसमाप्तित्वात्समृतःकुरुजांगले ॥ देवीलोकेचसंप्राप्तःपुनर्भूत्वाचमानुषः ॥ २४७ ॥ १ । ३
६ । ९ । १५ । २० । २७ । ३० । ३७ । ४० । ४२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १२० ॥ ५७ अथसरठयोगः ॥ गंडक्याश्चशुभेतीरेके
शवोनामपादजः ॥ सरस्वत्यास्तटेगत्वातपश्चर्यांतथाऽकरोत् २४८ ॥ शिवस्याराधनेनिष्ठःप्रपंचेनविवर्जितः ॥ एकांघ्रिभुजमुत्थाप्य
कृत्वाजाप्यंनिरंतरम् ॥ २४९ ॥ स्वर्गंगत्वासमागत्यबभूववैश्यजात्मजः ॥ ततश्चबाहुजोजातोराजकार्यपरायणः ॥ २५० ॥ १ । ३ ।
५ । ९ । १३ । १७ । २१ । २८ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६३ ॥ ५८ अथसरठयोगः ॥ कुरुक्षेत्रस्यनिकटेबाहुजोन्य
वसत्पुरा ॥ कर्मदासइतिख्यातःपत्नीपुत्रसमन्वितः ॥ २५१ ॥ दत्तानितेनदानानिपर्वस्वपिविशेषतः ॥ एकस्मिन्समयेविप्रकृतंकर्म
चदारुणम् ॥ २५२ ॥ पितृसेवांपरित्यज्यभक्ताद्यैर्व्यसनेरतः ॥ तत्पापान्नरकेगत्वाकीटयोनौसमुद्भतः ॥ २५३ ॥ नानायोनिसमुत्पन्नो
मर्त्यलोकेपुनःपुनः ॥ मर्कटोपिबभूवाथकौशिक्याश्चशुभेतटे ॥ दैवाद्गंगातटेमृत्युर्बभूवद्विजसत्तम ॥ २५४ ॥ १ । ३ । ८ । ११ ।
१६ । २१ । २८ । ३६ । ३८ । ४० । ४५ । ५० । ५५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ५९ अथसूचीमुखीयोगः ॥ ५७ ॥
अयोध्यानिकटेपूर्वंशूद्रोनामदयाकरः ॥ कृषिवाणिज्यनिरतोद्रव्यस्योत्पादनेरतः ॥ २५५ ॥ दत्तानितेनदानानिपर्वस्वपिविशेषतः ॥
एकस्मिन्समयेविप्रवेजनाथेसमागतः ॥२५६॥ तत्रवर्षद्वयंस्थित्वाचाकारिशिवपूजनम् ॥ सर्वस्वंविधिनादत्तंसत्पात्रायद्विजायच ॥२५७॥

एवंकालंव्यतीत्यांतेसमृतःकालचोदितः ॥ पत्नीतस्यसतीजातास्वर्गलोकमुभौगतौ ॥ २५८ ॥ षष्टिवर्षसहस्रांतेपुनरागत्य
भूतले ॥ २५९ ॥ २ । ५ । ८ । १३ । १७ । २१ । २६ । ३० । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७७ ॥ ६० अथशीतलायोगः ॥
अथचंद्राद्रिनिकिटेवसंतिबहवोजनाः ॥ तत्रशूद्रोवसत्त्वेकोजीमूतेतिसुविश्रुतः ॥ २६० ॥ काष्ठविक्रयकर्त्ताचकृत्वाद्रव्यंनिरंतरम् ॥
दत्तानितेनदानानिकाश्यांचैवविशेषतः ॥ २६१ ॥ तीर्थेतीर्थेकृतासेवाऋषीणांचपुनःपुनः ॥ दैवाद्गंगातटेचैवसमृतःकालचोदितः ॥ २६२ ॥
विमानाग्र्योपरिस्थित्वागत्वास्वर्गंतदानघ ॥ पुनरागत्यमेदिन्यांसर्वसौख्येनसंयुतः ॥ २६३ ॥ ५ । ११ । १८ । २१ । २६ । २९ ।
३१ । ३६ । ४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ ६१ अथशर्करीयोगः ॥ अयोध्यानिकटेपूर्वयोजनोपरिसंस्थितः ॥ शिवरामः
समाख्यातो बाहुजःपूर्वजन्मनि ॥ २६४ ॥ नानाद्रव्यापहारीचप्रजानांदंडनेरतः ॥ कृतानितेनदानानिपर्वस्वपिविशेषतः ॥ २६५ ॥
आयुषस्तुसमाप्तित्वात्समृतःसरयूतटे ॥ गतोसौत्रिदिवंविप्रपुनरागत्यभूतले ॥ २६६ ॥ १ । ४ । ८ । १६ । १९ । २२ । २८ ।
३१ । ३५ । ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९१ ॥ ६२ अथशाक्तयोगः ॥ अथपंपापुरेरम्येपादजश्चविचक्षणः ॥ विविधस्यैवद्रव्य
स्यह्यसन्मार्गेव्ययःकृतः ॥ २६७ ॥ वेश्यायांनीतवान्द्रव्यंपरस्त्रीरतिलम्पटः ॥ व्यभिचारवशाद्वापिकृतंकर्माऽतिदारुणम् ॥ २६८ ॥
गोत्रपुत्रीविशालाक्षीसुंदरी नवयौवना ॥ बलादाकर्षितातस्यांकृत्वाभोगंनिरंतरम् ॥ २६९ ॥ तत्पापान्नरकेगत्वापुनरागत्यभूतले ॥ २७० ॥
२ । ६ । ९ । १२ । २० । २८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८५ ॥ ६३ अथशिनार्जकयोगः ॥ कीकटेन्यवसत्पूर्वंदालभ्योनामविश्रुतः ॥ परदाराभिगमने
समर्थोपिबभूवह ॥ २७१ ॥ स्वकीयापरकीययोश्चगमनंक्रियतेसदा ॥ चर्मकार्यांरजक्यांचकृत्वारतिंविशेषतः ॥ २७२ ॥ एकस्मिन्समयेवि

प्रकथांश्रुत्वाविशेषतः ॥ प्रयागेह्यगमत्सोपितत्रमृत्युवशंगतः ॥ २७३ ॥ पापात्पापफलंभुक्त्वापुण्यात्पुण्यफलंतथा ॥ पुनरागत्यमेदिन्यां
सुखसौभाग्यसंयुतः ॥ २७४ ॥ २ । ४ । ७ । १२ । १६ । १९ । २३ । २७ । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८० ॥ ६४ अथसर
कीयोगः ॥ कौंकणेनगरेपूर्वंभिक्षुकोनामपादजः ॥ सर्वव्यापारनिरतोद्रव्यस्योत्पादनेरतः ॥ २७५ ॥ पत्नीतस्यमहादुष्टाकर्कशा
कटुवादिनी ॥ दम्पतिभ्यांकृतंद्वंद्वंह्यकार्य्येभृगुनंदन ॥ २७६ ॥ पत्नीघातःकृतस्तेनसामृतातत्क्षणादपि ॥ तत्पापान्नरकंगत्वाबहुवर्षंत
थास्थितः ॥ २७७ ॥ पुनरागत्यमेदिन्यांकिंचित्पुण्यप्रभावतः ॥ २७८ ॥ २ । ५ । ९ । १३ । १८ । २७ । ३५ । ४२ वर्षेषुकष्टम् ॥
परमायुर्वर्षाणि७० ॥ ६५ अथसोठूयोगः ॥ वंगदेशेवसत्पूर्वंभास्करोनामपादजः ॥ कृतानितेनपुण्यानितीर्थेतीर्थेविशेषतः ॥ २७९ ॥ गयाश्राद्धं
तथाकृत्वाब्राह्मणाभोजिताश्चवै ॥ संप्राप्यभवनेशीघ्रंकृतंकर्मचदारुणम् ॥ २८० ॥ राजमंत्रीबभूवापिचोग्रदंडःप्रतापवान् ॥ द्रव्यार्थंचैवभोः
पुत्रकृतंकर्मसुदारुणम् ॥ २८१ ॥ मृतोपिनरकेगत्वाषष्टिवर्षसहस्रकम् ॥ नानायोनौसमुत्पन्नस्ततोभूत्वाचमानुषः ॥ २८२ ॥ २ । ५ । ८ ।
१२ । १५ । २० । २७ । ३२ । ४० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि८७ ॥ ६६ अथसहस्रायोगः ॥ पूर्वजन्मांतरेचैवब्राह्मणःशास्त्रकोविदः ॥
देवदत्तइतिख्यातःपत्नीतस्यपतिव्रता ॥ २८३ ॥ देशेकुमारिकाखंडेन्यवसत्परिवारयुक् ॥ ईश्वराराधनेनिष्ठःप्रत्यहंसुखसंयुतः ॥ २८४ ॥
राजकार्येसदाऽव्यग्रोविष्णुभक्तिरतःसदा ॥ आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ देवलोकेऽभवद्दासःपुनरागत्यभूतले ॥ २८५ ॥ १ ।
५ । ८ । १४ । २० । २८ । ३१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ६७ अथसौरभयोगः ॥ नेपालेनगरेपूर्वंब्राह्मणः शास्त्रकोवि
दः ॥ पठनेपाठनेऽव्यग्रः परोपकरणेरतः ॥ २८६ ॥ दत्तानितेनदानानिचंद्रग्रस्तेचपर्वणि ॥ एकदावृंदकारण्येकृत्वापुण्यंविशेषतः ॥ २८७ ॥

[illegible]सातंवाजिहस्तिनः ॥ वेदविप्रायविदुषेदत्त्वादानंतुश्रद्धया ॥ २८८ ॥ स्वदेशेपुनरागत्यहर्षगद्गदमानसः ॥ एवंनि
[illegible]गते: ॥ २८९ ॥ आयुस्तुसमायातिस्वात्समृतः कालचोदितः ॥ पुनरागत्यमेदिन्यांसर्वसौख्येनसंयुतः ॥ २९० ॥
१ । ३ । ९ । १२ । १५ । १९ । २४ । २९ । ३६ । ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ६८ अथमूडयोगः ॥ कर्णाटेनगरे
[illegible]जल्पाकोनामपादजः ॥ धनधान्यसमायुक्तःक्रयविक्रयणेरतः॥२९१॥धर्मसेनिरिरितिख्यातस्तस्यकन्यावरांगना ॥ तस्यगृहेगतःसोपि
[illegible]कृतःकचित् ॥ २९२ ॥ तेनक्रोधेनवैतस्याः श्वशुरश्चैवघातितः ॥ तत्पापान्नरकेगत्वाह्यपिवर्षसहस्रकम् ॥ तिर्यग्योनौसमु
[illegible] शतधाचमहीतले ॥ २९३ ॥ १ । ४ । ७ । १० । १३ । १८ । २२ । २७ । ३३ । ३६ । ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि
[illegible] ॥ ६९ अथसुरसेनायोगः ॥ अथचोत्कलदेशेतुप्रभुर्नाम्नाचवैश्यजः ॥ द्रव्यंतुविपुलंतस्यकार्पण्येनविमोहितः ॥ २९४ ॥
आत्मार्थेविनियोगीचपरवंचनतत्परः ॥ एवंबहुतिथेकालेदैवाद्गंगातटंगतः ॥ २९५ ॥ तत्रविप्रोऽवसत्त्वेकःपंडितःसर्वबोधकः॥ तस्याऽऽ
श्रमेपि[illegible]कथांश्रुत्वाविशेषतः ॥ २९६ ॥ पूर्वाज्ञानंपरित्यक्त्वाधर्ममार्गेचतत्परः ॥ बभूवपुण्यमार्गेचसत्पात्रायददौधनम् ॥ २९७ ॥
गुरुसेवा[illegible]सम्यक्कायवाङ्मानसैरपि ॥ मृतःस्वर्गंगतःसोपिइंद्रलोकेसमास्थितः ॥ इंद्रलोकात्परिभ्रष्टश्चागतोधरणीतले ॥ २९८ ॥
१ । २ । ७ । १२ । १८ । २३ । २८ । ३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०४ ॥ ७० अथसभायोगः ॥ असत्कर्मणि
[illegible] पूर्वजन्मनिबाहुजः ॥ पैठणेनगरेचैवन्यवसत्परिवारयुक् ॥ २९९ ॥ कौंडिन्योनामवैश्योसौक्रयविक्रयकारकः ॥
[illegible]गमनेतत्परोद्रव्यहारकः ॥ ३०० ॥ एकस्मिन्समयेविप्रनृपेणलुंठितंधनम् ॥ द्रव्यलोभेनविकलोबभूवद्विजसत्तम

॥ ३०१ ॥ सम्रृतः सागरेविप्रपापाच्चनरकंगतः ॥ पुण्याच्चह्यागतोभूमंनानाकष्टसमन्वितः ॥ ३०२ ॥ २ । ४ । ६ । ९ । १५ ।
१९ । २४ । २८ । ३१ । ३६ । ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि । ०६ ॥ ७१ अथसांकृतयोगः ॥ बद्रिकारण्यनिकटेशूद्रोनाम
जरद्भवः ॥ परमोदारोतुलश्चपापकर्मविवार्जितः ॥ ३०३ ॥ ब्राह्मणानांकृतासेवाह्यन्नदानंतथाकरोत् ॥ गयाश्राद्धंप्रयागेचमकरेभ्युदिते
रवौ ॥ ३०४ ॥ सर्वस्वंब्राह्मणेदत्त्वाहारिद्वारेतथागतः ॥ तत्राकार्षीद्विष्णुपूजांनित्यंगंगाम्भसाद्विज ॥ ३०५ ॥ एवंगतेतुवयसिवृद्धे
सतिद्विजोत्तम ॥ गंगाजलेमृतः सोपिवैकुंठेभवनेगतः ॥ षष्टिवर्षसहस्रांतेवैकुंठांदागतःसच ॥ ३०६ ॥ १ । ५ १० ।
१५ । २० । २५ । २९ । ३३ । ३८ । ४१ । ४५ । ४९ । ६० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ११५ ॥ ७२ अथसुरपूजकयोगः ॥ जगन्ना
थस्यनिकटेब्राह्मणोन्यवसत्पुरा ॥ इंद्रसेनिरितिख्यातः पत्नीतस्यातिकर्कशा ॥ ३०७ ॥ प्रत्यहंद्वंद्वकर्त्रीसातृणवन्मन्यतेपतिम् ॥ ब्राह्म
णोपिदुराचारीपरस्त्रीरतिलम्पटः ॥ ३०८ ॥ असत्कर्मणिसदानिष्ठः परनिंदापरायणः ॥ ब्राह्मणस्यहृतंवित्तंतेननानाछलैरपि ॥ ३०९ ॥
प्राप्तेवार्द्धक्यसमयेसम्रृतः कालचोदितः ॥ भुक्त्वानानाविधान्भोगान्नरकेभृशदारुणे ॥ ततोवैमानुषोजातः कष्टेनातिसमन्वितः ॥ ३१० ॥
१ । ४ । ८ । १२ । १९ । २२ । २९ । ३१ । ३६ । ४०वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९७ ॥ ७३ अथहुताशनयोगः ॥ अयो
ध्यापश्चिमेभागेबाहुजश्चपराक्रमी ॥ शिवनेत्रइतिख्यातःपत्नीतस्यमनोरमा ॥ ३११ ॥ कृतानितेनपुण्यानिपर्वस्वपिविशेषतः ॥
दम्पतीचगतौतीर्थंकृत्वाधर्मनिरंतरम् ॥ ३१२ ॥ स्वगृहेपुनरागत्यहर्षगद्गदमानसः ॥ ब्राह्मणायददौदानंगोभूम्यश्वहिरण्यकम् ॥
॥ ३१३ ॥ कन्योद्वाहंतथाकृत्वागोशालाश्चद्विजगृहम् ॥ एवंस्वल्पेगतेकालेबाहुजःपंचतांगतः ॥ देवलोकेऽभवत्प्राप्तोबहुवर्षसहस्रकम् ॥

॥ ३१४ ॥ ततोवैमानुषोजातः सर्वसौख्यसमन्वितः ॥ स्वंगःशुद्धः सुभक्तश्चस्वप्रतापीजनेश्वरः ॥ ३१५ ॥ १ । ३ । ७ । ११ । १६ । २१ । २४ । २९ । ३३ । ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९८ ॥ ७४ अथहनुमान्योगः ॥ अथ केदारनिकटेशूद्रोनामदिनेश्वरः ॥ पत्नीसत्यवतीतस्यपातिव्रत्यपरायणा ॥ ३१६ ॥ विक्रीयतुफलंपत्रंप्रचुरंद्रव्यमाप्तवान् ॥ देवात्पत्नीमृतातस्यशोकाकुलितमानसः ॥ ३१७ ॥ स्वगृहंचपरित्यज्यजगामगिरिगह्वरे ॥ तपस्यंतेमृतः सोपिपुनरागत्यभूतले ॥ ॥ ३१८ ॥ १ । ७ । ९ । १५ । २१ । २५ । २९ । ३७ । ४७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०२ ॥ ७५ अथहौत्रीयोगः ॥ ऐरावतीनदीतीरेब्राह्मणः शास्त्रकोविदः ॥ चंडक्रोधीह्यनर्थीचस्वात्मार्थेविनियोगिकः ॥ ३१९ ॥ परनिंदारतो नित्यंद्रव्यलोभेचतत्परः ॥ एकस्मिन्समयेविप्रयजमानगृहेगतः ॥ ३२० ॥ नानाछलयुतेनाथतस्यद्रव्यंहृतंद्विज ॥ स्वगृहेपुनरागत्यस मृतःकालचोदितः ॥ पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन ॥ ३२१ ॥ २ । ६ । १० । १७ । २५ । २९ । ३४ । ४१ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७१ ॥ ७६ अथहीलार्पियोगः ॥ देशेमरुस्थलेचैवनापितश्चैवधार्मिकः ॥ तस्यपत्नीमहाभ्रष्टापतिवंचनतत्परा ॥ ॥ ३२२ ॥ परपुंसुरतादुष्टाचंचलाकाममोहिता ॥ एकस्मिन्समयेविप्रदृष्ट्वास्वीयांसकोपतः ॥ ३२३ ॥ खड्गेनैवाहनत्तांवैसामृतागद पीडिता ॥ पापमाचारितंतेनस्वगृहंचात्यजत्खलु ॥ ३२४ ॥ तीर्थेतीर्थेह्यटन्सोपिजगन्नाथेमृतस्तदा ॥ सोपियातइन्द्रपुरंषष्टिवर्षसहस्रकम् ॥ पुनरात्यमेदिन्यांमानुषःसुन्दरश्चसः ॥ ३२५ ॥ ४ । ८ । १६ । २४ । ३३ । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७७ ॥ ७७ अथहिंदुमाख्ययोगः ॥ आसीज्जन्मांतरेचैवभीष्मसेनिश्चबाहुजः ॥ आंत्रवेद्येऽवसत्सोपिकिंचिद्भूमिपतिस्तदा ॥ ३२६ ॥ प्रजानां

[illegible]तापजीवहिंसापरायणः ॥ परापवादनिरतोमिथ्याजल्पतिनित्यशः ॥ ३२७ ॥ एकस्मिन्समयेविप्रब्राह्मणस्यप्रसंगतः ॥ शिव
[illegible]संकृत्वागोदानंचसहस्रकम् ॥ ३२८ ॥ तेनपुण्यप्रभावेणपितृलोकंतदागतः ॥ पितृलोकात्समागत्यमेदिन्यांचतथाऽधुना
॥ ३२९ ॥१।८।१६।२४वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ७८ अथहुताशयोगः ॥ मथुरायांवसन्पूर्वंब्राह्मणोग्रामयाचकः ॥ [illegible]
[illegible]नसदाविप्रपरिवारस्यपोषकः ॥ ३३० ॥ पत्नीतस्यमहाभव्यापातिव्रत्यपरायणा ॥ साम्प्रतातत्रभोविप्रशोकतप्तश्चब्राह्मण ॥ ३३१ ॥
[illegible]रक्तोपिबभूवाथतीर्थावगाहनेरतः ॥ तपश्चर्य्यांतथाकृत्वायोगाऽभ्यासंनिरंतरम् ॥ ३३२ ॥ योगमार्गेमृतःसोपिगतोऽसौपरमंपदम् ॥
वर्षाशीतिसहस्रांतेमानुषोऽपिततोऽधुना ॥ ३३३ ॥ गौरश्चचपलोवक्ताधनीमानीगुणेश्वरः ॥ ३३४ ॥ १ । ४ । ६ । ९ । १६ । २० ।
२६ । २९ । ३१ । ३८ । ४१ । ४७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ७९ अथहिंसकयोगः ॥ आंत्रवेद्येऽव
[illegible]नामकुबेरकः ॥ वित्ताढ्यश्चापिशूरश्चसप्रतापीजनेश्वरः ॥ ३३५ ॥ कृतानितेनपुण्यानिमहापर्वणिवैतथा ॥ एक
[illegible]समयेविप्रबाहुजस्यप्रसंगतः ॥ ३३६ ॥ परस्त्रीलोलुपोभूत्वाबहुवर्षगतागतैः ॥ यवनस्यसुताभव्याबलादाकर्षितातदा ॥ ३३७ ॥
[illegible]तिः कृतातस्यांसामृतातुतदाद्विज ॥ मृत्वापिनरकंगत्वाकीटोभूत्वाविहंगमः ॥ ततोवैमानुषीयोनौप्रथमाब्देसकष्टितः ॥ ३३८ ॥
[illegible] । ८ । १२ । २० । २८ । ३१ । ३८ वर्षेषुमहत्कष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ८० अथशिवप्रशंसकयोगः ॥ प्रपंच
[illegible]साधकः शिवस्यभक्तःपरमःपवित्रः ॥ चिंतामणिज्ञःसचबाहुजोपिप्रतापशीलश्चसुधर्मसंचयी ॥ ३३९ ॥ परत्रलोभी
[illegible]नियेविनीतः ॥ तीर्थेषुपुण्यानिकृतानिसम्यग्देवद्विजानांचसुसेवकश्च ॥ ३४० ॥ प्रपंचमान्योजगति

[illegible]कोध्यानसमाधिनिष्ठः ॥ गृहागतोभिक्षुरवज्ञयागतोमत्तोबभूवस्वशरीरदोषात् ॥ ३४१ ॥ अभक्ष्यभक्षा[illegible]
[illegible]कर्ताचबभूवपादजः ॥ वनांतरेमृत्युवशंसमागतःसतेनपापेनहिदिव्यवर्षम् ॥ ततोवैमानुषोजातोधनधान्यसमन्वितः
॥ ३४२ ॥ १।२।६।९।२०।२८।३७।४१।४८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ८१ अथहोता
[illegible]गः ॥ अथकेरातदेशेतुनारदोनामबाहुजः ॥ किंचिद्राज्याधिकरणेसमर्थोपिबभूवह ॥ ३४३ ॥ उग्रदंडःप्रतापीचकुशलःसर्व
कर्मणि ॥ एकस्मिन्समयेविप्रकृतंकर्मातिदारुणम् ॥ ३४४ ॥ बाहुजस्यविशालाक्षीपुत्रीगुणवतीशुभा ॥ बलादाकर्षितातस्यांकृत्वासुर
तसंगमम् ॥ ३४५ ॥ मृतोवैनरकंप्राप्तःपुण्यात्स्वर्गंतथानघ ॥ षष्टिवर्षसहस्रांतेपुनरागत्यभूतले ॥ ३४६ ॥ १।४।६।८।१२।
१६।२२।२९।३०।३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८५ ॥ ८२ अथहर्म्याख्ययोगः ॥ चम्पकारण्यनिकटेब्राह्मणो
पितपोधनः ॥ परमोदारश्चसुज्ञश्चब्रह्मचर्य्यपरायणः ॥ ३४७ ॥ सत्यधर्मार्चनेव्यग्रईश्वरस्यस्मृत्यसौ ॥ एकस्मिन्समयेविप्रतीर्थ
यात्राकृताश्रमम् ॥ ३४८ ॥ अवन्तीनगरीश्रेष्ठातत्रवैब्राह्मणोऽवसत् ॥ तस्यकन्यामहागौरायथाकामस्यचांगना ॥ ३४९ ॥ बला
दाकर्षितातस्यांकृत्वासुरतसंगमम् ॥ लोकनिन्दाभयेनाथब्रह्मचारीमृतस्तदा ॥ पापात्पापफलंभुक्त्वापुनरागत्यभूतले ॥ ३५० ॥
१।५।१०।१७।२६।३३।३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८७ ॥ ८३ अथहार्दिक्ययोगः ॥ समुद्रस्यातिनिकटे
[illegible]वसत् ॥ चक्रपाणिरितिख्यातोब्राह्मणःशास्त्रकोविदः ॥ ३५१ ॥ हंसराजिस्तस्यपत्नीपातिव्रत्यपरायणा ॥ धर्मकर्मणि
[illegible]दृढः ॥ ३५२ ॥ एकस्मिन्समयेविप्रसोमयज्ञस्तदाकृतः ॥ आहूयब्राह्मणाःसर्वेसत्कृताबहुशस्तदा ॥ ३५३ ॥

दक्षिणारजतंस्वर्णदत्तंदानंचतेनवै ॥ एकाक्षोपिद्विजस्तत्रतस्मैकिंचिन्नदत्तवान् ॥ ३५४ ॥ सविप्रश्चातिक्रोधेनशापंदत्त्वाचदुष्करम् ॥ 
किंचित्कालांतरेचैवदैवात्सपंचतांगतः ॥ ३५५ ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गंतथाऽनघ ॥ पुनरागत्यमेदिन्यांसुखदुः
खसमाकुलः ॥ ३५६ ॥ १ । ४ । ७ । १२ । २७ । ३० । ३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७३ ॥ ८४ अथसंशययोगः ॥
अथकालिंजरेदेशेबाहुजोपिमनोरथः ॥ कृत्वाराज्यंविशेषेणसहसैन्येनभोःसुत ॥ ३५७ ॥ अदंड्यादंडितास्तेनह्यगम्यागमनंकृतम् ॥
तत्पापान्नरकेगत्वापुनर्जन्मशतैरपि ॥ ३५८ ॥ भूमौवैमानुषोजातःपाखंडाचरणेरतः ॥ द्रव्यस्योत्पादनेनिष्ठोवंचकःखलुसंचयी ॥
॥ ३५९ ॥ १ । ३ । ११ । १५ । १९ । २४ । २७ । ३६ । ४१ । ४७ । ५० । ५५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०७ ॥ ८५ अथ
हरतियोगः ॥ कलिंगदेशेऽवसत्सोपिबाहुजःसर्वपूजकः ॥ शिवरामइतिख्यातःपत्नीतस्यचसुव्रता ॥ ३६० ॥ किंचिद्भूमिपतिस्तत्रचोग्र
दंडःप्रतापवान् ॥ देशाटनंकृतंसम्यग्द्रव्यस्योत्पादनंकृतम् ॥ ३६१ ॥ स्वदेशेपुनरागत्यहठाद्दृढमानसः ॥ स्वज्ञातिवनितायांवैव्यभि
चारंतथाऽकरोत् ॥ ३६२ ॥ एकस्मिन्समयेविप्रतीर्थयात्राकृताचवै ॥ आयुषस्तुसमाप्तित्वात्सम्रृतःकालचोदितः ॥ ३६३ ॥ पापात्पा
पफलंभुक्त्वापुण्यात्स्वर्गंतथाऽनघ ॥ पुनरागत्यमेदिन्यांराजरोगेणकष्टितः ॥ ३६४ ॥ १ । ३ । ६ । ११ । १३ । १८ । २२ । २८ ।
३५ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८८ ॥ ८६ अथशौरिकयोगः ॥ वंगदेशेऽवसत्पूर्वंकेवलोनामपादजः ॥ बहुग्रामाधिकारीचहिंसा
कर्मविमोहितः ॥ ३६५ ॥ परसंतापदाताचसव्ययीपापभागसौ ॥ एकस्मिन्समयेविप्रशिवालयंविनिर्मितम् ॥ ३६६ ॥ ब्राह्मणाभो
जिताःसम्यक्कन्योद्वाहंतथाऽकरोत् ॥ नानाविलासविभवैःसर्वानंदमयःसदा ॥ ३६७ ॥ आयुषस्तुसमाप्तित्वात्सम्रृतःकालचोदितः ॥ 

पुनरागत्यमेदिन्यांकष्टेनातिप्रपीडितः ॥ ३६८ ॥ १।४।६।१२।१८।२२।२९।३२ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥
८७ अथशोनभद्रयोगः ॥ कुक्कुटेनगरेपूर्वेगंधर्वोनामब्राह्मणः ॥ ब्रह्मकर्मपरिभ्रष्टोमद्यमांसेनजीवति ॥ २६९ ॥ कृतानिबहुपापानि
सर्वकालेद्विजोत्तम ॥ एकस्मिन्समयेविप्रदैवाद्गंगातटेगतः ॥ २७० ॥ सन्नातस्तत्रवैमृत्युर्बभूवद्विजसत्तम ॥ पापाच्चनरकेगत्वाकीटयोनौ
विहंगमः ॥ २७१ ॥ गंगास्नानस्यपुण्याद्विस्वर्गेस्थित्वातदानघ ॥ बहुवर्षसहस्रांतेमानुषोपितथाधुना ॥ २७२ ॥ २।६।१०।
१७।२२।२८।३१।३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८१ ॥ ८७ अथसाराख्ययोगः ॥ गुर्जरेनगरेपूर्वेयशोदानंदबाहुजः ॥
सहसैन्येनराज्येनशूरश्चातिपराक्रमी ॥ २७३ ॥ एकस्मिन्समयेविप्रसहसैन्येनबाहुजः ॥ गतस्त्वारिपुरंतत्रकृत्वायुद्धंपरस्परम् ॥ २७४॥
घातितःसोपिबहुभिःप्रहारैरतिदारुणैः ॥ सप्तवासरपर्य्यंतंजित्वाशत्रुबलंबलात् ॥ २७५ ॥ तत्पुरंलुंठितंतेनद्रव्यलोभेनत्वद्विज ॥
तत्पुरंनाशितंतेनभस्मीभूताश्चधेनवः ॥ २७६ ॥ स्वदेशेपुनरागत्यसमृतःकालचोदितः ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गंतथाऽनघ ॥
पुनरागत्यमेदिन्यांप्रथमाब्देसकष्टितः ॥ २७७ ॥ १।३।८।१४।२१।२६।३०।३७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥
८९ अथ सुरपोषकयोगः ॥ कीकटेनगरेपूर्वेपादजस्यकुलेतदा ॥ बहुद्रव्यान्वितःसोपिपुण्यमार्गपरायणः ॥ २७८ ॥ तीर्थावगाहनेनिष्ठः
सत्पात्रायददौधनम् ॥ तीर्थेतीर्थेकृतासेवाऋषीणांचपुनःपुनः ॥ २७९ ॥ एकस्मिन्समयेविप्रसर्वस्वंब्राह्मणेददौ ॥ सत्पात्रायविधिज्ञा
यश्रद्धायुक्तेनचेतसा ॥ २८० ॥ कालेयातेसहर्षेणगयायांचमृतःसवै ॥ ततोवैमानुषोजातःपूर्वपुण्यप्रभावतः ॥ २८१ ॥ ३।९।१६।२०
२४।२९।३३।३७।४१।४९।५१।५४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ९९ ॥ ९० अथसचीकरयोगः ॥ इंद्रप्रस्थपुरेरम्येलोह

कारीयदाचनी ॥ चुनीदासःसमाख्यातःपत्नीपुत्रसमन्वितः ॥ २८२ ॥ स्वकर्मनिरतोधीरःपुण्यमार्गपरायणः ॥ वापीकूपांश्चनिर्मा
सान्नोसर्वंतथाऽकरोत् ॥ २८३ ॥ अन्नदानंकृतंतेनबभूवसुरुजःसच ॥ वैश्ययोर्निपरित्यज्यबभूवबाहुजःपुनः ॥ इदंजन्मचतुर्थंतुसर्व
सौख्येसमन्वितः ॥ २८४ ॥ १ । २ । ४ । ८ । १२ । १६ । २० । २७ । ३१ । ३६ । ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥ ९१
अथसौख्ययोगः ॥ विराटनगरेचैवब्राह्मणःपूर्वजन्मनि ॥ गोवर्द्धनःसमाख्यातःपत्नीद्वयसमन्वितः ॥ २८५ ॥ विद्याविलासीसततमर्थं
कान्पाठयेत्ततः ॥ विद्यार्थीवैस्वशिष्यश्चलगुडेनप्रताडितः ॥ समृतस्तेनदुःखेनपापमाचरितंत्विदम् ॥ २८६ ॥ गोपतिंचस्मरंतेनबटुका
लगलागतेः ॥ आयुषस्तुसमाप्तित्वात्समृतःकालचोदितः ॥ २८७ ॥ पापात्पापफलंभुक्त्वापुण्यात्स्वर्गंतथाऽनघ ॥ नानायोनौभ्रम
त्सोपितितोभूत्वाचमानुषः ॥ २८८ ॥ १ । ३ । ८ । १२ । १७ । २० । २८ । ३१वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०७ ॥ ९२ अथसंहारयोगः
अथचंद्रावतीतीरेब्राह्मणःशास्त्रकोविदः ॥ देवशर्माइतिख्यातःपत्नीतस्यमनोहरा ॥ २८९ ॥ धर्मशास्त्रेचमत्कारीपठनेपाठनेरतः ॥
एकस्मिन्समयेविप्रदेशेचदक्षिणेगतः ॥ द्रव्यस्योत्पादनंकृत्वास्वगेहेपुनरागतः ॥ २९० ॥ सन्मार्गेचव्ययंकृत्वाकन्योद्वाहंतथा
कृतम् ॥ भ्रातृभागोहतस्तेनपापमाचरितंत्विदम् ॥ २९१ ॥ समृतःसरयूतीरेगतइन्द्रपुरंप्रति ॥ इन्द्रलोकात्परिभ्रष्टश्चागतोधरणी
तले ॥ २९२ ॥ १ । ३ । ६ । ९ । १३ । १७ । २४ । २६ । ३० । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६९ ॥ ९३ अथसरस
योगः ॥ गौरीकुमारिकाखण्डेबाहुजःपूर्वजन्मनि ॥ हृदयेतिसमाख्यातःपत्नीद्वययुतस्तदा ॥ २९३ ॥ कृतानितेनधर्म्याणिमर्त्ये
[illegible] ॥ [illegible]दानोर्तिद्रव्यंपादजस्यतदानघ ॥ २९४ ॥ गोपतिंचस्मरंतेनसमृतोवरुणातटे ॥ पापात्पापफलंभुक्त्वापुण्या

[illegible]तथा ॥ ततोवमानुषोजातोधनधान्यसमन्वितः ॥ ३९५ ॥ २ । ४ । ८ । १२ । १८ । २३ । २८ । ३० । ३४ । ३७ । ३९ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०० ॥ ९४ अथसाधकयोगः ॥ जयंतदेशेन्यवसत्पुराजनोप्रवृत्तिर्हिंसाद्यतिमोहतत्परः ॥ क्रूरा[illegible] परदारगामीद्यूतेनमार्गेणतुद्रव्यसंग्रहः ॥ ३९६ ॥ एकस्मिन्समयेविप्रगयाश्राद्धमथाकरोत् ॥ दत्तानितत्रदानानिकाम्यप्राधानिकानिच ॥ ३९७ ॥ संप्राप्यभवनेशीघ्रंकृतंकर्मसुदारुणम् ॥ सगोत्रायांहठात्पापंकृतंतेनतदानघ ॥ ३९८ ॥ तत्पापान्नरकेगत्वा [illegible]वनान्तरे ॥ नानाजन्मानिभूत्वापिततोवैमानुषोऽधुना ॥ ३९९ ॥ १ । ३ । ६ । ९ । १७ । २० । २५ । ३० । ३६ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६५ ॥ ९५ अथसेकरयोगः ॥ आसीज्जन्मांतरेचैवब्राह्मणःशास्त्रवर्जितः ॥ चूडामणिःसमाख्यातःपत्नीतस्य हुताशनी ॥ ४०० ॥ देशेपाञ्चालकेचैवन्यवसत्परिवारयुक् ॥ चंचलश्चातिमलिनोधूर्त्तविद्यापरायणः ॥ ४०१ ॥ एकस्मिन्समये विप्रकृतंकर्मजुगुप्सितम् ॥ स्वगोत्रार्थंतदाविप्रमिथ्याशपथमाचरत् ॥ ४०२ ॥ तेनपापानुसारेणगतोसौयमलोककम् ॥ यमलोकात्परिभ्रष्टश्चागतोधरणीतले ॥ तृष्णालोभसमासक्तःप्रथमाब्देसकष्टितः ॥ ४०३ ॥ ४ । ९ । १३ । १८ । २२ । २७ । ३१ । ३५ । ३८ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८० ॥ ९६ अथसरयूयोगः ॥ पूर्वजन्मांतरेचैवपादजोयमुनातटे ॥ भास्करेतिसमाख्यातः पत्नीपुत्रसमन्वितः ॥ ४०४ ॥ शिवस्यस्मरणेनिष्ठोब्रह्मभक्तिपरोदृढः ॥ कृतानितेनधर्म्याणिपरोपकरणंतथा ॥ ४०५ ॥ [illegible]द्विजायच ॥ नानामनोरथैर्युक्तःशिवस्योद्यापनंकृतम् ॥ ४०६ ॥ आयुषस्तुसमाप्तित्वात्सशूद्रःपंचतांगतः ॥ [illegible]गतोभूमिमण्डले ॥ ४०७ ॥ १ । २ । ४ । ८ । १३ । १८ । २० । २८ । ३३ । ३८ । ४० वर्षेषुकष्टम् ॥

परमायुर्वर्षाणि ५८ ॥ ९७ अथशेवयायोगः ॥ पूर्वंपयस्विनीतीरेचित्रनामाचब्राह्मणः ॥ सर्वसम्पद्युतोमानीबहुशास्त्रैश्चशोभितः ॥
॥ ४०८ ॥ मन्त्रविद्याविवेकीचलोभाकुलितमानसः ॥ धनंहृतंचशिष्यस्यनदत्तंमोहकारणात् ॥ ४०९ ॥ सर्वसंग्रहकर्ताचं
नदानंनद्विजार्पणम् ॥ एवंनिवसतस्तत्रबहुवर्षगतागतैः ॥ ४१० ॥ सविप्रःपञ्चतांप्राप्तःससहायोद्विजोत्तमः ॥ शतजन्मोत्तरेविप्र
मानुषत्वंगतोऽधुना ॥ ४११ ॥ १ । ३ । ६ । ८ । १२ । १६ । २० । २४ । २९ । ३३ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७७ ॥
९८ अथशैवीयोगः ॥ क्षिप्रानद्याश्चनिकटेपूर्वजन्मनिबाहुजः ॥ कृतानितेनपापानिबहुवर्षगतागतैः ॥ ४१२ ॥ कदाचित्तीर्थ
यात्रायांसर्वस्वंब्राह्मणेददौ ॥ तेनपुण्यप्रभावेणस्वर्गेगत्वाचबाहुजः ॥ ४१३ ॥ पुनरागत्यमेदिन्यांसर्वसौख्येनसंयुतः ॥ तीक्ष्णबुद्धिः
प्रवक्ताचकन्यापुत्रसमन्वितः ॥४१४॥ षोडशेऽब्देगतेचैवभाग्यस्यास्योदयोभवेत् ॥ दक्षिणांगेतथावामेलांछनंतिलमाषयोः ॥ ४१५ ॥
१ । ३ । ५।७।१०।१४।१८।२४ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि६७॥९९ अथसाधनीयोगः ॥ देशेहिचोत्कलेपूर्वबाहुजःसुखसंयुतः ॥ गोवि
प्राश्चतथादेवाःस्वर्चितास्तेननित्यशः॥४१६॥क्षात्रधर्मेसनिष्ठश्चपरमोदारवत्सलः ॥ एकस्मिन्समयेविप्रभाविनोर्थस्यगौरवात् ॥ ४१७ ॥
गोत्रक्षेत्रंहृतंतेनमिथ्यावादेनवैबलात् ॥ तत्फपान्नरकेगत्वाह्यपिवर्षसहस्रकम् ॥४१८॥ कीटभृंगविहंगानांयोनीर्भुक्त्वाकथंचन ॥ ततोवैमातु
षोजातोमर्त्यलोकेतथाधुना ॥ ४१९ ॥ १ । ३ । ५ । ८ । ११ । १६ । २० । २८ । ३६ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७० ॥
१०० अथसहसारूढयोगः ॥ योजातःसहसायोगेपूर्वजन्मनिब्राह्मणः ॥ इंद्रजीतइतिख्यातः पत्नीतस्यमनोरमा ॥ ४२० ॥ पतिसेवार 
ताशुभ्राधनधान्यसमन्विता ॥ ऐरावतस्यनिकटेन्यवसत्पूर्वजन्मनि ॥ ४२१ ॥ एकस्मिन्समयेविप्रकृतंकर्मसुदारुणम् ॥ ब्राह्मणस्यगृहंहर

म्यर्चार्पितंनूतनंद्विज ॥ ४२२ ॥ वैरभावेनभोविप्रदाह्नितंचतदाद्विज ॥ पापमाचरितंतेनपश्चात्तुगोपितंतदा ॥ ४२३ ॥ कालान्तरे मृतः
सोऽपिगतोऽ सौयमशासनम् ॥ षष्टिवर्षसहस्राणिभुक्त्वानरकजंफलम् ॥ ४२४ ॥ तिर्यग्योनिशतंभुक्त्वामर्त्यलोकेपुनःपुनः ॥ पश्चाद्वैमा
नुषीयोनौचंचलश्चारुलोचनः ॥ ४२५ ॥ मातापितृवियोगीचपरदारेषुतत्परः ॥ नाशितंचकुलंतेनप्रथमाब्देसुकष्टितः ॥ ४२६ ॥ द्वित्रि
वर्षांतरेसौख्यंचतुर्थेगदपीडितः ॥ षष्ठेवासप्तमेवर्षेशीतलाज्वरसम्भवः ॥ ४२७ ॥ नवमेब्देहिदशमेपीडाभवतिदारुणा ॥ द्वादशेविंशकेव
र्षेस्वल्पंकष्टंप्रजायते ॥ ४२८ ॥ चतुर्दशेपंचदशेजलभीतिःप्रजायते ॥ द्वाविंशत्यब्देभोमित्रह्यल्पमृत्युर्भविष्यति ॥ ४२९ ॥ यदिमृत्यु
र्निवर्तेततदाऽऽयुःपंचषष्टिकम् ॥ श्रावणेधवलेपक्षेह्यष्टम्यांनिधनंभवेत् ॥ ४३० ॥ १०१ अथसंस्कृतयोगः ॥ मध्यदेशेऽवसत्सोऽपिगंगा
याश्चोत्तरेतटे ॥ अरिमर्दनः समाख्यातः पत्नीतस्यकलेवरी ॥ ४३१ ॥ वैश्योनामप्रदेवश्चब्राह्मणानांचसेवकः ॥ धर्माश्रितोगुणग्रामः
पुण्यारण्यविहारवान् ॥ ४३२ ॥ दैवात्पत्नीमृतातस्यकामलोभेनविह्वलः ॥ तस्मिन्ग्रामेऽवसच्छूद्रस्तस्यकन्यावराङ्गना ॥ ४३३ ॥
बलादाकर्षितासातुगृहेचस्थापितातदा ॥ एवंबहौगतेकालेसमृतःकालचोदितः ॥ ४३४ ॥ पापात्पापफलंभुक्त्वायोनिंभुक्त्वाकथंचन ॥
ततोवैमानुषोजातःपूर्वपुण्यप्रभावतः ॥ ४३५ ॥ २ । ४ । ६ । ९ । १७ । २५ । ३१ । ३७ । ४० । ४५ । वर्षे
षुकष्टम् ॥ परमायुर्वर्षाणि ९५ ॥ १०२ अथसोमनाथयोगः ॥ सोमनाथेचयोजातःपूर्वजन्मनितैलिकः ॥ तैलचौर्यंकृतंतेन
चात्राऽसौदुष्टगन्धवान् ॥ ४३६ ॥ भार्यासुतसुखैर्हीनःपीडितःसर्वदारुजा ॥ प्राप्तेत्रिंशत्तमेवर्षेमरणंतुसुनिश्चितम् ॥ ४३७ ॥
१०३ अथसारावलीयोगः ॥ सारावल्यांचयोजातः सोऽभूत्पूर्वंतुबाहुजः ॥ आखेटकेजीवगणार्हिंसितास्तेनवैमुदा ॥ ४३८ ॥

